जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥' इति । एतच्च दैनं सृष्टिप्रलयाभिप्रायकं, महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥

जगद्योनिरयोनिस्त्वं जगदन्तो[1] निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो[2] निरीश्वरः ॥ ९ ॥

जगदिति ॥ हे भगवन्, त्वं जगद्योनिर्जगत्कारणं स्वयमयोनिरनादित्व कारणकस्त्वम् । अन्तयतीत्यन्तः । पचाद्यच् । जगतोऽन्तर्जगत्संहर्ता स्वयं न्तको नित्यत्वादन्तरहितः । त्वं जगतामादिर्जगदादिः । सृष्टेः प्रागपि सन्नित्यर्थ अतएव त्वमनादिरादिरहितः । त्वं जगतामीशो नियन्ता स्वयं निरीश्वर अनियम्य इत्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतिरेव प्रमाणम् । अत्रायोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः । बहुव्रीहिणा तत्परिहार इति विरोधाभासालंकारः । यथाहुः—'विरोधे तु विरोधाभासः' इति

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह—

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥

आत्मानमिति ॥ हे भगवन्, त्वमात्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पि पादयिषितं स्वस्वरूपमात्मनैव वेत्सि जानासि । सर्वापि क्रिया कर्तव्यार्थज्ञा पूर्विकेति भावः । तथात्मानमात्मनैव । आत्मन्येवेत्यत्रापि संबध्यते । स्वस्मिन्न सृजसि । अधिष्ठानमपि स्वयमेवेत्यर्थः । 'स्वे महिम्नि प्रतिष्ठितम्' इति श्रुतेः कृतिना समर्थेन । इदं सर्वत्र संबध्यते । आत्मना स्वेनैवात्मन्येव प्रलीय स्वस्मिन्नेव प्रलीनो भवसि । लीयतेर्दैवादिकात्कर्तरि लट् । 'प्रकृत्यादिभ्य उ संख्यानम्' इति वार्तिकात्सर्वत्रात्मनेति तृतीया । न हि ते प्रपञ्चस्येव ज्ञानो त्पत्तिलयेषु परापेक्षेति फलितार्थः ॥

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः[3] ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥

द्रव्य इति ॥ त्वमित्यनुषज्यते । हे भगवन्, त्वं द्रवः सरित्समुद्रादिवद्रस त्मकोऽसि । संघातेन निबिडसंयोगेन कठिनो महीधरादिवत् । स्थूल इन्द्रिय ग्रहणयोग्यो घटादिवत् । सूक्ष्मोऽतीन्द्रियः परमाण्वादिवत् । लघुरुत्पतनयो ग्यस्तूलादिवत् । गुरुर्हेमाद्रिवदचलनीयः । व्यक्तः कार्यरूपोऽसि । व्यक्तेतर कारणरूपश्चासि । एवं विभूतिष्वणिमादिषु ते तव । प्रकामस्य भावः प्राकाम्य यथाकामत्वम् ॥

उद्घातः[4] प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।

---

१ अनन्तो जगदन्तकः; जगदन्तोऽप्यनन्तकः. २ जगदीशोऽप्यनीश्वरः. ३ गुरु लघुः. ४ उद्गीथः.

कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥

उद्धात इति ॥ हे भगवन्, यासां गिरां वाचामुद्धात उपक्रमः प्रणव ओंकारात्मकः । 'ओंकारप्रणवौ समौ' इति । 'स्यादभ्यादानमुद्धात आरम्भः' इति चामरः । इदमुपसंहारस्याप्युपलक्षणम् । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः । दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥' इति निरुक्तपरिशिष्टोक्तेः । नीयन्त एभिरर्थविशेषा इति न्यायाः स्वराः । उक्तं च—'स्वरविशेषादर्थप्रतिपत्तिः' इति । 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति । यासां गिरां अभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वैरुदीरणमुच्चारणम् । यासां कर्म प्रतिपाद्यमित्यर्थः । यज्ञो ज्योतिष्टोमादिः न तु चैत्यवन्दनादिरिति भावः । फलं स्वर्गः । कर्मद्वारेति शेषः । कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे । त्वं तासां गिराम् । वेदानामित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । प्रणेता कर्ता वा मतभेदेन ॥

सांख्यमतेन स्तुवन्ति—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥

त्वामिति ॥ हे भगवन्, त्वां पुरुषस्यार्थो भोगापवर्गरूपस्तदर्थं प्रवर्तत इति पुरुषार्थप्रवर्तिनी तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम् । 'प्रकृतिः पञ्चभूतेषु प्रधानं मूलकारणम्' इति यादवः । आमनन्ति कथयन्ति । 'म्ना अभ्यासे' इति धातोर्लट् । 'पाघ्राध्मास्थाम्ना–' इत्यादिना मनादेशः । प्रकृतिपुरुषभेदाग्रहणात्प्रकृतिपुरुषाभेदव्यपदेशः । त्वामेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनमुदासीनं कूटस्थं पुरुषं विदुर्विदन्ति । 'विदो लटो वा' इति झेर्जुसादेशः । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिरत्र प्रमाणम् ॥

त्वं पितॄणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥

त्वमिति ॥ हे भगवन्, त्वं पितॄणामग्निष्वात्तादीनामपि पिता । तेषामपि तर्पणीय इत्यर्थः । देवानामिन्द्रादीनामपि देवता । तेषामपि यजनीय इत्यर्थः । परतोऽपि परश्चासि । सर्वोत्तरोऽसीत्यर्थः । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति सर्वोत्तरत्वाभिधानात् । वेधसां दक्षादीनामपि विधाता स्रष्टासि ॥

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।
[1]वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥ १५ ॥

---

१ वेद्यं वेदयिता; वेद्यश्च वेदिता.

त्वमेवेति ॥ शश्वत्सिद्धः शाश्वतः । शैषिकोऽण्प्रत्ययः । यद्यपि 'काल इति ठञपवादः । अतएव सूत्रकारस्यापि प्रयोगः—येषां च विरोधः शाश्व इति । तथापि प्रयोगवशात्साधुरिति वामन इति । शाश्वतः शश्वत् शाश्वतस्त्वमेव । हूयत इति हव्यं हविराज्यादिकम् । जुहोतीति यजमानश्चासि । भोज्यमभ्यवहार्यमन्नम् । 'भोज्यं भक्ष्ये' इति निपातना भावः । भोक्तान्नादश्चासि । वेद्यं साक्षात्कार्यं वस्तु वेदिता साक्षात्कर्ता च ध्याता स्मर्ता च । यत्परं वस्तु ध्येयं तच्चासि । साक्षात्कारसाधनभूतप्रत्य शेषप्रवाहो ध्यानम् ॥

इति तेभ्यः स्तुतीः श्रुत्वा यथार्था[1] हृदयंगमाः ।
प्रसादाभिमुखो वेधाः[2] प्रत्युवाच दिवौकसः ॥ १६ ॥

इतीति ॥ वेधा ब्रह्मेति तेभ्यो देवेभ्यः । 'आख्यातोपयोगे' इत्यपा त्वात्पञ्चमी । यथार्थाः सत्या अतएव हृदयं गच्छन्तीति हृदयंगमा मनोह खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य इति मुमागमः । स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः स दिवौकसो देवान्प्रत्युवाच ॥

अथ कविराह—

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥

पुराणस्येति ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या चतुष्टयी चतुर्विधा । 'संख्याया अवयवे तयप्' इति तयप् । 'टिड्ढाण यसच्–' इत्यादिना ङीप् । शब्दानां प्रवृत्तिर्वैखरीप्रमुखा वाग्वृत्तिः । उक्तं च 'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्म वागनपायिनी ॥' इति । पुराणस्य पुरातनस्य । पृषोदरादित्वात्साधुः । क कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समीरिता सती । 'तद्धितार्थ–' इत्यादि त्तरपदसमासः । समाहारे चतुर्मुखीति स्यात् । चरितार्थान्वर्थासीत् । चतुर्मुख च्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥

भगवानाह—

स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ १८ ॥

स्वागतमिति ॥ हे प्राज्यविक्रमाः प्रभूतपराक्रमा देवाः । 'प्राज्यं भू प्रभूतं च' इति यादवः । स्वान्स्वकीयानधीकारान्नियोगान् । 'उपसर्गस्य घञि इति वा दीर्घः । प्रभावैः सामर्थ्यैरवलम्ब्यास्थाय । यथाधिकारं स्थित्वापीत्यर्थः

१ यथार्थ. २ ब्रह्मा.

ुगपत्समकालं प्राप्तेभ्यः । युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः । ुगबाहुभ्यः । दीर्घबाहुभ्य इत्यर्थः । आजानुबाहुत्वं भाग्यलक्षणम् । वो ुष्मभ्यम् । 'बहुवचनस्य वस्नसौ' इति वसादेशः । 'कर्मणा यमभिप्रैति–' ्त्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदानत्वम् । स्वागतं शोभनमागमनम् । ाकुरत्रानुसंधेया ॥

किमिदं[1] द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रकाशानि[2] ज्योतींपीव मुखानि वः ॥ १९ ॥

किमिति ॥ 'वत्साः' इत्युत्तरश्लोकीय (२।२८) संबोधनमत्राप्यनुषञ्ज- ्नीयम् । हे वत्साः पुत्रकाः, हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव । 'दीप्तितारा हुताशेषु ज्योतिः' इति शाश्वतः । वो युष्माकं मुखानि पुरा यथा पूर्वमिवात्मीयां द्युतिं न बिभ्रति । इदं किम् । किंनिबन्धन- मित्यर्थः । किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

प्रशमादर्चिषामेतदनुद्गीर्ण[3]सुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठितास्त्रीव[4] लक्ष्यते ॥ २० ॥

प्रशमादिति ॥ अर्चिषां तेजसां प्रशमान्निर्वाणादनुद्गीर्णसुरायुधम् । अनुदि- तचित्रप्रभमित्यर्थः । एतद्वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रम् । कुण्ठिता आश्रयो ्यस्य तत्कुण्ठितास्त्रि कुण्ठितकोटीव लक्ष्यते दृश्यते ॥

किं चायमरि[5]दुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥

किं चेति ॥ किं चायमरिदुर्वारो रिपुदुष्प्रधर्षः प्रचेतसो वरुणस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । पाणौ पाशो रज्जुरायुधविशेषः । मन्त्रेण गारुडेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वमाश्रितः । अत्र फणिनिष्ठदैन्यस्य पाशेऽसंभवाद्दैन्यमिव दैन्यमिति कल्पनादसंभवद्वस्तुसंबन्धो निदर्शनालंकारः ॥

कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥

कुबेरस्येति ॥ अपविद्धा त्यक्ता गदा येन सोऽपविद्धगदः । अतएव भग्नशाखो द्रुम इव स्थितः कुबेरस्य बाहुर्मनःशल्यम् । दुःखहेतुत्वान्मनसः शल्यप्रायत्वमि- त्यर्थः । पराभवम् । शत्रुकृतमिति शेषः । शंसतीव कथयतीव । लक्षणयानुमा- पयतीत्यर्थः । बाहौ मुख्यकथनस्यासंभवादिवशब्दोऽप्यत एव ॥

---

१ इमाम्; इति. २ प्रभावानि. ३ अनुदूर्ण; अनुगूर्ण. ४ कुण्ठितश्रीव- ५ अपि.

यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥

यम इति ॥ अस्तं नाशमिताः प्राप्ताः । अस्तमिति मकारान्तमव्ययम् । 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः । अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन्नमोघेऽपि । प्राग्विति भावः । अस्मिन्दण्डे निर्वाणालातस्य शान्तोल्मुकस्य । अलातं नाम भूले शलाका तस्य यल्लाघवं क्लैब्यं तत्कुरुते । 'अलातमुल्मुकं ज्ञेयम्' इति हलायुधः । 'निर्वाणोऽवाते' इति निपातनान्निष्ठानत्वम् । अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः ॥

अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥

अमी इति ॥ प्रतापक्षत्या तेजसां क्षयेण शीतला अमी आदित्याश्च । द्र शेति शेषः । कथम् । केन हेतुनेत्यर्थः । चित्रन्यस्ताश्चित्रलिखिता इव । प्रकाम त्यन्तमालोकनीयतां दृश्यतां गताः प्राप्ताः ॥

पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥

पर्याकुलेति ॥ मरुतां वायूनाम् । सप्तसप्तानामिति शेषः । पर्याकुल स्खलितगतित्वाद्धेतोर्वेगस्य भङ्गोऽम्भसां जलानां प्रतीपगमनात् । उत्तानाव हादित्यर्थः । ओघस्य संरोधः प्रवाहप्रतिबन्ध इवानुमीयते ॥

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुंकारशंसिनः ॥ २६ ॥

आवर्जितेति ॥ आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटा टेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः । रुद्रा मपि । एकादशानामिति शेषः । मूर्धानः क्षतं हुंकारं शंसन्तीति तथोक्ता हुंकारक्षत्यनुमापका इत्यर्थः । हुंकारशस्त्रा हि रुद्रा इति भावः ॥

लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥

लब्धेति ॥ प्रथमं पूर्वं लब्धप्रतिष्ठा लब्धस्थितयः । लब्धावकाशा इत्यन्य यूयं बलवत्तरैः पौरुषातिरेकात्प्रबलतरैः । निरवकाशैरित्यपरत्र । परैः शत्रु रुत्सर्गाः सामान्यशास्त्राणि 'मा हिंस्यात्' इत्येवमादीनि । अपोद्यन्त एभिरि

१ आयाताः. २ दर्शिनः; दर्शनम्. ३ अहंकार. ४ न खलु स्थ बलोत्त

दिः 'गामालभेत' इत्यादिभिर्विशेषशास्त्रैरिव किं कृतव्यावृत्तयः कृतप्रतिष्ठा-
ाः । कृतविषयसंकोचरूपबाधा इत्यन्यत्र । 'विषयसंकोच एव बाधः' इत्या-
र्गाः । निषेधशास्त्रस्यावैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसं-
व इत्यलमतिगहनावगाहनेन ॥

तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥

तदिति ॥ तत्तस्मात्कारणात् । हे वत्साः पुत्रकाः, 'वत्सस्त्वर्भकपुत्राद्योर्वर्षे सं तु वक्षसि' इति विश्वः । स्वयं पितामहत्वाद्वत्सा इत्यामन्त्रयते । संभूयागताः ागता इतो मत्तः किं प्रार्थयध्वम् । किमिच्छतेत्यर्थः । ब्रूत । लोकरक्षणे ्रमेव कर्तार इत्याह—मयि लोकानां सृष्टिः हि । रक्षा युष्मास्ववस्थिता । तस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २९ ॥

तत इति ॥ ततो भगवत्प्रश्नानन्तरं वासव इन्द्रो गुरुं बृहस्पतिम् । 'गुरू ाष्पतिपित्राद्यौ' इत्यमरः । मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत ति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास । सहस्रग्रहणमा- ातिशयार्थम् । अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥

स इति ॥ हरेरिन्द्रस्य । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः । सहस्राक्ष- ेभ्योऽधिकं सहस्रनयनाधिकम् । तदगोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य ाद्विनेत्रम् । प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः । चक्षुश्चक्षुर्भूतः । चक्षुष्ट्वारोपस्य कृतोपयोगात्परिणामालंकारः । स वाचस्पतिः । कस्कादित्वादलुक्सत्वे । षष्ठ्याः पतिपुत्र–' इत्यादिना सत्वमिति स्वामी । तन्न, छन्दोविषयत्वात् । ाञ्जलिः सन् । जलजासनं ब्रह्माणमिदमुवाच ॥

एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ ३१ ॥

एवमिति ॥ हे भगवन् षड्गुणैश्वर्यसंपन्न, यदात्थ 'कृतव्यावृत्तयः परैः' २।२७ ) इति यद्ब्रवीषि । 'ब्रुवः पञ्चानाम्' इत्यादिनाहादेशः । 'वर्तमान- ामीप्ये वर्तमानवद्वा' इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग

१ प्रार्थयध्वे. २ भूतानाम्. ३ चोदयामास; प्रेरयामास. ४ वृत्रहा. ५ द्विनेत्रः. ६ दशचक्षुःशताधिकम्. ७ यथा. ८ ज्ञास्यति प्रभुः.

इत्याह । आहेति भूते णलन्तभ्रमवदिति । आहेत्युपलक्षणम् । तदेवं नोऽस्माकं पदमधिकारः परैः शत्रुभिरामृष्टमाक्षिप्तम् । हे प्रभो, प्रत्येकं पुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः । सर्वान्तर्यामीत्यर्थः । कथं न ज्ञास्य वेत्सि । वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः । 'अपह्नवे 'अकर्मकाच्च' इत्यात्मनेपदविकल्पः ॥

उक्तमेव प्रपञ्चयति—

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥

भवदिति ॥ भवतस्त्वत्तो लब्धेन वरेणोदीर्ण उद्धतः तारक इत्या नामधेयं यस्य स तारकाख्यः । महानसुरो महासुरः । 'सन्महत्परमोत्तमोत्कृ पूज्यमानैः' इति तत्पुरुषः । धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवायो वायोत्थित उत्पन्नः ॥

पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥

पुर इति ॥ अस्य तारकस्य पुरे रविः सूर्यस्तावन्तं तावन्मात्रमेवा तनोति । यावन्मात्रेण यावतैव । यावती मात्रा मितिर्यस्य यावन्मात्रं तेन अल्पपरिमाणेनेत्यर्थः । 'मात्रा परिच्छदे । अल्पे च परिमाणे सा कार्त्स्न्येऽवधारणे' इत्यमरः । दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विका साध्यते निष्पाद्यते । कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रका इत्यभिप्रायः ॥

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥

सर्वाभिरिति ॥ चन्द्रस्तं तारकं सर्वदा । कृष्णपक्षेऽपीत्यर्थः । सर्वा कलाभिर्निषेवते । 'कला तु षोडशो भागः' इत्यमरः । केवलां हरचूडामणीकृ शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥

व्यावृत्तेति ॥ वायुः स्तेनस्य भावः कर्म वा स्तेयं चौर्यम् । 'स्तेनाद्यन्नलोप इति यत्प्रत्ययो नलोपश्च । कुसुमानां स्तेयं तस्मात्स्तेयाभियोगाद्दण्डाद्वा साध्व भयं तस्माद्धेतोरुद्याने व्यावृत्तगतिः । निवृत्तोद्यानसंचारः सन्नित्यर्थः । साप त्वेऽपि गमकत्वात्समासः । तत्पार्श्वे तत्समीपे । तालस्य वृन्तैरुद्भूयते । तालवृ

१ त्वया दत्त; भवद्दत्त. २ करोति.

मस्येति वा तालवृन्तं तस्यानिलाद्व्यजनसंचारपवनादधिकं यथा तथा न ति । 'व्यजनं तालवृन्तकम्' इत्यमरः ॥

पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥

पर्यायेति ॥ ऋतवः षड्वसन्तादयः पर्यायसेवां क्रमसेवामुत्सृज्य पुष्पाणां भारे संग्रहे तत्पराः । आसक्ताः सन्त इत्यर्थः । 'तत्परे प्रसितासक्तौ' इत्यमरः । ग्रानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकमुपा- ते सेवन्ते । शीतोष्णादिदोषप्रकाशनं तु दूरापास्तमित्यर्थः ॥

तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरा निष्पत्तेः प्रतीक्षते ॥ ३७ ॥

तस्येति ॥ सरितां पतिः समुद्रस्तस्य तारकस्योपायनानां प्राभृतानां योग्यानि । ाभृतं तु प्रदेशनम् । उपायनम्' इत्यमरः । रत्नान्यम्भसामन्तरा निष्पत्तेः रिपाकपर्यन्तम् । विकल्पादसमासः । कथमपि महता यत्नेन प्रतीक्षते । कदा परिपच्येरन्नित्यैकाग्र्येण पालयतीत्यर्थः ॥

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजंगाः पर्युपासते ॥ ३८ ॥

ज्वलदिति ॥ किंचेति चार्थः । ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ाला येषां ते वासुकिप्रमुखा भुजंगाः सर्पाः । सिद्धाश्च ध्वन्यन्ते । 'भुजंगः द्धसर्पयोः' इत्यमरः । निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्यैनं तारकं पर्युपा- ते परिवृत्य सेवन्ते ॥

तत्कृतानुग्रहापेक्षी तं[2] मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुम[3]विभूषणैः ॥ ३९ ॥

तत्कृतेति ॥ इन्द्रोऽपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षत ति तथोक्तः सन् । मुहुर्दूतहारितैर्दूतप्रापितैः कल्पद्रुमाणां विभूषणैः । तत्प्रसू- रित्यर्थः । तं तारकमनुकूलयत्यनुकूलं करोति ॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्य[4]पकारेण नोपकारेण दुर्जनः ॥ ४० ॥

इत्थमिति ॥ इत्थमुक्तप्रकारेण रविशशिपवनोदधिभुजंगसुरेन्द्रैराराध्यमा- ोऽपि भुवनत्रयं क्लिश्नाति पीडयति । तथाहि । दुर्जनः प्रत्यपकारेण प्रतीकारे- व शाम्येच्छान्तो भवेत् । उपकारेण तु न शाम्येत् । प्रत्युत प्रकुप्यतीति भावः ॥

---

१ प्रहिताः. २ प्रत्यहम्. ३ स्वर्गद्रुम. ४ प्रत्युपकारेण.

तेनामरवधूहस्तैः[1] सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥

तेनेति । तेन तारकेणामरवधूहस्तैः । सुकुमारैरिति भावः । तैरपि स लूना अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः । छेदाश्च पाताश्च छेद स्तेषाम् । अभिजानन्तीत्यभिज्ञाः । कृद्योगात्कर्मणि षष्ठी । क्रियन्ते ॥

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां बाष्पसीकरवर्षिभिः ॥ ४२ ॥

वीज्यत इति ॥ हि यस्मात्कारणात्स तारकः संसुप्तः सन् । श्वाससा निश्वाससमानोऽनिलो येषां तैः । ततोऽप्याधिक्ये निद्राभङ्गभयादिति भ बाष्पशीकरवर्षिभिः । तासां स्त्रीणां रोदनस्यायमवसर इति भावः । न्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः । वीज्यते ॥

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

उत्पाट्येति ॥ तेन तारकेण हरितां सूर्याश्वानाम् । 'हरित्सूर्ये च स वर्णे च हरिते दिशि' इति विश्वः । खुरैः शफैः क्षुण्णानि चूर्णितानि । तेषामत्यौन्नत्यं सूचितम् । मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मसु । वेश्मस्विति व चनेनास्य भुवनत्रयनिवासः सूचितः । आक्रीडन्त एष्विव्याक्रीडाः । ते पर्वताः कल्पिताः कृताः ॥

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥ ४४ ॥

मन्दाकिन्या इति ॥ सांप्रतं संप्रति मन्दाकिन्या भागीरथ्या दिग्वार दिग्गजानां मदैराविलं कलुषं पयो जलमेव । शिष्यत इति शेषं शिष्टम् । ण्यण्प्रत्ययः । 'त्रिष्वन्यत्रोपयुज्यते' इति नपुंसकत्वम् । तर्हि कनककम क गतानीत्याह—हेमेति । हेमाम्भोरुहाण्येव सस्यानि तेषां तु तस्य वा द्वाप्य एव धाम स्थानम् । सर्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरो वानित्यर्थः ॥

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥ ४५ ॥

भुवनेति ॥ तस्य तारकस्यापातात्समापत्तेर्भयाद्विमानानां पथि खिली

[1] हस्तसदया.

ग्रहतीभूते सति । 'द्वे खिलाप्रहते समे' इत्यमरः । स्वर्गिभिर्देवैर्भुवनानामाकने प्रीतिर्नानुभूयते ॥

**यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।**
**जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥ ४६ ॥**

यज्वभिरिति ॥ यज्वभिर्विधिवदिष्टवद्भिः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । विततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविर्मायी मायावी । व्रीह्यादित्वादिनिप्रत्ययः । स तारको नोऽस्माकं मिषतां पश्यताम् । पश्यत्सु सत्स्वित्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । जातवेदा वह्निः मुखं तस्माज्जातवेदोमुखादाच्छिनत्ति । आक्षिप्य गृह्णातीत्यर्थः ॥

**उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।**
**देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥**

उच्चैरिति ॥ किंचेति चार्थः । तेन तारकेणोच्चैरुन्नत उच्चैःश्रवा नाम हयो रत्नमिव हयरत्नमश्वश्रेष्ठः । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम् । मूर्तिमदित्यर्थः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । चिरकालार्जितमिन्द्रस्य यश इवाहार्यपहृतम् ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

**तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।**
**वीर्यवन्त्यौषधानीव विकारे सांनिपातिके ॥ ४८ ॥**

तस्मिन्निति ॥ क्रूरे घातुके । 'नृशंसो घातुकः क्रूरः' इत्यमरः । तस्मिन्नसुरे नोऽस्माकं सर्वे उपायाः संनिपातदोषत्रयस्य प्रकोपजे सांनिपातिके विकारे ज्वरादौ । 'संनिपाताच्च' इति वक्तव्याट्ठक् । वीर्यवन्ति सारवन्त्यौषधानीव प्रतिहतक्रिया विफलप्रयोगा भवन्ति ॥

तदेव प्रतिहतक्रियत्वमाह—

**जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।**
**हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ४९ ॥**

जयाशेति ॥ किंचेति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रेऽस्माकं जयाशा विजयाशंसा । आसीदिति शेषः । प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेनास्य तारकस्य कण्ठे निष्कमुरोभूषणमर्पितमिवेत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितमित्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥

---

१ पिबताम्. २ निष्कः. ३ अर्पितः.
४ कु.

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति तटाघातं[1] निर्जितैरावता गजाः ॥ ५० ॥

तदीया इति ॥ अद्य संप्रति निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य त स्येमे तदीया गजाः पुष्कराश्चावर्तकाश्च नामादयो येषां तेषु तोयदेषु तटाघातं वप्रक्रीडामभ्यस्यन्ति ॥

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

तदिति ॥ तत्तस्मात्कारणात् । हे विभो स्वामिन्, मोक्तुं भवं त्यक्तुमि मुमुक्षवो विरक्ता भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धस्तं छिन कर्मबन्धच्छित्तं धर्ममिव । आत्मज्ञानहेतुभूतमिति शेषः । 'तमेव विदित्व मृत्युमेति' इति ज्ञानादेव मुक्तिः । तस्य तारकस्य शान्तये नाशाय । सेनां तीति सेनानीश्चमूपतिः । 'सत्सूद्विष–' इत्यादिना क्विप् । तं सेनान्यं कंचि मिच्छामः । वयमिति शेषः ॥

सेनानीसृष्टेः फलमाह—

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२ ॥

गोप्तारमिति ॥ सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेन पुरस्कृत्य पुरोधाय । 'पुरोऽव्ययम्' इति गतित्वात् 'नमस्पुरसोर्गत्योः' सकारः । गां पृथ्वीं त्रायन्त इति गोत्रास्तान्भिनत्तीति गोत्रभिदिन्द्रो जयश्रि बन्दीमिव बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात्प्रत्यानेष्यति प्रत्याहरिष्यति तं स्रष्टुमिति पूर्वेण संबन्धः ॥

वचस्यवसिते[2] तस्मिन्[3]ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा[4] ॥ ५३ ॥

वचसीति ॥ तस्मिन्बार्हस्पत्ये वचस्यवसिते परिसमाप्ते सत्यात्मभूर्व गिरं वाचं ससर्ज । जगादेत्यर्थः । सा गीः सौभाग्येन मनोहरत्वेन । 'हृद्भगा न्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । गर्जिताद्गर्जितस्य वानन्तरां प्रवृ वृष्टिं जिगाय जितवती । गर्जितपरत्वाद्वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभग मिति भावः ॥

संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।
न त्वस्य सिद्धौ[5] यास्यामि सर्वव्यापारमात्मना ॥ ५४ ॥

१ तटाघातान्. २ उपरते. ३ तस्य. ४ या. ५ सिद्ध्यौ.

संपत्स्यत इति ॥ अयं वो युष्माकं कामो मनोरथः सेनानीरूपः संपत्स्यते स्यति । कश्चित्कियानपि कालः प्रतीक्ष्यताम् । तु किंतु तस्य सेनान्यः सिद्धौ य आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि । नाहं स्यामीत्यर्थः ॥

कुत इत्याशङ्क्याह—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ ५५ ॥

इत इति ॥ इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त क्षयं नाशं नार्हति । तथाहि । अन्यो वृक्षस्तावदास्ताम् । विषस्य वृक्षो षवृक्षोऽपि संवर्ध्य कुतश्चित्कारणात्सम्यग्वर्धयित्वा स्वयं छेत्तुमसांप्रतमनर्हः । सांप्रतमित्यनेन निपातेनाभिहितत्वाद्वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते र्मणि द्वितीयाभिधानात् । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न भक्तिः परिगणनस्य प्रायिकत्वात्' इति ॥

वृतं तेनेदमेव प्राङ्मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

वृतमिति ॥ प्राक्पूर्वं तेनासुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । या चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' ति संप्रदानत्वाच्चतुर्थी । कर्तव्यं चैतदित्याह—लोकान्दग्धुमलं शक्तम् । र्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः । तस्य तपस्तत्तपो वरेण वरदानेन मितं हि । मयेति शेषः ॥

संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥

संयुग इति ॥ संयुगे युद्ध उद्यतं व्याप्रियमाणम् । संयुगे साधुं सांयुगीनम् । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः । तं तारकं निषिक्तस्य क्वचित्क्षेत्रे क्षरितस्य । 'नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित' इति पुराणम्' इति स्वामी । तस्य नीललोहितस्य धूर्जटे रेतसः शुक्रस्यांशादृतेंऽशं विनान्यः कः प्रसहेताभिभवेत् । 'प्रसहनमभिभवः' इति वृत्तिकारः ॥

कथमसावीदृक्शक्तिरित्याह—

स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥

१ वृतः. २ अहम्; आदौ. ३ अशमितम्. ४ उद्यन्तम्; युध्यन्तम्. ५ प्रतिष्ठितम्.

स इति ॥ स देवो नीललोहितस्तमसः पारे परतो व्यवस्थितं तमोगुण परं ज्योतिः परमात्मा हि । अतएव मया परिच्छिन्नप्रभावर्द्धिरवगाढमहि शयो न भवति । तथा विष्णुना च न । अतस्तस्यासाध्यं नास्तीत्यर्थः ॥

संप्रति तदंशोत्पत्तावुपायं दर्शयति—

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥

उमेति ॥ ते कार्यार्थिनो यूयं संयमस्तिमितं समाधिनिश्चलं शंभोर्मन रूपेणोमासौन्दर्येण । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्था नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः । अयस्कान्तेन मणिविशे 'कस्कादिषु च' इति सकारः । लोहवदयोधातुमिव । 'तेन तुल्यं क्रिया चेद्' इति वतिप्रत्ययो मृग्यः । आक्रष्टुमाहर्तुं यतध्वमुद्युक्ता भवत ॥

नच गत्यन्तरमस्तीत्याह—

उभे एव क्षमे [1]वोढुमुभयोर्बीजमाहितम् ।
सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥

उभे इति ॥ उभयोः शंभोर्मम चाहितं निषिक्तं बीजं तेजो वोढुं सोढुं वोमा शंभोरष्टमूर्तेस्तस्येयं तदीया जलमयी मूर्तिर्वा मम । उभे एव क्ष तृतीयेत्यर्थः । वाशब्दो द्वन्द्वार्थे न त्वन्यार्थे । एतदेवोदाहृत्येत्थमेव व्या गणव्याख्याने । अत्र दीपकालंकारः । प्राकरणिकयोरुमामहेश्वरप्राकरणिक ब्रह्मजलमूर्त्योश्चौपम्यस्य गम्यत्वात् । यथाह भोजराजः—'प्रस्तुतानामप्रस्तुत चौपम्यस्य गम्यत्वे दीपकम्' इति । नचेयं तुल्ययोगिता तस्याः केवलप्रस्तु विषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥

तस्यात्मा शितिकण्ठस्य सै[2]नापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां [3]वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥

तस्येति ॥ तस्य शितिकण्ठस्याष्टमूर्तेरात्मा । पुत्र इत्यर्थः । 'आत्मा वै पु नामासि' इति श्रुतेः । वो युष्माकं सेनापतेर्भावः सैनापत्यम् । 'पत्यन्तपुरोहि दिभ्यो यक्' इति यक्प्रत्ययः । उपेत्य प्राप्य वीर्यविभूतिभिः शौर्यसंपत्ति सुरबन्दीनां वेणीर्मोक्ष्यते विस्रंसयिष्यति । तारकासुरं हनिष्यतीति भावः ॥

इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्तव्यास्तेऽपि दे[4]वा दिवं ययुः ॥ ६२ ॥

इतीति ॥ विश्वस्य योनिः कारणम् । 'योनिः स्त्रीणां भगस्थाने का तान्त्रिके पणे' इति वैजयन्ती । विबुधान्सुरानिति व्याहृत्याभिधाय तिरोदधेऽ हितवान् । ते देवा अपि मनस्याहितं कर्तव्यं यैस्ते तथोक्ताः सन्तो दिवं स्व ययुः प्रापुः ॥

१ सोढुम्. २ सेनापत्यम्. ३ वेणीबन्धानदूषितान्. ४ प्रति.

तत्र निश्चित्य कंदर्पमगमत्पाकशासनः ।
मनसा [1]कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥ ६३ ॥

तत्रेति ॥ पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रस्तत्र हरचित्ताकर्षणकृत्ये दर्पं निश्चित्य । साधकत्वेनेति शेषः । कार्यसंसिद्धौ त्वरयौत्सुक्येन । द्वौ गुणौ स्य तद्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन । 'गुणस्तु वृत्तिशब्दादि-न्द्रियामुख्यतन्तुषु' इति वैजयन्ती । मनसागमत् । सस्मारेत्यर्थः । गमेर्लुङ् । दित्वाच्च्लेरङादेशः ॥

अथ स[2] ललितयोषिद्भ्रूलताचारुशृङ्गं[3]
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा[4] ॥ ६४ ॥

अथेति ॥ अथ स्मरणानन्तरम् । स स्मृत इत्यर्थः । पुष्पं धनुर्यस्य स ष्पधन्वा कामः । 'वा संज्ञायाम्' इत्यनङ् । 'ललितं त्रिपु सुन्दरम्' इत्यमरः । ललितायाः सुन्दर्या योषितो भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं पम् । रतिः स्मरप्रिया । 'रतिः स्मरप्रिया' इत्यमरः । तस्या वलयपदानि ङ्कणस्थानान्यङ्कश्चिह्नं यस्य स तथोक्ते कण्ठ आसज्य लगयित्वा । चापकण्ठ-प्राकरणिकविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं ामप्रस्तुतव्यज्यते । सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुरमेवास्त्रं यस्य स तथोक्तः प्राञ्जलिः कृताञ्जलिः सन् । शतमखमिन्द्रमुपतस्थे संगतवान् । संगति-करणार्थादात्मनेपदम् । अत्र स्वभावोक्तिः—'स्वभावोक्तिरसौ चारु यथावद्वस्तु-र्णनम्' इति । मालिनीवृत्तमेतत्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमा-ख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

---

१ कर्मसंसिद्धि; कार्यसंसिध्यै; कार्यसंसिद्धि. २ सुललित. ३ शार्ङ्गम्. ४ पुष्पकेतुः.

तस्मिन्निति ॥ मघोन इन्द्रस्याक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणमेषां त्रिदशान्देवान् । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहि 'बहुव्रीहौ संख्येये–' इति डच्प्रत्ययः । उक्तार्थत्वात्सुचो निवृत्तिः । वि त्यक्त्वा तस्मिन्कामे युगपत्पपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोत्ति ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मि कस्मिन्पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति—प्रायो भूम्ना प्रभूणामाश्रि सेवकेषु विषये गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं लम् । फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥

स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः[1] ।
भर्तुः प्रसादं प्रतिनन्द्य[2] मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥

स इति ॥ स कामो वासवेनेन्द्रेणासनस्य सिंहासनस्य संनिकृष्टं संनिहित सनसंनिकृष्टं यथा तथा । शेषषष्ठ्यायं समासः । कृद्योगलक्षणया तु न । लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात् । इतो निषीदेहोपविशेति वि ष्टभूमिर्दत्तावकाशः सन् । भर्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रतिनन्द्य संभा मिथो रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । एनमिन्द्रमेवं वक्ष्यमाणप्र रेण वक्तुं प्राक्रमतोपक्रान्तवान् । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ॥

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया[3] ते ॥ ३ ॥

आज्ञापयेति ॥ हे पुंसां ज्ञातविशेष ज्ञातसार । ज्ञातपुंविशेषेत्यर्थः । सा क्षत्वेऽपि गमकत्वात्समासः । आज्ञापय । तदिति शेषः । उत्तरवाक्ये यच्छ प्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः । किं तदित्याह—लोकेषु ते यत्करणीयं कर्तव्यमस्ति । संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञा नियोगेन संवर्धितं वृद्धिं गमितमिच्छामि । संस्मरणकृतमनुग्रहं केनचिन्नियोगे वर्धय । कचित्कर्मणि नियुङ्क्ष्वेत्यर्थः । अन्यथा मे नास्ति परितोष इति भाव तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः ॥

न च मे किंचिदसाध्यमस्तीत्याह—

केनाभ्यसूया पदकाङ्क्षिणा[4] ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥

केनेति ॥ पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्त पोभिस्ते तवाभ्यसूयेर्ष्या जनिता । तं ब्रूहीति शेषः । किमर्थम् । यावद्यतः भवद्धैर्याहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तेत इति निदे

1 निसृष्ट. 2 प्रतिवन्द्य. 3 संवर्धितुम्. 4 फल.

त्यांज्ञावशो भवति । अविलम्बेनैव भविष्यतीत्यर्थः । 'वर्तमानसामीप्ये मानवद्वा' इति लट् ॥

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

**असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।**
**बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥**

असंमत इति ॥ तवासंमतः कः पुनर्भवः पुनरुत्पत्तिः । संसार इति यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयान्मुक्तिमार्गं प्रपन्नस्तं वद । तः सोऽप्यारेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु । आरेचितलक्षणं तु—'स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । योर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः ॥' इति ॥

धर्मार्थावधिकृत्याह—

**अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते ।**
**कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥**

अध्यापितस्येति ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि । पिशब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते । 'गतिबुद्धि–' इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः । 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । ते द्विषस्तव शत्रोः कस्यार्थधर्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् । 'प्रणिधिः प्रार्थने चरे' इति यादवः । प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव पीडयामि वद ॥

काममधिकृत्याह—

**कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७ ॥**

कामिति ॥ एकः पतिर्यस्याः सैकपत्नी पतिव्रता । 'नित्यं सपत्न्यादिषु' इति ङीप् । तस्य व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावाम् । दृढव्रतामित्यर्थः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । चारुतया सुन्दरत्वेन हेतुना लोलं मनस्त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् । स्वयं गृह्णातीति स्वयंग्राहा । 'विभाषा ग्रहः' इति णप्रत्ययः । न च जलचर एव ग्राह इति नियमः । जलचरे ग्राह एवेति नियमादिति । स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूतामिच्छसि । त्वदर्थे पतिव्रतामपि व्रताद्भ्रंशयिष्यामीत्यर्थः । एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः— 'अहल्यायै जारः' इति ॥

१ आरोपित. २ विलासैः. ३ प्रणिधेः.

त्रिविधा नायिका स्वकीया परकीया साधारणी चेति। तत्र पर-
प्रत्युक्तम्। इतरे प्रत्याह—

कयासि कामिन्सुरतापराधात्पादानतः कोपनयावधूतः।
यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम्॥

कयेति॥ हे कामिन्कामुक, सुरतापराधात्। अन्यासङ्गादित्य- पादानतः प्रणतः सन्। कोपनया कोपनशीलया कया स्त्रियावधूतस्ति- तोऽसि। तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमतएव प्रवालशय्या- करिष्यामीति॥

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः॥

प्रसीदेति॥ हे वीर, प्रसीद प्रसन्नो भव। वज्रं कुलिशं विश्राम- उदास्तामित्यर्थः। मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः क- दैत्यदानवादिषु यः कश्चन सुरारिः। 'वा बहूनां जातिपरिप्रश्ने डतमच्' डतमच्प्रत्ययः। कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु। किमु व- पुंभ्य इत्यर्थः। सकृद्भीतः सर्वतो बिभेतीति भावः। 'भीत्रार्थानां भय- इत्यपादानत्वात्पञ्चमी॥

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये॥१

तवेति॥ किं बहुना, तव प्रसादादनुग्रहात्कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽ- हमेकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य स पिनाकपाणि- 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ'। तस्य हरस्यापि। हरः पिनाकी चेत्यतिदा- इति भावः। धैर्यच्युतिं धैर्यहानिं कुर्याम्। कर्तुं शक्नुयामित्यर्थः। 'शकि - च' इति शक्यार्थे लिङ्। अन्ये धन्विनो धनुर्भृतो मम के। न केऽपीत्यर्थ- किंशब्दः कुत्सायाम्। 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः

अथोरुदेशादवतार्य पादमाक्रान्ति[2]संभावितपादपीठम्।
संकल्पितार्थे[3] विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे॥११

अथेति॥ अथ स्मरवाक्यश्रवणानन्तरमाखण्डलः सहस्राक्ष ऊरुदेशात्पा- माक्रान्त्याक्रमणेन संभावितं पादपीठं यस्मिंस्तद्यथा तथावतार्य संकल्पित- हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिम्। 'कुर्यां हरस्यापि–' (३।१० इत्यादिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाषे॥

१ सहसापराधः. २ अक्रान्ति. ३ संकल्पितेऽर्थे.

ं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
त्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ १२ ॥

सर्वमिति ॥ हे सखे । सखे इति संबोधनं गौरवार्थम् । सर्वमेतत्त्वय्युपपन्नं
द्धम् । मम कुलिशं वज्रं भवांश्चोभे अस्त्रे । तत्र वज्रं तपोवीर्येण तपोबलेन
त्सु प्रतिबलेषु कुण्ठं प्रतिबद्धप्रसरम् । त्वमस्त्रं सर्वतोगामि च साधकं च ।
पसेष्वप्यकुण्ठमित्यर्थः ॥

वैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

अवैमीति ॥ हे सखे, ते सारं बलमवैमि वेद्मि । अतः खल्वतएवात्मसमं
तुल्यं त्वां गुरुणि महति कार्ये 'तस्मै हिमाद्रेः'—( ३ । १६ ) इति वक्ष्यमाणे
योक्ष्ये । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकादात्मनेपदनियमः ।
थाहि । सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—कृष्णेन विष्णुना ।
रतीति धरः । पचाद्यच् । भुवो धरो भूधरस्तस्य भावस्तत्तां भूधरताम् ।
धरणशक्तिमित्यर्थः । अवेक्ष्य ज्ञात्वा शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वो-
म् । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी
ि भगवान् ॥

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—

ाशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
नेबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥

आशंसतेति ॥ वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता । 'कुर्यां
हरस्यापि पिनाकपाणेः' ( ३ । १० ) इत्यादिनेति शेषः । त्वया नोऽस्माकं कार्यं
प्रतिपन्नकल्पमङ्गीकृतप्रायम् । 'ईषदसमाप्तौ–' इत्यादिना कल्पप्प्रत्ययः । कथ-
मेतदत आह—इदानीमुच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां
देवानाम् । एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते । ईप्सितमाप्तुमिष्टमेतदेव हरे
बाणप्रयोगरूपमेव निबोध । हरायत्तं बुध्यस्वेत्यर्थः । 'बुध बोधने' इति धातो-
र्लोट् । अत्र 'आशंसता प्रार्थयमानेन' इति नाथव्याख्यानमनाथव्याख्यानम् ।
आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात् । याच्ञार्थत्वस्याप्रा-
माणिकत्वात् । 'कुर्यां हरस्यापि—' ( ३ । १० ) इत्यत्रानयोरभावादयोगाच्चेति ॥

किं तत्कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह—

अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५ ॥

१ अर्थमत्र. २ ब्रह्मनियोजितात्मा.

**अमी इति** ॥ हि यस्मादमी देवा जयाय शत्रुजयार्थं भवस्य वीर्यप्रभवं तेजःसंभूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते। 'वश कान्तौ' धातोर्लट्। ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः ब्रह्माङ्गभूः। कृतमन्त्रन्यास इत्यर्थः। ब्रह्मणि निजतत्त्वे 'वेदस्तत्त्वं तपो ब्रह्म' इत्युभयत्राप्यमरः। योजितात्मा नियमितचित्तः। मन्त्रन्यासपूर्वकं ब्रह्म ध्या... त्यर्थः। स भवश्च त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः। अनन्यसाध्य... मस्मिन्नवसर इति भावः॥

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्॥ १...**

**तस्मा इति** ॥ यतात्मने नियतचित्ताय तस्मै भवाय। 'रुच्यर्थानां ... माणः' इति संप्रदानत्वाच्चतुर्थी। प्रयतां हिमाद्रेस्तनूजां पार्वतीं रोच... यतस्व। भवितव्यं चात्र पार्वत्यैवेत्याह—योषित्सु स्त्रीषु मध्ये। 'यतश्च नि... रणम्' इति सप्तमी। क्षमा शक्ता तस्य हरस्य वीर्यं रेतस्तस्य निषेकः क्षरणं... भूमिः क्षेत्रं सा पार्वत्येवेत्यात्मभुवा ब्रह्मणोपदिष्टम्। 'उभे एव क्षमे वो... (२।६०) इत्यादिनोक्तमित्यर्थः॥

सापीदानीं संनिकृष्टैव तस्येत्याह—

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम्।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः॥१...**

**गुरोरिति** ॥ नगेन्द्रकन्या पार्वती च गुरोः पितुर्नियोगाच्छासनादधि... कायां हिमाद्रेरूर्ध्वभूमौ। 'भूमिरूर्ध्वमधित्यका' इत्यमरः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः। तपस्यन्तं तपश्चरन्तम्। 'कर्मणो रोम... तपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः। ततः शतृप्रत्ययः। स्थाणुं रुद्रमन्वास्त उपास्त इत्यर्थः। इतीदं मयाप्सरसां मुखेभ्यः श्रुतम्। न चैतदैतिह्यम... मित्याह—स वर्गः सोऽप्सरसां गणो मत्प्रणिधिर्मम गूढचरः। 'प्रणिधिः प्रा... चरे' इति यादवः॥

**तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव।**
**अपेक्षते [2]प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः॥ १८**

**तदिति** ॥ तत्तस्मात्सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ देवकार्यं कुरु। आशि... लोट्। अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव। तच्च कारणान्... पार्वतीसंधानमिति भावः। 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभि... धेये च शब्दानां वृत्तौ चापि प्रयोजने॥' इति विश्वः। तथापि बीजसाध्योऽङ्कु... बीजाङ्कुर उदयादुत्पत्तेः प्रागम्भ इव त्वामुत्तमं प्रत्ययं चरमं कारणमपेक्षते...

१ जितात्मने. २ प्रत्ययसङ्गलब्धौ.

योऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसह-
रेत्वादनन्यसाध्योऽयमर्थ इति भावः ॥

स्मिन्सुराणां विजयाभ्युपाये तवैव [2]नामास्त्रगतिः कृती त्वम् ।
प्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १९ ॥

तस्मिन्निति ॥ सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन्हरेऽस्त्रगति-
प्रसरस्तवैव नाम । नामेति संभावनायाम् । अन्येषां तु संभावनापि नास्तीति
वः । अतस्त्वं कृती कृतमस्यास्तीति कृती कृतार्थः । तथाहि । अप्रसिद्धम-
नन्यसाधारणमेव कर्म पुंसां यशसे हि । इदं तु प्रसिद्धमसाधारणं चेत्यति-
शस्करमिति भावः ॥

प्रोत्साहनार्थं स्तौति—

राः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
पेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ २० ॥

सुरा इति ॥ एते सुराः समभ्यर्थयितारो याचितारः । कार्यं प्रयोजनं
याणां विष्टपानामपि संबन्धि । सर्वलोकार्थमित्यर्थः । कर्म ते तव चापेन । न
न्येनेति भावः । अतिहिंस्रमतिघातुकं च न । अहो बत इति संबोधने ।
हो बतानुकम्पायां खेदे संबोधनेऽपि च' इति विश्वः । अथवा अहो आश्चर्ये ।
त्यामन्त्रणे संतोषे चेति । 'बतामन्त्रणसंतोषखेदानुक्रोशविस्मये' इति
श्वः । स्पृहणीयवीर्योऽस्याश्चर्यविक्रमोऽसि । 'आश्चर्यं स्पृहणीयं च' इति
नार्थकोशः ॥

धुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव ।
मीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥ २१ ॥

मधुरिति ॥ हे मन्मथ, असौ मधुश्च वसन्तोऽपि ते साहचर्यात्सहचरत्वा-
वानुक्तोऽप्यप्रेरितोऽपि सहायः सहकार्येव । तथाहि । समीरणो वायुर्हु-
ताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते । अत्र मधुसमीरणयोरु-
केमन्तरेण सहायताकरणं सामान्यधर्मः । स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन
थङ्निर्दिष्ट इति प्रतिवस्तूपमालंकारोऽयम् । तदुक्तम्—'यत्र सामान्य-
र्देशः पृथग्वाक्यद्वये यदि । गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा
मता ॥' इति ॥

थेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
[4]ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥

तथेति ॥ तथास्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव ।

१ अस्मिन्. २ काम. ३ समीरणश्चोदयिता; समीरणः प्रेरयिता. ४ दिग्वारणा.

'प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः। 'माल्याक्षता स्त्री शेषा' इति वैजयन्तीकेशवौ। आज्ञां मूर्ध्नादाय शिरसा गृहीत्वा प्रतस्थे। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। इन्द्र ऐरावतास्फालनेन हनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श। हस्त संभावयामासेत्यर्थः। 'शेषामिवाज्ञाम्' इत्यत्र साधकबाधकप्रमाणाभावा त्प्रेक्षयोः संदेहसंकर इति। यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्यु अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानं तु संदिग्धमिति॥

स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः।
अङ्गव्ययप्रार्थितकार्यसिद्धिः[1] स्थाण्वाश्रमं हैमवतं जगाम॥ २३॥

स इति॥ स मदनोऽभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन स्वदेव्या च साशङ्कं संकटमापतितमिति सभयमनुप्रयातः सन्। तथ व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः। शीर्त्वा मृत्वापि सर्वथा दे साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। हैमवतं हिमवति भवं स्थाणो स्याश्रमं जगाम॥

तस्मिन्वने संयमिना मुनीनां तपःसमाधेः प्रतिकूलवर्ती।
संकल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे॥ २४॥

तस्मिन्निति॥ तस्मिन्वने स्थाण्वाश्रमे संयमिनां समाधिमतां मु तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति प्रतिकूलवर्ती विरोधी मधुर्व संकल्पयोनेर्मनोभवस्याभिमानभूतम्। गर्वहेतुभूतमित्यर्थः। कार्यकारणयो दोपचारः। आत्मानं निजं स्वरूपमाधाय संनिधाय जजृम्भे प्रादुर्बभूव। व धर्मान्प्रवर्तयामासेत्यर्थः॥

वसन्तधर्मानाह—

कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज॥ २५॥

कुबेरेति॥ उष्णरश्मौ सूर्ये साहसिके च नायके समयं दक्षिणायन संगमकालं च विलङ्घ्याकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सि शरीरेण केनचिद्रक्षितां च। दिशमुदीचीं स्त्रीलिङ्गाक्षिप्तां कांचिन्नायिकां गन्तुं चलितुं संगन्तुं च प्रवृत्ते सति दक्षिणा दिग्दाक्षिण्यवती नायिका मुखेनाग्रभागेन वक्त्रेण च। वहतीति वहः। पचाद्यच्। गन्धस्य वहं गन्धव मनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव। 'दुःखे वैलक्ष्ये व्य कमप्रियाकार्यवस्तुनोः' इति वैजयन्ती। उत्ससर्ज प्रवर्तयामास। स्वभ समयोल्लङ्घनेन पराङ्गनासंगतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिंचिद्वदा दुः

---

[1] कर्मसिद्धिः. [2] जुष्टाम्.

श्वसन्तीति भावः । उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः । त्प्रेक्षालंकारः । न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम् । केवल-शेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते । अत्र तु दक्षिणेति विशेष्यसाम-र्थ्याद्दपि नायिका प्रतीयते । न च श्लेष एव प्रकृताप्रकृतविषयः, उभयश्लेषे श्लिष्ट-...ङ्गीकारात् । तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः । स च व्यलीक-श्वासरूपचेतनधर्मसंभावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादय-भेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति च्यसिद्ध्यङ्गभूत इत्युत्पश्यामः ॥

**असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।**
**पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २६ ॥**

**असूतेति** ॥ अशोको वृक्षविशेषः सद्यः स्कन्धात्प्रकाण्डात्प्रभृत्येव । स्कन्धा-रभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः । भाष्यं च 'मूला-भृत्यग्राद्वृक्षांस्तक्ष्णुवन्ति' इति 'कार्तिक्याः प्रभृत्याग्रहायणी मासे' इत्यादि । पल्लवानि कुसुमान्यसूत । उभयमप्यजीजनदित्यर्थः । आसिञ्जितो नूपुरो यस्य न । सिञ्जधातोः 'अकर्मक–' इत्यादिना कर्तरि क्तः । सुन्दरीणां पादेन संपर्कं डनं नापैक्षत । 'सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य तः पुष्पोद्गमो भवेत् ॥' इति । तथाहि—'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरुबकः कुरुते विकासमा-डितस्तिलक उत्कलिको विभाति' इति ॥

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

**सद्य इति** ॥ मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि त्राणि पक्षा यस्य तस्मिन् । 'पत्रं वाहनपक्षयोः' इत्यमरः । नवं चूतं चूतकुसुमं देव बाणस्तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यो मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान्भ्रमरान्निवेशयामास निदधौ । अत्र प्रवालपत्र इत्याद्ये-देशविवर्तिरूपकं मधोरिषुकारत्वं रूपं यन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्त-मित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः २८**

**वर्णेति** ॥ कर्णिकारं कर्णिकारकुसुमम् । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्युत्पन्नस्य तद्धितस्य 'पुष्पमूलेषु बहुलम्' इति लुक् । एवमन्यत्रापि द्रष्टव्यम् । वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म

१ निर्गन्धमिति.

पर्यतापयत् । 'लट् स्मे' इति भूतार्थे लट् । तथाहि । प्रायेण विश्वसृजो वि प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसंपादनविषये पराङ्मुखी । सर्व वस्तुनि किंचिद्वैकल्यं संपादयति । यथा चन्द्रे कलङ्कः । अतः कर्णिका नैर्गन्ध्यं युज्यत इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्त सोऽलंकारः ॥

बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥

बालेन्द्विति ॥ अविकाशभावान्निर्विकाशत्वान्मुकुलभावाद्धेतोर्बाले वक्राण्यतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि । 'पलाशे किं पर्णः' इत्यमरः । वसन्तेन पुंसा समागतानां संगतानां वनस्थलीनां सद्यः सद्यो दत्तानि । पुराणेष्वतिलौहित्याभावादिति भावः । नखक्षता बभुः । अत्र वसन्तस्य वनस्थलीनां च विशेषणसाधारण्यान्नायकव्यवहारा समासोक्तिस्तावदस्ति । 'नखक्षतानीव' इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौ गुणनिमित्ता जागर्ति । सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवो इत्युभयोरेककालतैव । 'विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्ति इति हि लक्षणम् ॥

लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य[1] ।
रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ ३० ॥

लग्नेति ॥ मधुश्रीर्वसन्तलक्ष्मीर्लग्नद्विरेफा एवाञ्जनभक्तयः कज्जलरचना भिश्चित्रं चित्रवर्णं तिलकं पुष्पविशेषमेव तिलकं विशेषकम् । मुखं प्रार स्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रा रुणिम्ना तेनेव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालोष्ठमलंचकार धयामास । अत्र रूपकालंकारः ॥

मृगाः प्रियाल[2]द्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१

मृगा इति ॥ प्रियालद्रुमा राजादनवृक्षाः । 'राजादनः प्रियालः स्यात्' इत्य तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः संजातविघ्ना दृष्टीनां पाताः प्रसारा ते तथोक्ताः मदोद्धता मृगाः प्रत्यनिलमनिलाभिमुखं मर्मरा मर्मरशब्दा पत्रमोक्षा जीर्णपर्णपाता यासु ता वनस्थलीर्विचेरुर्वनप्रदेशेषु चरन्ति 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति चरतेः सकर्मकत्वम् ॥

चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ ३२

१ निवेश्य. २ प्रियाल.

चताङ्कुरेति ॥ चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः । 'सरभावपथे कषायः' इति केशवः । पुमान्कोकिलः पुंस्कोकिलः । पुंग्रहणं प्रागल्भ्यद्यो-ार्थम् । मधुरं चुकूजेति यत्तत्कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे स्मरस्य वचनं मानं त्यजतेत्याज्ञावचनं जातम् । कोकिलकूजितश्रवणानन्तरं राज्ञया इव मानं जहुरित्यर्थः ॥

**हिमव्यपायाद्विशदाधराणामा[1] पाण्डरीभूतमुखच्छवीनाम् ।**
**स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥**

हिमेति ॥ हिमस्य व्यपायादपगमाद्विशदा नीरुजा अधरा ओष्ठा यासां सामापाण्डरीभूतमुखच्छवीनाम् । कुङ्कुमपरिहारादिति भावः । किंपुरुषाङ्ग-नां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे । घर्मोदयात्स्वेदोदयोऽभू-त्यर्थः । विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः । हेमन्तेषु नार्यो बिम्बो-षु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥३४॥**

तपस्विन इति ॥ स्थाणोर्वनमोको येषां ते तपस्विनस्तत्रत्या मुनयः । समा-काल आद्यन्तावस्या आकालिकीम् । अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीमि-र्थः । 'आकालिकडाद्यन्तवचने' इति समानकालादिकट्प्रत्ययः प्रकृतेराकाल ादेशश्च निपातितः । 'टिड्ढाणञ्–' इत्यादिना ङीप् । केचिदकालाद्देहादध्यात्मा-त्वाद्भवार्थे ठगित्याहुः । तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भित-क्रियाणां निरुद्धविकाराणां मनसां कथंचिदीशा नियन्तारो बभूवुः ॥

**तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।**
**काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥**

तमिति ॥ आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्रतिर्द्वितीया यस्य स्मिन्रतिसहाये मदने तं देशं स्थाण्वाश्रमं प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि गमानि च मिथुनानि काष्ठोत्कर्षः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । तां तो यः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । स एव रसस्तेनानुविद्धं संपृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः । शृङ्गारचेष्टाः ावर्तन्तेत्यर्थः ॥

ताश्चेष्टा आह 'मधु' इत्यादिभिश्चतुर्भिः—

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।**
**शृङ्गेण च[2] स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥३६॥**

---

१ आपाण्डुरीभूत. २ संस्पर्श.

मध्विति ॥ द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः। उपचारा ऽपि द्विरेफ उच्यते। यथाह कैयटः—'शब्दधर्मेणाप्यर्थस्य व्यपदेशो द यथा भ्रमरशब्दस्य द्विरेफत्वाद्द्विरेफो भ्रमरः' इति। कुसुममेवैकं साधारण तस्मिन्मधु मकरन्दम्। 'मधु मद्ये पुष्परसे' इति विश्वः। स्वां प्रियां मनुवर्तमानोऽनुसरन्पपौ। तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ सार लश्च कृष्णसारः कृष्णमृगः। 'वर्णो वर्णेन' इति समासः। स्पर्शेन स्पर्श निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत कर्षितवान्। 'कण्ड्वादिभ्यो यक्' इति ततः कर्तरि लङ् ॥

दद्दौ रसात्[1]पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥

ददाविति ॥ रसादतिरागात्करेणुः करिणी। 'करेणुरिभ्यां स्त्री नेभे' इत्य पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुस्तस्य गन्धोऽस्यास्तीति पङ्कजरेणु गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ। रथाङ्गनामा चक्रवाकोऽर्धं यथा पभुक्तेनार्धजग्धेन बिसेन जायां संभावयामास। स्वजग्धशेषं ददावित्यर्थः

गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे[2] ॥

गीतान्तरेष्विति ॥ किंपुरुषः किंनरः श्रमवारिलेशैः स्वेदोदबि किंचिदीषत्समुच्छ्वासिता विश्लेषिताः पत्रलेखा यस्य तत्। पुष्पाणामासवो पुष्पासवः। पुष्पोद्भवमद्यमित्यर्थः। वसन्ते मधूकस्य संभवात्पुष्पवासित केचित्। तेनाघूर्णिताभ्यामुद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रिय गीतान्तरेषु गीतमध्येषु चुचुम्बे चुचुम्ब ॥

पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥

पर्याप्तेति ॥ पर्याप्ताः समग्राः पुष्पस्तबका एव स्तना यासां ताभ्यः। ङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीप्। स्फुरन्तः प्रवालाः प एवौष्ठास्तैर्मनोहराभ्यो लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि। लिङ्ग पुंस्त्वं गम्यते। विनम्राः शाखा एव भुजास्तैर्बन्धनान्यवापुः। ताभिरालि इत्यर्थः। स्थावराणामपि मदनविकारोऽभूत्किमुतान्येषामिति भावः। तरुलतानामपि चेतनत्वादुक्तम्। यथाह मनुः—'अन्तःसंज्ञा भवन्त्येते दुःखसमन्विताः' इति। अत्र रूपकालंकारः ॥

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति

१ सरःपङ्कज. २ चुचुम्ब.

श्रुतेति ॥ अस्मिन्क्षणे वसन्ताविर्भावकाले भगवान्हरः श्रुताप्सरोगीति-
। दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः । प्रसंख्यानपर आत्मानुसंधानपरो
ूव । तथाहि । आत्मनश्चित्तस्येश्वराणां नियन्तॄणाम् । वशिनामित्यर्थः । विह-
न्त एभिरिति विघ्नाः प्रत्यूहाः । घञर्थे कप्रत्ययः । जातु कदाचिदपि समा-
भेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥

लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान्व्यनैषीत् ॥ ४१ ॥

लतेति ॥ अथ लतागृहद्वारं गतो वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेम-
डो नन्दी नन्दिकेश्वरः । 'नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे' इति
शः । मुखेऽर्पितायाः सरोषविस्मयस्तिमितावलोकं निहिताया एकस्या अङ्गु-
स्तर्जन्याः संज्ञया सूचनयैव । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना'
यमरः । गणान्प्रमथांश्चापलाय चापलं कर्तुं मा भवतेति । 'क्रियार्थोपप-
य–' इत्यादिना चतुर्थी । व्यनैषीच्छिक्षितवान् ॥

न केवलं गणा एव विनीताः, किंतु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह–

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तुच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥

निष्कम्पेति ॥ निष्कम्पवृक्षम् । इदमुद्भिज्जोपलक्षणम् । निभृतद्विरेफं निश्च-
भृङ्गम् । स्वेदजोपलक्षणमेतत् । मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम् ।
तेनाण्डजजातिरुक्ता । शान्तमृगप्रचारम् । जरायुजोपलक्षणमेतत् । सर्वमेव
ाननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवाव-
स्थे । 'मृगवाद्या जरायुजाः । स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः ।
द्भिदस्तरुगुल्माद्याः' इत्यमरः ॥

दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥

दृष्टिप्रपातमिति ॥ कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन्देशे तं
ुरःशुक्रं देशमिव । 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो
ाजा हतसैन्यो निवर्तते ॥' इति प्रतिषेधात् । तस्य दृष्टिप्रपातं दृग्विषयं
रिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां
ाखा यस्य तत् । तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं
माधिस्थानम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । विवेश ॥

सदेवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।

आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥ ४४

स इति ॥ आसन्नशरीरपात आसन्नमृत्युः स कामः शार्दूलचर्मणा व्याघ्र नवत्याम् । व्याघ्रचर्मास्तृतायामित्यर्थः । 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्रा दिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं म्बकं त्रिनेत्रं ददर्श । केचित्साहसिकाः 'त्रिलोचनम्' इति पेठुः । त्र्यम्ब त्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छा महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति—

पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।
उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥

पर्यङ्केति ॥ पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धमृजु श्चर्ज्वायतस्तं संनमितावुभावंसौ यस्य तं तथोक्तम् । वृत्तिविषये उभशब्द उभयशब्दप्रयोग इत्युक्तं कैयटेन । उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य संनि संस्थानं तस्मादङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् । वीरा वसिष्ठः—'एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्त वीरासनमुदाहृतम् ॥' इति । तथा योगसारे—'उत्तानिते करतले करमुत्ता परम् । आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥' इति ॥

भुजंगमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥

भुजंगमेति ॥ भुजंगमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तं । कर्णावसक्तम् । कर्णावलम्बीत्यर्थः । अतएव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमा यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्ध युक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम् ॥

किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥

किंचिदिति ॥ किंचित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्र ताराः कनीनिका येषां तैः । 'तारकाक्ष्णः कनीनिका' इत्यमरः । भ्रूविक्रिया भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैरविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिर प्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः । त्रिनेत्रत्वाद्बहुवचनम् । लक्ष्यीकृत

१ त्रिलोचनम्. २ उद्बद्ध; आबद्ध. ३ कर्णावतंस. ४ मृगत्वचम्. ५ वि ६ लक्षीकृत.

ग्राग्रनिविष्टदृष्टिमित्यर्थः । 'करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मानं ये ध्यायेन्नासाग्रन्यस्तलोचनः ॥' इति योगसारे ॥

अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगम् ।
अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥४८॥

अवृष्टीति ॥ अन्तश्चरन्तीत्यन्तश्चरास्तेषां मरुतां प्राणादीनां निरोधाद्धेतोष्टिसंरम्भमविद्यमानवर्षसंभ्रममम्बुवाहमिव स्थितम् । एतेन प्राणनिरोधः चेतः । अनुत्तरंगमनुद्भूततरंगमपामाधारं ह्रदमिव स्थितम् । एतेनापाननिः सूचितः । तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम् । न शेषवायुनिरोधः सूचितः । 'निवातावाश्रयावातौ' इत्यमरः ॥

कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ४९

कपालेति ॥ कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तो रन्ध्रात् । पञ्चम्यास्तसिल् । उदितैरुद्भूतैर्ज्योतिःप्ररोहैस्तेजोङ्कुरैर्मृणालसूत्राधिकं कुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥

मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो[2] विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥५०॥

मन इति ॥ नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः संचारो यस्य तथोक्तम् । समाधिना प्रणिधानेन वश्यं वशंगतम् । यत्प्रत्ययः । 'प्रणिधानं माधानं समाधिश्च समाश्रयः' इति हलायुधः । मनो हृदि हृदयाख्येऽधिने व्यवस्थाप्य । तथा च वसिष्ठः—'यतो निर्याति विषयान्यस्मिंश्चैव प्रलीते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥' इति । क्षेत्रविदः क्षेत्रज्ञाः रूपाः यं न क्षरतीत्यक्षरमविनाशिनं विदुर्विदन्ति । 'विदो लटो वा' इति र्झुस् । तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्वन्तम् । स्वातिरेकेण मात्मनोऽभावादिति भावः ॥

स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥

स्मरेति ॥ स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषक्षमदूरात्पश्यन् । साध्वसेन सन्नहस्तो विश्लथपाणिः सन् । स्वहस्तात्स्रस्तं शरं पमपि चापं च नालक्षयन्न विवेद । भीतो मुह्यतीति भावः ॥

निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५२ ॥

---

१ निर्वात. २ वेदविदः ।

निर्वाणेति ॥ अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम्। नष्ट त्यर्थः। अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण संधुक्षयन्तीव पुनरु न्तीव स्थिता वनदेवताभ्यां सखीभूताभ्यामनुप्रयातानुगता स्थावरराज पार्वत्यदृश्यत दृष्टा ॥

तामेवाह चतुर्भिः—

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम्।
मुक्ताकलापीकृतसिन्धुवारं[1] वसन्तपुष्पाभरणं वहन्ती ॥ ५

अशोकेति ॥ अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन त क्तम्। आकृष्टहेमद्युतीन्याहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथो मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत्। 'सिन् न्द्वसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः। वसन्तपुष्पाण्येवाभरणं वहन्ती

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करा
[2]पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५

आवर्जितेति ॥ स्तनाभ्यां किंचिदावर्जितेवेषदानमितेव। तरुणार्कस्य इव रागो यस्य तत्। बालार्कारुणमित्यर्थः। उपमानपूर्वपदो बहुव्रीहिरुत्त लोपश्च। वासो वसानाच्छादयन्ती। अतएव पर्याप्तपुष्पस्तबकावनम्रा पल्ल किसलयवती संचारिणी लतेव। स्थितेति शेषः ॥

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदाम[3]काञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव[4] कार्मुकस्य

स्रस्तामिति ॥ स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां नि क्षेपीकृताम्। कर्मणि प्रभवतीति कार्मुकं धनुः। 'कर्मण उकञ्' इत्युकञ्प्रत्य तस्य द्वितीयां मौर्वीमिव स्थिताम्। अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनि नायोपयुज्यत इति भावः। नितम्बात्स्रस्तां चलितां केसरदाम बकुलमाला काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती ॥

सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम्।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ५

सुगन्धीति ॥ सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णम्। बिम्बतुल्योऽधरो बिम्बाध 'वृत्तौ मध्यपदलोपः स्यात्' इति वामनः। तस्यासन्नचरं संनिकृष्टचरं द्वि भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिश्चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती

१ सिन्दुवारम्. २ सुजातपुष्प. ३ पुष्पकाञ्चीम्. ४ द्वितीयमौर्वीमिव.

तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः[1] स्वकार्यसिद्धिं[2] पुनराशशंसे[3] ॥५७॥

तामिति ॥ सर्वावयवेष्वनवद्यामगर्ह्याम् । 'अवद्यपण्य–' इति निपातः । ः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानाम् । न्यूनतामावहन्तीमि- ः । तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये । दुर्जयेऽपीत्यर्थः । शू- नि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे । पूर्वं 'साध्वससन्नहस्तः' ३।५१ ) इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥

[4]भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।
योगात्स [5]चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥५८॥

भविष्यत इति ॥ उमा च भविष्यतः पत्युः शंभोः प्रतिहारभूमिं द्वारदेशं नाससाद । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । स शंभुश्चान्तः परमात्मेति संज्ञा य तत्परं मुख्यम् । 'परं दूरान्मुख्येषु' इति यादवः । ज्योतिर्दृष्ट्वा साक्षा- त्य योगाद्ध्यानात् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । उपार- मोपारतः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥

ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥५९॥

तत इति ॥ ततो भुजंगाधिपतेः शेषस्य फणाग्रैरधो भूमेरधः कथंचिदति- ष्टेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः । वायुधारणाहित- वनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ्निरुद्धानां मुक्तिः पुनः संचारो येन स कृतप्राणविमुक्तिरीशो निबिडं दृढं पर्यङ्कबन्धं रासनं बिभेद शिथिलीचकार ॥

तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रा[6]नुमतप्रवेशाम् ॥ ६० ॥

तस्मा इति ॥ अथ नन्दी तस्मै भगवते । क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य मस्कृत्य शुश्रूषया सेवया निमित्तेनोपेताम् । सेवार्थमागतामित्यर्थः । शैल- तां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्र- शामङ्गीकृतप्रवेशामेनां शैलसुतां प्रवेशयामास च ॥

तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥

---

१ पुष्पकेतु. २ स्वकर्मसिद्धिम्. ३ आशशंस. ४ उपासितुं सा च पिनाकपाणिम्. ५ अन्तर्गतम्. ६ अनुमित.

तस्या इति ॥ तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लु चितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य पुष्पोच्चयः पुष्पप्रकारः । 'हस्तादाने चेरस्तेये' इति घञ्विषयत्वात्कवीना मादिकः प्रयोग इति वल्लभः । त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्क व्यकीर्यत विक्षिप्तः ॥

**उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम्**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६**

उमेति ॥ उमापि नीलालकानां मध्ये शोभत इति तथोक्तम् । अल मित्यर्थः । नवकर्णिकारं विस्रंसयन्ती कर्णाच्युतः पल्लवो यस्य तेन मूर्ध्ना ध्वजाय प्रणामं चकार । क्रियाग्रहणात्संप्रदानत्वम् ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥**

अनन्येति ॥ सा कृतप्रणामा देवी भवेन हरेण । अन्यां न भजतीति न्यभाजम् । 'भजो ण्विः' इति ण्विप्रत्ययः । सर्वनाम्नो वृत्तिमात्रे पूर्वपद द्भावः । पतिमाप्नुहीति तथ्यं सत्यमेवाभिहितोक्ता । उत्तरत्र तथैव संभ भावः । अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः । तथाहि । व्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने । 'लोकस्तु भुवने इत्यमरः । विपरीतं विसंवादिनमर्थमभिधेयं न पुष्णन्ति । न बोधयन्ती

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ६४**

काम इति ॥ कामस्तु बाणावसरं प्रतीक्ष्योमासंनिधानादयमेव बाणप्र समय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवच्छलभवत् । 'समौ पतङ्गशलभौ' मरः । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । वह्निमुखं विविक्षुः मिच्छुः । विशतेः सन्नन्तादुप्रत्ययः । उमायाः समक्षमक्ष्णः समीपमुमासम 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तोऽच्प्रत्ययः । हरे बद्धलक्ष्यः शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥

**अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥**

अथेति ॥ अथ गौरी । तपोऽस्यास्तीति तपस्वी । 'अस्मायामेधास्रजो इति विनिप्रत्ययः । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण मतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बी तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥

प्रतिग्रहीतुमिति ॥ त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात्तामक्षमालां तिग्रहीतुं स्वीकर्तुमुपचक्रमे । पुष्पं धनुर्यस्य स पुष्पधन्वा कामश्च । 'वा संज्ञाम्' इत्यनङादेशः । संमोह्यतेनेनेति संमोहनं नाम । नामेति प्रसिद्धौ । अमोघं णं सायकं धनुषि समधत्त संहितवान् ॥

हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥६७॥

हर इति ॥ हरस्तु हरोऽपि चन्द्रोदयारम्भेऽम्बुराशिरिव किंचिदीषत्परिलुप्तधैर्यः । न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । बिम्बफलतुल्योऽधरोष्ठो स्य तस्मिन्नुमामुखे विलोचनानि व्यापारयामास । त्रिभिरपि लोचनैः साभिषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥

विवृण्वतीति ॥ शैलसुतापि स्फुरद्बालकदम्बकल्पैर्विकसत्कोमलनीपसदृशैः । लकितैरित्यर्थः । 'ईषदसमाप्तौ–' इत्यादिना कल्पप्प्रत्ययः । अङ्गैर्भावं रत्याख्यं वृण्वती प्रकाशयन्ती चारुतरेण पर्यस्तविलोचनेन व्रीडाविभ्रान्तनेत्रेण मुखेना-चि साचि संपद्यमाना साचीकृता तिर्यक्कृता । 'तिर्यगर्थे साचि तिरः' इत्य-रः । तस्थौ । ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्याप्युदितो रतिभाव इति भावः ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

अथेति ॥ अथायुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रिनेत्रो वशित्वाज्जिते-न्द्रियत्वादिन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं पुनर्बलवद्दृढं निगृह्य निवार्य स्वचे-तोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

स इति ॥ स भगवान्दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसमा-कुञ्चितः सव्यपादो यस्य तम् । आलीढाख्यस्थानके स्थितमित्यर्थः । चक्रीकृत-चारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श ।

१ परिवृत्त.

आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रि वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति ॥ समानौ स्यात्समपदम् पदमग्रतः । दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥' इति ॥

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥

तप इति ॥ तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्ध भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन्नुदी उदर्चिरुद्धूतज्वालः कृशानुरग्निः सहसातर्कितमेव । 'अतर्किते तु सहसा' मरः । निष्पपात किल निश्चक्राम खलु ॥

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ७

क्रोधमिति ॥ हे प्रभो स्वामिन्, क्रोधं संहर संहर निवर्तय नि 'चापले द्वे भवत इति वक्तव्यम्' इति वार्तिकेन द्वित्वम् । 'संभ्रमेण वृ पलम्' इति काशिका । इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि य रन्ति प्रवर्तन्ते तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रज 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । स वह्नि भस्मैवावशेषो यस्य तं भस्मावशेषं चकार । ददाहेत्यर्थः ॥

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥

तीव्रेति ॥ तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसंभवेन । 'अभिषङ्ग भवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्रा । रतिर्मदनभार्या मु मज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभू सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपका त्वोक्तिः ॥

तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसंनिकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७

तमिति ॥ तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसंनिकर्षं स्त्री निधानं परिहर्तुमिच्छन् । तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः न्तर्दधे ॥

१ परिहर्तुकामः सोऽन्तर्दधे.

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥

शैलात्मजेति ॥ शैलात्मजा पार्वत्यप्युच्छिरस उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा । समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः । शून्या निरुत्साहा सती कथंचित्कृच्छ्रेण भवनस्याभिमुखी जगाम ॥

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः ॥ ७६ ॥

सपदीति ॥ सपद्यद्रिर्हिमवान्रुद्रस्य संरम्भात्कोपाद्भीत्या । 'संरम्भः संभ्रमे कोपे' इति विश्वः । मुकुलिताक्षीं निमीलितनेत्राम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीष् । अनुकम्पितुमर्हामनुकम्प्याम् । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत्सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् । पन्थानं प्रतिगता मार्गानुसारिणी गतिर्यस्य स प्रतिपथगतिरासीत् । पन्थानमनुसृत्य जगामेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।



मूर्च्छिता रतिरित्युक्तम् । संप्रति तद्वृत्तान्तमेवाह—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥

अथेति ॥ अथानन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा मोहपरायणा

---

१ अथ स. २ दीर्घीकृतात्मा.

मोहैकशरणा सती । 'परायणमभिप्रेते तत्परे परमाश्रमे' इति यादवः । मूढत्वान्निश्चेष्टा कामवधू रतिः । असह्या दुःसहा वेदना यस्मिंस्तत्तथो विधवाया गतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैध नवग्रहणं दुःसहत्वद्योतनार्थम् । प्रतिपादयिष्यतानुभावयिष्यता । क्रियायां लृट् । विधिना दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः । विबो वैधव्यानुफलोऽयं विधिरिति भावः । अस्मिन्सर्गे वियोगिनीवृत्तानि— ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥

**अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।**
**न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्त[1]दर्शनम् ॥ २ ॥**

अवेति ॥ सा रतिः प्रलयान्ते मूर्च्छावसाने । 'प्रलयो नष्टचेष्टता' इत्य उन्मिषिते उन्मीलिते विलोचने । अवधानं परं प्रधानं ययोस्तेऽवधानप क्षयावहिते चकार । द्रष्टव्याभावात्तु न विवेदेत्याह—नेति । प्रियं काम योस्तृप्तिं न गतयोः । नित्यदिदृक्षमाणयोरित्यर्थः । तयोर्लोचनयोः । दर्शन पेक्षया संबन्धे षष्ठी । अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्म तमत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती । प्रियनाशापरिज्ञाना चक्र इति तात्पर्यार्थः ॥

**अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।**
**ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥**

अयीति ॥ अयीति प्रश्ने । 'अयि प्रश्नानुनययोः' इति विश्वः । अयि तनाथ, जीवसि प्राणिषि कच्चिदित्यभिधायोत्थितया तया रत्या पुरोऽग्रे पुरुषस्याकृतिरिवाकृतिर्यस्य तत्पुरुषाकृति केवलमेकं हरकोपानलभस्म दृष्टम् । न तु पुरुष इति भावः ॥

**अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसर[2]स्तनी ।**
**विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥**

अथेति ॥ अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालि सरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ सा तथोक्ता । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । विकीर्ण विकीर्णा विक्षिप्ता मूर्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं मिम् । तत्रत्यान्प्राणिन इत्यर्थः । 'जानपदकुण्डगोणस्थल-' इत्यादिना समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती । 'विलापः प नम्' इत्यमरः ॥

१ निमग्न.   २ धूसराकृतिः.

उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥५॥

उपेति ॥ तव यत्करणं गात्रम् । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' अमरः । कान्तिमत्तया सौन्दर्येण हेतुना विलासिनां विलसनशीलानाम् । कषलस-' इत्यादिना घिनुण्प्रत्ययः । उपमीयते येन तदुपमानमभूत् । करणमिदमीदृशीं दशामवस्थां गतम् । भस्मीभूतमित्यर्थः । तथापि न विदीर्ये विदीर्णा भवामि । कर्तरि लट् । तथाहि । स्त्रियः कठिनाः खलु । कठिनत्वाद-दीर्यमाणत्वमित्यर्थः । कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः । 'धीरसंचारिणी गतिर्गोवृषभाञ्चिता । स्मितपूर्वं तथालापो विलास इति कीर्तितः ॥' इति ॥

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥ ६ ॥

क्वेति ॥ हे प्रिय, क्षतसेतुबन्धनो भग्नसेतुबन्धो जलसंघातो जलौघो नलि-नीमिव । जलैकायत्तजीवितामिति शेषः । त्वदधीनजीवितां त्वदायत्तप्राणां मां नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन् विद्रुतः पलायितोऽसि । सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम् । सुहृदो भावः सौहृदम् । युवादित्वादण्प्रत्ययः । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः । अणि हृद्भावान्न 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । हृद्भूतस्या-विधाने तूभयपदवृद्धिः स्यात् । यथा सुहृदो भावः सौहार्दमिति । तदेवाह वामनः—'सौहृददौर्हृदशब्दावनणि हृद्भावात्' इति ॥

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥

कृतेति ॥ हे प्रिय, त्वं मे मम विप्रियमप्रियं कृतवान्नासि । मया च ते तव प्रतिकूलमप्रियं न कृतम् । अकारणं निष्कारणमेव । परस्परापकाररूपकारणा-भावेऽपीत्यर्थः । क्रियाविशेषणमेतत् । विलपन्त्यै । त्वद्दर्शनार्थिन्या अपीति भावः । रतये किं कथं दर्शनं न दीयते । क्रियाग्रहणाच्चतुर्थी ॥

विप्रियमाशङ्कते—

स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा[1] ॥ ८ ॥

स्मरसीति ॥ हे स्मर, गोत्रस्खलितेषु नामव्यत्यासेषु । 'गोत्रं नाम्न्यचले कुले' इति विश्वः । मेखलागुणैर्बन्धं स्मरस्युत स्मरसि वा । 'विकल्पे किं किमूत च' इत्यमरः । च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तान्यवतंसोत्पल-

१ ताडनानि च.

ताडनानि । सधूलिक्षेपताडनानीत्यर्थः । स्मरसि वा । अपकारस्मरणादि
नमिति भावः ॥

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥

हृदय इति ॥ हृदये वससीति स्मरवाक्यानुवादः । इत्येवंरूपं मत्प्रि
वोच उक्तवानसि । ब्रूञो लुङि 'वच उम्' इत्युमागमः । तत्कैतवमवैमि
मन्ये । इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचार
स्थानम् । कैतवस्थानमिति यावत् । न चेत्त्वमनङ्गोऽशरीरः । कथं रति
ऽविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥

नच मे कश्चिद्विचारः किंतु लोकः शोच्यत इत्याह—

परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥

परलोकेति ॥ परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य । अनेना
नकालानतिपातः सूच्यते । तव पदवीं मार्गं प्रतिपत्स्ये । त्वामनुगमि
त्यर्थः । अतो मे नास्ति विचार इति भावः । किंतु विधिना दैवेनैष जनो
वञ्चितः प्रतारितः । देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु । अधिशब्द
ण्डादित्वात् 'सप्तमी शौण्डैः' इति समासः । 'अध्युत्तरपदात्' इति खप्र
एवमन्यत्रापि सुखप्रदाभावे कुतः सुखमिति भावः ॥

तदेवाह—

रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥

रजनीति ॥ हे प्रिय, रजनीतिमिरेणावगुण्ठित आवृते पुरमार्गे घन
विक्लवा गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां
'अन्यारादितरर्ते–' इत्यादिना पञ्चमी । क ईश्वरः शक्तः । न कश्चिदित्यर्थ
हि कामान्धानां भीतिरस्तीति भावः ॥

नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥ १

नयनानीति ॥ अरुणानि नयनानि घूर्णयन्भ्रमयन् । तथा पदे पदे
दम् । वीप्सायां द्विरुक्तिः । वचनानि स्खलयन्विपर्यासयन्प्रमदानां वा
मदो मद्यमदोऽधुना त्वय्यसति विडम्बनानुकृतिमात्रम् । मदनाभावे
निष्फलत्वादिति भावः । तथा च शिशुपालवधे—'तां मदो दयितसंगम
( १० । ३३ ) इति ॥

अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥

अवगम्येति ॥ हे अनङ्ग अशरीर, प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं [कथी]कृतमकथा कथा संपद्यमानं कृतं शब्दमात्रावशिष्टमवगम्य ज्ञात्वा निष्फलो[दयः]। उद्दीप्याभावादुद्दीपनवैफल्यमिति भावः । निशाकरश्चन्द्रो बहुले कृष्ण[पक्षे] गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रान्मोक्ष्यति । वृथा वृद्धिरिति [मन्त]यिष्यत इत्यर्थः ॥

हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥

हरितेति ॥ हरितं चारुणं च । 'वर्णो वर्णेन' इति तत्पुरुषः । हरितारुणं [चा]रु बन्धनं वृन्तं पुङ्खश्च यस्य स तथोक्तः । कलेन मधुरेण पुंस्कोकिलशब्देन [पुं]स्कोकिलनादेन सूचितोऽनुमापितश्च । चूतचर्वणकार्यत्वात्कलशब्दस्येति [भा]वः । नवचूतप्रसवो नवचूतकुसुमं संप्रति कस्य बाणतां शरत्वं गमिष्यति [न कस्यापि]। अन्यस्य पुष्पबाणस्याभावादिति भावः ॥

अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम् ॥ १५ ॥

अलीति ॥ त्वयानेकशो बहुशो धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुण[क]र्मणि च नियोजिताधिकृतेयमलिपङ्क्तिः करुणस्वनैर्दीनस्वनैर्विरुतैः कूजितैर्गु[रुश]ोकां दुर्भरदुःखाम् । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दा[र्णव]ः । मामनुरोदितीव । उपसर्गात्सकर्मकत्वम् । 'रुदादिभ्यः सार्वधातुके' [इ]डागमः ॥

प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥

प्रतिपद्येति ॥ तावत्पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्योत्थितः [स]न् । मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रति[दू]तिपदेषु सुरतदूतीस्थानेष्वादिशाज्ञापय । प्रगल्भानामेव दौत्याधिकार इति [भा]वः । ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वः । 'अपि माषं मषं कुर्या[च्छ]न्दोभङ्गे त्यजेद्गिरम्' इति केचित् । 'उणादयो बहुलम्' इति बहुलग्रहणाद्ध्रस्व [इ]ति वल्लभः ॥

शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे ॥१७॥

---

१ स्वरैः. २ परपुष्टा.

शिरसेति ॥ हे स्मर, शिरसा प्रणिपत्य याचितानि सवेपथूनि स्त्र 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः । सात्त्विकान्तरोपलक्षणमेतत् । 'स्तम्भप्र माञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' उपगूढान्यालिङ्गनानि च । नपुंसके भावे क्तः । तान्यनुभूतप्रकाराणि रह सुरतानि च संस्मृत्य मे शान्तिर्नास्ति । अत्र समानकर्तृकत्वं दुर्घटं समा पेक्षास्तीति केचित् ॥

रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥

रचितमिति ॥ हे रतिपण्डित रतिकुशल, त्वया ममाङ्गेष्ववयवेषु रचितम् ऋतुरस्य प्राप्त आर्तवं वासन्तम् । 'ऋतोरण्' इत्यण्प्रत्ययः । प्रसाधनं पुष्पाभरणमिदं ध्रियतेऽवतिष्ठते । 'धृञ् अवस्थाने' इति धातो दिकात्कर्तरि लट् । तव तत्प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते ॥

विबुधैर[1]सि यस्य दारुणैरसमाप्ते परिकर्मणि[2] स्मृतः ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १९ ॥

विबुधैरिति ॥ दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति विबुधैर्देवैः । अनभिज्ञत्वं च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसा 'परिकर्म प्रसाधनम्' इत्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं द वामं मे चरणं निर्मितरागं रचितलाक्षारागं कुर्वन्नागच्छ ॥

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥

अहमिति ॥ अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः । शलभे चाग्नौ मार्जारेऽर्के शरे खगे' इति वैजयन्ती । एत्यागत्य पुनस्तेऽङ्का ण्युत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमान इति लट् । हे प्रिय, दिवि स्वर्गे चतुरैः सुरकामिनीजनैरप्सरोगणैर्यावन्न भ्यसे विलोभयिष्यसे । 'यावत्पुरानिपातयोर्लट्' इति लट् ॥

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥

मदनेनेति ॥ हे रमण, त्वामनुयामि यद्यप्यनुगमिष्याम्येव । 'वर्त सामीप्ये वर्तमानवद्वा' इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । रतिर्मदनेन विनाकृता । वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । क्षण जीविता किलेतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥

१ विबुधैस्त्वमनङ्ग. २ प्रतिकर्मणि.

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्किता गतिमङ्गेन च जीवितेन च ॥ २२ ॥

क्रियतामिति ॥ परलोकेऽन्तरितस्य व्यवहितस्य । मृतस्येत्यर्थः । ते तव न्त्यमण्डनं कथं केन प्रकारेण क्रियताम् । क्रियतामित्यत्र कामचारे लोट् ध्यः । द्रुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः । कुतः । अङ्गेन च वितेन च समं सहैवातर्कितामविचारितां गतिं गतोऽसि । इह मृतशरीरमपि स्ति कस्य मण्डनमिति भावः ॥

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्ण[1]धन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं[2] च यत् ॥२३॥

ऋजुतामिति ॥ शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य स्य । 'धनुषश्च' इत्यनङादेशः । ते तव मधुना वसन्तेन सह । 'मधुर्दैत्ये न्ते च चैत्रे च' इति विश्वः । सस्मितां कथामालापं तथा यन्नयनोपान्तवि कितमपाङ्गवीक्षणम् । त इत्यनुषङ्गः । तच्च स्मरामि ॥

क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥

क्वेति ॥ हृदयं गच्छतीति हृदयंगमो हृद्यः । खच्प्रकरणे 'गमेः सुप्युपसंख्या-म्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । ते तव सखा सुमैरायोजितमारचितं कार्मुकं येन स कार्मुकनिर्माता मधुर्वसन्तः क्व नु क्व वा । त इति शेषः । अथवा सोऽप्युग्ररुषा तीव्रकोपेन पिनाकिनेश्वरेण सुहृदा दनेन गतां प्राप्तां गतिम् । भस्मतामित्यर्थः । न गमितः खलु न प्रापितः किम् । 'जिज्ञासानुनये खलु' इत्यमरः ॥

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरै[3]रिवाहतः[4] ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥

अथेति ॥ अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः रैरिवाहतः सन् । 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । मधुर्वसन्त आतुरामापन्नां तिमभ्युपपत्तुमनुग्रहीतुम् । आश्वासयितुमित्यर्थः । 'अभ्युपपत्तिरनुग्रहः' इत्य-रः । आत्मानं पुरोऽदर्शयत् । आविरभूदित्यर्थः ॥

तमवेक्ष्य रुरोद सा भृशं स्तन[5]संबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥

तमिति ॥ सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद । स्तनौ संबाध्य स्तनसं-

१ निषङ्ग; निषक्त. २ विलोकितानि च. ३ दिग्धफलैः. ४ इवार्दितः. ५ गुरु.

बाधम् । 'परिक्लिश्यमाने च' इति णमुल् । उरो जघान ताडितवती
तथाहि । स्वजनस्याग्रतो दुःखं विवृतमपसारितं द्वारं कपाटं यस्य तदिवो
आविर्भवति । उच्छृङ्खलं प्रवर्तत इत्युत्प्रेक्षाभिप्रायः ॥

**इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।**
**तदिदं[1] कणशो विकीर्यते[2] पवनैर्भस्म कपोतकर्बुरम्[3] ॥ २७**

इतीति ॥ दुःखमस्याः संजातं दुःखिता । संजातदुःखेत्यर्थः । तारका-
दितच् । सा रतिरेनं वसन्तमित्युवाच च । चकारः पूर्वोक्तसमुच्चयार्थः ।
सन्त, पश्य सुहृदस्त्वत्सखस्य किं स्थितं किमुपस्थितं तदिदं कपोतकर्बुरं
वतशबलं कणशश्चूर्णीभूतम् । अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैर्विकीर्यते
प्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥

**अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।**
**दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८**

अयीति ॥ अयि स्मर, संप्रति दर्शनं देहि । एष माधवो वसन्तः
त्सुकस्त्वद्दर्शनोत्कण्ठितः । त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्य
नृणां पुरुषाणां दयितासु प्रेमानवस्थितमस्थिरम् । चलमित्यर्थः । सुहृज्जने
तु न चलं खलु ॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह—

**अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।**
**विसतन्तुगुणस्य कारितं धनुषः पेलव[4]पुष्पपत्रिणः ॥ २९ ॥**

अमुनेति ॥ ननु मदन, पार्श्ववर्तिना सहचरेणामुना वसन्तेन ससु
सुरासुरसहितं जगद्विसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि कोम
पुष्पाण्येव पत्त्रिणो बाणा यस्य तस्य तव धनुष आज्ञां कारितम् । जगद्
कारितेत्यर्थः । 'हृक्रोरन्यतरस्याम्' इति जगतः कर्मत्वम् ॥

**गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।**
**अहमस्य दशेव पश्य मामविषह्यव्यसनेन[5] धूमिताम् ॥ ३०**

गत इति ॥ स ते सखाऽनिलाहतो वायुताडितो दीप इव गत एव
निवर्तते । अहमस्य दीपायमानस्य दशा वर्तिरिव । तिष्ठामीति शेषः । '
वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि' इति विश्वः । कुतः । अविषह्यव्यस
सोढुमशक्यदुःखप्रकर्षेण धूमितां संजातधूमां मां पश्य । धूमवत्त्वान्
दशासाम्यं धूमश्च व्यसनमेवेत्यर्थः ॥

---

१ यदिदं. २ प्रकीर्यते. ३ कपोतपाण्डुरम्. ४ कोमल; पेशल. ५ व्यसनप्रधूमिता

विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ ३१ ॥

विधिनेति ॥ ननु वसन्त, कामवधे मदनवधे मां विमुञ्चता वर्जयता । ...ारयतेत्यर्थः । विधिना दैवेन । विशसति हिनस्तीति विशसो घातुकः । ...ाद्यच् । विशसस्य कर्म वैशसम् । युगादित्वादण्प्रत्ययः । अर्धवैशसमर्धवधः ...म् । 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः । पत्युः स्वस्य चाश्रयाश्र-भूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः । तथा चैकदेशवधे देशान्तरस्यापि वध-...मनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्यम् । एतदेवोपपादयति—...पायिन्यनपायित्वेन विश्वस्ते संश्रयद्रुम आश्रयवृक्षे गजभग्ने सति वल्लरी ...ा पतनाय । भवतीति शेषः । पतितुमेव साऽलमित्यर्थः । 'तुमर्थाच्च भावव-...नात्' इति चतुर्थी ॥

संप्रत्यनन्तरकर्तव्यं प्रार्थयते—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥

तदिति ॥ तत्तस्मात्कारणादुक्तप्रकारेण । अन्यथापि मरणस्यावश्यंभावादि-...र्थः । अनन्तरं भवतेदं वक्ष्यमाणं बन्धुजनप्रयोजनं बन्धुकृत्यं क्रियताम् । ...र्थनायां लोट् । तदेवोपदिशति—ननु वसन्त, विधुरां विवशां मां ज्वलना-...सर्जनादग्निदानात्पत्युरन्तिकं प्रापय । अग्निप्रवेशनं कारयेत्यर्थः ॥

कर्तव्यश्चायमर्थः स्त्रीणामित्याह—

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

शशिनेति ॥ कौमुदी चन्द्रिका शशिना सह याति । शशिन्यस्तमिते स्वयं ...श्यतीत्यर्थः । तडित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति । कर्तरि लट् । ...मदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्य इत्येत-...चेतनैः । अविवेकिभिरपीत्यर्थः । नाथस्तु 'पृथग्जनैः' इति पपाठ । ...तिपन्नं ज्ञातम् । 'अलवणा यवागूः' 'अनुदरा कन्या' इतिवदल्पत्वाभिप्रायेण ...विचेतनैरपीति निर्देशः । पतिवर्त्मगा इत्यत्र स्मृतिः—'आर्तार्ते मुदिते हृष्टा ...षिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥' इति ॥

अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥

अमुनेति ॥ अमुना पुरोवर्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव ।

१ अनघापि हि. २ संश्रिता द्रुमे. ३ भर्तुः. ४ विलीयते.

एवकारो मण्डनान्तरविवृत्त्यर्थः । कषायितस्तनी रञ्जितस्तनी । 'रागे कषायोऽस्त्री निर्यासे सौरभे रसे' इति वैजयन्ती । नवपल्लवसंस्तरे यथा ल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि । निधास्यामीत्यर्थः

कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।
कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥

कुसुमेति ॥ हे सौम्य साधो, त्वमावयो रतिपञ्चबाणयोर्बहुशो कुसुमास्तरणे पुष्पशयने सहायतां गतः । संप्रति प्रणिपाताञ्जलिना या अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । आशु मे चितां काष्ठचयं कुरु कुरुष्व । तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥

तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥

तदन्विति ॥ तच्चिताकरणमन्वनन्तरं मय्यर्पितं मदर्पितं ज्वलनमग्निं णवातवीजनैर्मलयमारुतसंचारणैस्त्वरयेः । त्वरितं ज्वलयेत्यर्थः । त्वराहेतु ते तव विदितं खलु । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । तयो र्तरि षष्ठी । यथा येन प्रकारेण स्मरो मां विना क्षणमपि नोत्सहते न ह तथा त्वया ज्ञातमेवेत्यर्थः ॥

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र [1]तं मया सहितः पास्यति ते स बान्धवः ॥

इतीति ॥ अपि चेत्येवं विधाय कृत्वा नावावाभ्यामेक एव सलिलस्या दीयताम् । तमञ्जलिं स ते बान्धवः सखा स्मरः परत्र परलोके मया सहितो भज्य पास्यति ॥

परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥ ३८

परलोकेति ॥ किंच हे माधव वसन्त, परलोकविधौ पिण्डोदकादि स्मरमुद्दिश्य विलोलाः पल्लवा यासु ताः सहकारमञ्जरीश्चूतवल्लरीर्निवपे हि यस्मात्कारणात्ते सखा स्मरः प्रियाश्चूतप्रसवा यस्य स तथोक्तः ॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोष[2]विक्लवां प्रथमा वृष्टिरिवान्वकम्पयत्[3] ॥ ३९

इतीति ॥ इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् कृतनि भिति यावत् । रतिमाकाशभवा सरस्वत्यशरीरा वाग्घ्रदशोषविक्लवां

१ यत्. २ विह्वलाम्. ३ अन्वकम्पत.

ाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम् । 'प्रोष्ठी तु शफरी द्वयोः' इत्य-
। प्रथमा वृष्टिर्वर्षमिवान्वकम्पयदनुकम्पितवती । सदयमुवाचेत्यर्थः । 'कृपा
ानुकम्पा स्यात्' इत्यमरः ॥

**कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।**
**शृणु येन स कर्मणा गतः शलभत्वं हर[1]लोचनार्चिषि ॥ ४० ॥**

कुसुमेति ॥ हे कुसुमायुधपत्नि रते, तव भर्ता चिराच्चिरं दुर्लभो न
ष्यति । किंत्वचिरमेव सुलभो भविष्यतीत्यर्थः । किंच शृणु । तत्कर्मेति
: । येन कर्मणा स ते भर्ता हरलोचनस्यार्चिर्ज्वाला । 'ज्वाला भासो न-
र्चिः' इत्यमरः । तस्मिञ्शलभत्वं पतङ्गत्वं गतः । 'समौ पतङ्गशलभौ'
मरः ॥

तदेव कर्मोपाचष्टे—

**अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।**
**अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥**

अभिलाषेति ॥ उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेति शेषः । प्रजापति-
ा स्वसुतायां सरस्वत्यामभिलाषमनुरागमकरोत् । अथ तेन प्रजापतिना
क्रियामिन्द्रियविकारं निगृह्य निरुध्याभिशप्तः सन् । एतत्फलं दाहात्मकं स्व-
र्मफलमन्वभूत् ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

**परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।**
**उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नि[2]योजयिष्यति ॥ ४२ ॥**
**इति चाह स धर्मयाचितः [3]स्मरशापावधिदां सरस्वतीम् ।**
**अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥**

परिणेष्यतीति । इतीति च ॥ धर्मेण धर्माख्यप्रजापतिना याचितः
र्थितः स भगवान्ब्रह्मा । तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतोऽभिमुखी-
तो हरः शिवो यदा पार्वतीं परिणेष्यत्युद्वक्ष्यति तदोपलब्धसुखः प्राप्तानन्दः
न् । स्मरं कामं स्वेन वपुषा नियोजयिष्यति संगमयिष्यति । इत्येवं स्मरशा-
स्यावधिदामवसानदायिनीं सरस्वतीं वाचं चाह । एवं शापावधिमप्युक्तवानि-
र्थः । ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह—वशिनो जितेन्द्रिया-
ाम्बुधराश्चाशनेरमृतस्य चेत्युभयोर्योनयः प्रभवाः । वशिपक्षेऽशन्यमृतशब्दौ
ोपप्रसादपरौ । अन्यत्र वैद्युताम्भ्युदकपरौ । युग्मकम् ॥

१ हरलोचनार्चिषाम्. २ स योजयिष्यति. ३ स्मरशापान्तभवाम्.

तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥ ४

तदिति ॥ हे शोभने, तत्तस्मात्कारणाद्भवितव्यो भविष्यन्प्रियसंगमो तत्तथोक्तमिदं वपुः परिरक्ष । तथाहि । रविपीतजला नदी तपात्यये 'प्रावृट् तपात्यये' इति हलायुधः । पुनरोघेन प्रवाहेण युज्यते संगच्छते

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-[2]
माश्वासयत्सुचरितार्थपदैर्वचोभिः ॥ ४५ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेणादृश्यरूपं किमपि भूतं कश्चि 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः । रतेर्मदनदाराणां व्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार । निवारयामासेत्यर्थः । 'मू पटुनिर्भाग्या मन्दाः' इत्यमरः । अथ कुसुमायुधबन्धुर्वसन्तश्च तत्प्रत्य न्भूते विश्वासात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । एन सुष्ठु चरितार्थानि पदानि येषां तैर्वचोभिर्वाक्यैराश्वासयत् । सर्वथा ते प्रसादात्प्रियसंगमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।[3]
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम्

अथेति ॥ अथानन्तरं व्यसनेन दुःखेन कृशा मदनवधू रतिरुपप्लवान्त दवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य । 'सायंचि इत्यादिना ट्युप्रत्ययः । शशिनश्चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालया प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीस ख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः ।

---

१ पूर्यते. २ एताम्. ३ प्रतिपालयांबभूव.

# पञ्चमः सर्गः ।

ा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
नेन्द रूपं हृदयेन पार्वती प्रियेषु[1] सौभाग्यफला हि चारुता ॥ १ ॥

तथेति ॥ पर्वतस्यापत्यं स्त्री पार्वती तथा तेन प्रकारेणाक्ष्णोः समीपे क्षं पुरतः । 'अव्ययं विभक्तिसमीपसमृद्धि–' इत्यादिनाव्ययीभावः । भवं मन्मथं दहता भस्मीकुर्वता पिनाकिनेश्वरेण भग्नः खण्डितो मनोर-भिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं निनिन्द । स्वं रूपं यद्धरमनोहरणाय नालमिति गर्हितवतीत्यर्थः । युक्तं चैतदित्याह— हि । चारुता सौन्दर्यं प्रियेषु पतिषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं कस्याः सा तथोक्ता । सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते । नो फलं तदिति भावः । अस्मिन्सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं ः । 'मृ' इति लक्षणात् ॥

येष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
वाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥२॥

इयेषेति ॥ सा पार्वती समाधिमेकाग्रतामास्थायावलम्ब्य तपोभिर्वक्ष्यमाण-मैः करणभूतैरात्मनः स्वस्यावन्ध्यरूपतां सफलसौन्दर्यं कर्तुमियेषेच्छति स्म । सा शिवं वशीकर्तुमुद्युक्तेत्यर्थः । अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयम-प्यते । किं तद्द्वयम् । तथाभूता विधा प्रकारो यस्य तत्तथाविधं प्रेम स्नेहः अर्धाङ्गहरा हरस्य भवेदिति भावः । तादृशः पतिश्च । यो मृत्युंजय इति वः । द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्तृवाल्लभ्यं जीवद्भर्तृकत्वं चेति । तच्च श्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः । अत्र मनुः—'यद्दुष्करं यद्दुरापं यद्दुर्गं दुस्तरम् । तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥' इति ॥

नेशम्य चैनां तपसे कृतोद्यमां सुतां गिरीश[2]प्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥

निशम्येति ॥ मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां से तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वैनां पार्वतीं वक्षसा रभ्यालिङ्ग्य महतो मुनिव्रतात्तपसो निवारयन्त्युवाच । मुनिव्रतादित्यत्र पि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् 'वारणार्थानामीप्सितः' इति गादानत्वं तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् 'ध्रुवमपायेऽपादानम्'

---

१ प्रिये हि. २ गिरीशं प्रति सक्त; त्रिनेत्रं प्रति सक्त.

७ कु०

इत्यपादानत्वमेव स्यात्। यथाह भाष्यकारः—'यच्च मिथ्या संप्राप्य तच्च ध्रुवमपायेऽपादानमिति प्रसिद्धम्' इति ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह—

**मनीषिताः सन्ति गृहेषु[1] देवतास्तपः क्व वत्से क्व च तावकं
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥**

मनीषिता इति ॥ हे वत्से, मनस ईषिता इष्टा मनीषिताः। शक त्वात्साधुः। देवताः शच्यादयो गृहेषु सन्ति। त्वं ता आराधये तपः क्व। तवेदं तावकम्। 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्प्रत्ययः ममकावेकवचने' इति तवकादेशः। वपुश्च क्व। तथाहि। पेलवं मृदु षपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत। पतत्रिणः पुनः पक्षि न सहेत। अतिसौकुमार्याद्दिव्योपभोगभोग्यं ते वपुर्न दारुणतपःक्षम अत्र दृष्टान्तालंकारः ॥

**इति ध्रुवेच्छामनुशासती[2] सुतां शशाक मेना न नियन्तुमुद्य
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपये**

इतीति ॥ इत्येवमनुशासत्युपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसा पार्वतीमुद्यमादुद्योगात्तपोलक्षणान्नियन्तुं निवारयितुं न शशाक समर्था तथाहि। ईप्सितार्थं इष्टार्थे स्थिरनिश्चयं मनो निम्नाभिमुखं पयश्च कः त्प्रतिकूलयेत्। प्रतिनिवर्तयेदित्यर्थः। निम्नप्रवणं पय इवेष्टार्थाभिनिवि दुर्वारमिति भावः। अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालंकारः ॥

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥**

कदाचिदिति ॥ अथ कदाचिन्मनस्विनी स्थिरचित्ता सा पार्वती म ज्ञमभिलाषाभिज्ञं पितरं हिमवन्तमासन्नसख्याप्तसखी सैव मुखमुपायः निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः। तेन फलोदयः फलोत्प ऽवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थमात्मनः स्वस्यारण्यनिवासं समयाचत। 'दुह्याच्–' इत्यादिना द्विकर्मकत्वम् ॥

**अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डि**

अथेति ॥ अथ गौर्यनुरूपेण योग्येनाभिनिवेशेनाग्रहेण तुष्यतीति त गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्विति कृतानुमति पश्चात्तपःसिद्ध्युत्तरकालं प्रजासु जनेषु तदाख्यया तस्या गौर्याः संज्ञया प्र

[1] गृहेपि. [2] व्रतेच्छाम्.

शिखरमिति प्रसिद्धमित्यर्थः । शिखण्डिमत् । न तु हिंस्रप्राणिप्रचुरमिति
ः । शिखरं शृङ्गं जगाम ययौ ॥

ुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
न्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

विमुच्येति ॥ अहार्यनिश्चयाऽनिवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिर्य-
भः प्रतिसरैः प्रविलुप्तं प्रमुष्टं चन्दनं स्तनान्तगतं येन तं तथोक्तं हारं मुक्तावलीं
च्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण
ीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्तथोक्तं वल्कलं कण्ठलम्बि स्तनो-
यभूतं बबन्ध । धारयामासेत्यर्थः ॥

ा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥

यथेति ॥ तस्या देव्या आननं तदाननं प्रसिद्धैर्भूषितैः । 'प्रसिद्धौ ख्यात-
ितौ' इत्यमरः । रोहन्तीति रुहाः । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः ।
सि रुहास्तैः शिरोरुहैर्मूर्धजैर्यथा मधुरं प्रियमभूत् । 'स्वादुप्रियौ तु मधुरौ'
मरः । जटाभिरप्येवं मधुरमभूत् । तथाहि पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरप-
भिरेव न किंतु सह शैवलासङ्गेन सशैवलासङ्गमपि । 'तेन सहेति तुल्ययोगे'
बहुव्रीहिः । प्रकाशते । शैवलेनापि शोभत एवेत्यर्थः ॥

ेक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम् ।
ारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम् ॥ १० ॥

प्रतीति ॥ सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात्कृतरोमाञ्चां
ुणां त्रिरावृतां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार । तदेव
प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया मौञ्ज्यास्या देव्या रसनागु-
ास्पदं स्थानं जघनम् । सह रागेण सरागं सलोहितमकारि कृतम् । सौकु-
ातिशयादिति भावः ॥

सृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
ाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११ ॥

विसृष्टेति ॥ तया देव्या विसृष्टरागात्त्यक्तलाक्षारसरञ्जनादधरादधरोष्ठान्नि-
तः । 'निसृष्टरागात्' इति पाठे नितरां त्यक्तलाक्षारागात् । रागत्यागेन
प्रयोजनत्वादिति भावः । तथा स्तनाङ्गरागेणारुणितादरुणीकृतात् । पतन-
ये तस्य स्तनयोरुपरोधादिति भावः । कन्दुकाच्च निवर्तितः । कुशाङ्कुराणा-
ानेन लवनेन परिक्षता व्रणिता अङ्गुलयो यस्य स तथोक्तः करः पाणिरक्ष-
प्रणयक्षमालासहचरः कृतः ॥

**महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।**
**अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥**

महार्हेति ॥ महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या परिवर्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म । पुष्पाधिकसौकुमार्यादिति भावः । सा देवी बाहुलतामुपधत्त करोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमा शयितवती । यथा निषेदुष्युपविष्टा च । 'क्वसुश्च' इति क्वसुः । 'उगित ङीप् । भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥

**पुनर्ग्रहीतुं नियमस्थया तया द्वये[1]ऽपि निक्षेप[2] इवार्पितं द्वयम् ।**
**लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥**

पुनरिति ॥ नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनरानेतुं निक्षेपोऽर्पितमिव निक्षेपत्वेनार्पितं किमु । क्वचित् । 'द्वयी प्रामादिकः पाठः । कुत्र द्वये किं द्वयमर्पितमित्याह—तन्वीषु लतासु एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं चञ्चलावलोकि व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्चार्पितमिवेत्युत्प्रेक्षा वस्तुतोऽर्पणमस्तीति भावः ॥

**अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।**
**गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥**

अतन्द्रितेति ॥ सा देवी स्वयमेवातन्द्रितासंजाततन्द्रा सती । ता त्वादितच्प्रत्ययः । वृक्षकान्स्वल्पवृक्षान् । 'अल्पे' इत्यल्पार्थे कप्रत्ययः । स्तनौ तयोः प्रस्रवणैः प्रसृतपयोभिर्व्यवर्धयत् । गुहः कुमारोऽपि प्रथमाप्त प्रथमलब्धजन्मनाम् । अग्रजातानामित्यर्थः । येषां वृक्षकाणां संबन्धि त्सल्यं सुतप्रेम नापाकरिष्यति । उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रव निवर्तिष्यत इत्यर्थः ॥

**अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विश**
**यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥**

अरण्येति ॥ अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन हरिणाश्च तस्यां देव्यां तथा विशश्वसुर्विस्रम्भं जग्मुः । 'समौ विस्रम्भवि इत्यमरः । यथा कुतूहलादौत्सुक्यात्तदीयैर्हरिणसंबन्धिभिर्नयनैर्नेत्रैः स्वकीये लोचने सखीनां पुरः पुरतः । अनेन तेषां संबन्धसहत्वमुक्तम् मीत । अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः । केचित्तु सा

१ द्वयीषु. २ निक्षेपम्. ३ दृष्टिम्.

यैर्नेत्रैः कुतूहलात्पुरोऽग्रे वर्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वा-
मन इत्याहुः । 'माङ् माने' इत्यस्माद्धातोर्लङ् । इयमेव खलु विश्वासस्य परा-
ष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥

तपःप्रभावमाह—

ताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

कृतेति ॥ कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकाम् । कृतहोमामि-
ः । त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं त्वगुत्तरासङ्गवतीम् । अधीत-
त्रा अस्तीत्यधीतिनीं स्तुतिपाठादिकुर्वतीम् । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । तां
ं दिदृक्षवो द्रष्टुमिच्छव ऋषयो मुनयोऽभ्युपागमन्समुपागताः । नचात्र कनि-
त्वादोष इत्याह—धर्मवृद्धेषु वयो न समीक्ष्यते न प्रमाणीक्रियते । सति
ज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः । तथा च मनुः—'न तेन वृद्धो भवति
स्य पलितं शिरः । यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति ॥

रोधिसत्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
टजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

विरोधीति ॥ विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिरुज्झितपूर्वमत्सरं त्यक्तपूर्व-
म् । हिंसारहितमित्यर्थः । द्रुमैरभीष्टप्रसवेनेष्टफलेनार्चिताः पूजिता अतिथयो
स्मिंस्तत्तथोक्तम् । नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः संचिता
ला अग्नयो यस्मिंस्तत्तथोक्तं तच्च तपोवनम् । पावयतीति पावनं बभूव ।
हिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः ॥

ा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।
ानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥

यदेति ॥ सा देवी यदा यस्मिन्काले तावता तावत्प्रमाणेन पूर्वतपःस-
धिना पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं
यं नामंस्त । अशक्यममंस्तेत्यर्थः । तदा तत्काले । अविलम्बेनेत्यर्थः । स्वश-
स्य मार्दवं मृदुत्वं सौकुमार्यमनपेक्ष्याविगणय्य महद्दुश्चरं तपश्चरितुं साधयितुं
क्रम उपचक्रमे ॥

ं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥१९॥

क्लमसिति ॥ या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं
तया देव्या मुनीनां चरितं तीव्रं तपो व्यगाह्यत प्रविष्टम् । अत्रोत्प्रेक्षते—

---

१ सर्वसमाधिसाधनम्. २ हि.

ध्रुवमस्या वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम् । अतएव पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठि तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षम त्प्रेक्षार्थः ॥

**शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ।**

शुचाविति ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजामग्नीनां मध्यगता सती । नेत्रे प्रति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजो विजित्य न विद्यतेऽन्यत्र दृ सानन्यदृष्टिः सती सवितारं सूर्यमैक्षत ददर्श । 'ग्रीष्मे पञ्चाग्निमध्यस्थो स्थण्डिलेशयः' इति स्मरणात् । पञ्चाग्निमध्ये तपश्चचारेत्यर्थः । तत्र पञ्चमोऽग्निः—'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात् ॥

**[1] तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।**
**अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पद**

तथेति ॥ सवितुः सूर्यस्य गभस्तिभिः किरणैस्तथा पूर्वोक्तप्रकारे संतप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमा भावः । किंत्वस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैः श मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम् । तयोः सौकुमार्यादित्यर्थः ॥

**अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।**
**बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्ति[2]व्यतिरिक्तसाधन[3]**

अयाचितेति ॥ अयाचितोपस्थितमप्रार्थितोपनतं केवलमम्बूदकं कस्यामृतमयस्योडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्या णाविधिरभ्यवहारकर्म बभूव । तावन्मात्रसाधनकोऽभूदित्यर्थः । साध्य योरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः । किलेति प्रसिद्धौ । वृक्षा वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणा बभूव । वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसि अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥

**निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा[4] ।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥**

निकामेति ॥ विविधेन पञ्चविधेनेत्यर्थः । नभश्चरेण खेचरेण । आ

१ तथाभितप्तम्; तथापि तप्तम्. २ वृक्षवृत्तिः. ३ साधनम्. ४

त्यर्थः । इन्धनसंभृतेन काष्ठसमिद्धेन वह्निना निकाममत्यन्तं तप्ता साम्बिका त्यये ग्रीष्मान्ते । प्रावृषीत्यर्थः । नवैर्वारिभिरुक्षिता सिक्ता सती भुवा पञ्चा- तसया सहोर्ध्वगमूर्ध्वप्रसृतमूष्माणं बाष्पममुञ्चत् । 'ग्रीष्मोष्मबाष्पमूष्माणम्' । यादवः ॥

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
लिषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः २४

स्थिता इति ॥ उदकस्य बिन्दव उदबिन्दवः । 'मन्थौदन–' इत्यादिनोदक- दस्योदादेशः । प्रथम उदबिन्दवः । प्रथमविशेषणाद्बिन्दूनां विरलत्वं बहुवचना- तिविरलत्वं च गम्यते । तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः । तस्याः र्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां न्द्रत्वं क्षणमिति स्नैग्ध्यं च गम्यते । अनन्तरं ताडितो व्यथितोऽधर ओष्ठो ते तथोक्ताः । एतेनाधरस्य मार्दवं गम्यते । ततः पयोधरयोः स्तनयोरुत्सेध रिभागे निपातेन पतनेन चूर्णिता जर्जरिताः । कुचकाठिन्यादिति भावः । तदनु लीपूदररेखासु स्खलिताः । निम्नोन्नतत्वादिति भावः । इत्थं चिरेण न तु ग्रम् । प्रतिबन्धबाहुल्यादिति भावः । नाभिं प्रपेदिरे प्रविष्टा न तु निर्जग्मुः । न नाभेर्गाम्भीर्यं गम्यते । अत्र प्रतिपदमर्थवत्त्वात्परिकरालंकारः ॥

लाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
लोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः २५

शिलाशयामिति ॥ निरन्तरासु नीरन्ध्रास्वन्तरे मध्ये वातो यासां तादृश्यो वृष्टयस्तास्वन्तरवातवृष्टिषु । न निकेते गृहे वसतीत्यनिकेतवासिनीम् । अना- तदेशवासिनीमित्यर्थः । शिलायां शेत इति शिलाशयां शिलातलशायिनीम् । धिकरणे शेतेः' इत्यच्प्रत्ययः । तां पार्वतीं साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि ज्ञायाम्' इतीनिप्रत्ययः । तस्य कर्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपा- डिन्मयैर्विद्युद्रूपैरुन्मिषितैरवलोकनैर्व्यलोकयन्निव । इवेति चक्षुषा विलोकनमे- त्प्रेक्ष्यते । साक्ष्यं तु 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । हश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति प्रमाणसिद्ध- न्नोत्प्रेक्ष्यमित्यनुसंधेयम् ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा संप्रति हेमन्ते तपश्चरणप्रकारमाह—

नाय सात्यन्तहिमोत्किरानिला[1]: सहस्यरात्रीरुदवासतत्परा ।
रस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावति ॥२६॥

निनायेति ॥ सा पार्वती । उत्किरन्ति क्षिपन्तीत्युत्किराः । 'इगुपधज्ञा-' त्यादिना कः । अत्यन्तं हिमानामुत्किरा अनिला यासु ताः सहस्यरात्रीः पौष-

१ अत्यर्थहिमोत्तरानिलाः.

रात्रीः । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । उदके वास उदवासः । 'पेषं नधिषु च' इत्युदादेशः । उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दि माक्रोशिनि पुरोऽग्रे वियुक्ते विरहिणि । वियोगं प्राप्त इति यावत् । चक्र चक्रवाकश्च चक्रवाकौ तयोश्चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु का वाच्यानवकाशः । 'अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः' इति मनुः

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७॥**

**मुखेनेति** ॥ सा पार्वती निशि रात्रौ पद्मवत्सुगन्धिना सुरभिणा । स्येत्–' इत्यादिनेकारः । प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्रं शोभत इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः प यासां तासामपां सरोजसंधानं पद्मसंघट्टनमकरोदिव । इत्युत्प्रेक्षा पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालंकारो इत्युभयोः संकरः ॥

**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।**
**तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति[1] च तां पुराविदः ॥**

**स्वयमिति** ॥ स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीव तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि । 'काष्ठोत्कर्षे स्थितौ इत्यमरः । तया देव्या पुनस्तत्पर्णवर्तनमप्यपाकीर्णमपाकृतम् । अतः प रणाद्धेतोः । प्रियं वदतीति प्रियंवदा । 'प्रियवशे वदः खच्' इति खच् 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । तां पार्वतीं पुराविदः पुराण करणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सापर्णेति वदन्ति । नामान्तर यार्थश्चकारः । अत्र 'अपर्णाम्' इत्यपपाठः । इतिशब्दाभिहिते द्वितीयानु यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिग प्रायिकत्वात्' इति । स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भव भावः ॥

**मृणालिकापेलव[2]मेवमादिभिर्व्रतैः स्वमङ्गं[3] ग्लपयन्त्य[4]हर्निशम् ।**
**तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥**

**मृणालिकेति** ॥ मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयमङ्ग रमेवमुक्तप्रकारतोयाग्निमध्यवासव्रतमादिर्येषां तैर्व्रतैरहश्च निशा चाहर्नि समाहारे द्वन्द्वैकवद्भावः । अत्यन्तसंयोगे द्वितीया । ग्लपयन्ती कर्शयन्ती पार्वती कठिनैः क्लेशसहैरित्यर्थः । शरीरैरुपार्जितं संपादितं तपस्विनाम्

---

१ अपर्णामिति. २ कोमल. ३ तदङ्गम्. ४ क्षपयन्ति.

दूरमत्यन्तमधश्चकार तिरश्चकार । अतिशिश्य इत्यर्थः । तपस्विभिरप्येवं : कर्तुं न शक्यत इति तात्पर्यार्थः ॥

थाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
वेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥

अथेति ॥ अथानन्तरमजिनं कृष्णमृगत्वक् । आषाढः प्रयोजनमस्येत्याषाढः शदण्डः । 'पालाशो दण्ड आषाढः' इत्यमरः । 'विशाखाषाढादण्मन्थदयोः' इत्यण्प्रत्ययः । तयोर्धरस्तथोक्तः प्रगल्भवाक्प्रौढवचनो ब्रह्ममयेन वैदि तेजसा । ब्रह्मवर्चसेनेत्यर्थः । ज्वलन्निव स्थितः । इवशब्दो निर्धारणार्थः । श्चिदनिर्दिष्टो जटिलो जटावान् । ब्रह्मचारीति शेषः । पिच्छादित्वादिलच्प्रत्ययः । रीरबद्धो बद्धशरीरः । शरीरवानित्यर्थः । वाहिताग्न्यादिषु पाठात्साधुः । प्रथश्रमो यथा ब्रह्मचर्याश्रम इव । यथाशब्द इवार्थे । तपोवनम् । देव्या इति : । विवेश प्रविष्टवान् ॥

मातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
वन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ३१

तसिति ॥ अतिथिषु साध्व्यातिथेयी । 'पथ्यतिथि–' इत्यादिना ढञ्प्रत्ययः । टिड्ढाणञ्–' इत्यादिना ङीप् । पार्वती तं ब्रह्मचारिणं बहुमानपूर्वया । बहुमानः, र्वो यस्यास्तया । गौरवपूर्वयेत्यर्थः । सपर्ययार्चया । 'सपर्यार्चार्हणाः समाः' इत्य: । प्रत्युदियाय प्रत्युज्जगाम । कथं समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत ह—साम्ये सत्यपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु व्यक्तिविशेषेष्व शयितं गौरवं यासु ता अतिगौरवा अतिगौरवसहिताः क्रियाश्चेष्टा भवन्ति । र्तन्त इत्यर्थः । साधवो न साम्याभिनिवेशिन इति भावः ॥

धिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
मां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥

विधीति ॥ स ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां सत्क्रियां पूजां परिगृह्य कृत्य क्षणं परिश्रमं विश्रामं च विनीय नाम । नामेत्यपरमार्थे । अथोमामृजु विलासरहितेनैव चक्षुषा पश्यन्ननुज्झितक्रमोऽत्यक्तोचितपरिपाटीकः सन् । कुं प्रचक्रमे प्रारेभे ॥

पि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
पि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥

---

२९—३० श्लोकयोर्मध्ये प्रक्षिप्तोऽयं दृश्यते—

सुराः समुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शंभुवशक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजिहेतुम् ॥ १ ॥

१ प्रतिगृह्य. २ अपि. ३ अपि. ४ अपि. ( १ तदुद्वीक्ष्य. २ हेतवे. )

अपीति ॥ अत्रापिशब्दः प्रश्ने । क्रियार्थं होमादिकर्मानुष्ठानार्थम् । कुशाश्च समित्कुशम् । 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः । सुलभम् कच्चित् । जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यान्यपि कच्चित् । स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्तसेऽपि । देहमपीडयित्वा कच्चिदित्यर्थः । युक्तं च नामैतत् खलु यस्माच्छरीरमाद्यं धर्मसाधनम् । कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते । अतएव 'सततम् मेव गोपयीत' इति श्रुतिः ॥

अपि[1] त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥

अपीति ॥ त्वयावर्जितेन सिक्तेन वारिणा संभृतं जनितमासां वीरुधां प्रवालं पल्लवमनुबन्ध्यप्यनुस्यूतं किम् । यत्प्रवालं चिरोज्झितश्चिरक लाक्षारागो येन तत्तथापि पाटलम् । स्वभावरक्तमित्यर्थः । तेन चिरोज्झित पाटलेन ते तव दन्तवाससाधरेण । 'ओष्ठाधरौ तु रदनच्छदौ दशन' इत्यमरः । तुलां साम्यमारोहति । गच्छतीत्यर्थः । अत्र तुलाशब्दस्य सा चित्वात्तद्योगेऽपि 'तुल्यार्थैरतुलोपमाभ्याम्–' इति न तृतीयाप्रतिषेध सदृशवाचिन एव ग्रहणादिति ॥

अपि[2] प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्य[3]मिव प्रयुञ्जते ॥

अपीति ॥ करस्थान्दर्भान्प्रणयेन स्नेहेनापहरन्तीति ते तथोक्तेषु । धेष्विति भावः । 'करस्थदर्भप्रणयापराधिषु' इति पाठे दर्भाणां प्रणयेन यापराधिषु हरिणेषु विषये ते मनः प्रसन्नमपि न क्षुभितं किम् । साप न कोपितव्यं तपस्विभिरिति भावः । हे उत्पलाक्षि, ये हरिणाः प्रचलै विलोचनैर्नेत्रैस्तवाक्षिसादृश्यं प्रयुञ्जत इवाभिनयन्तीव । प्रसन्नत्वान्मृगा त्वन्नयनैः साम्यमुपयान्तीति भावः 'उत्पलक्षेपचलैः' इति पाठान्तर उ म्पचलैः भावानयनेन द्रव्यानयनमिति न्यायेन क्षिप्यमाणोत्पलचलैरित्यर्थः ।

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥

यदिति ॥ हे पार्वति, रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भ यदुच्यते । लोकैरिति शेषः । तद्वचो न व्यभिचरति न स्खलतीत्यव्य सत्यम् । 'यत्राकृतिस्तत्र गुणाः' 'न सुरूपाः पापसमाचारा भवन्ति' इत्य लोकवादा न विसंवादमासादयन्तीत्यर्थः । किमिति ज्ञायते—तथाहि

१ अयि. २ अयि. ३ सापत्न्यम्.

रदर्शने आयताक्षि । सुरूपे इत्यर्थः । अथवोन्नतज्ञाने । विवेकवतीत्यर्थः । व शीलं सद्वृत्तम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । तपस्विनामप्युप-तेऽनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं प्राप्तम् । मुनयोऽपि वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः ॥

**कीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।**
**ा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥**

विकीर्णेति ॥ एष महीधरो हिमवान् । सप्त च ते ऋषयश्च सप्तर्षयः । क्संख्ये संज्ञायाम्' इति समासः । विकीर्णैः पर्यस्तैः सप्तर्षीणां संबन्धिभि-ठभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैर्दिवोऽन्तरिक्षाच्च्युतैर्गाङ्गैः सलिलैस्तथा पावितः । अनाविलैरकलुषैस्त्वदीयैश्चरितैर्यथा सान्वयः सपुत्रपौत्रः पावितः त्रीकृतः ॥

**नेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि[2] ।**
**या मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥३८॥**

अनेनेति ॥ हे भाविनि प्रशस्ताभिप्राये, अनेन कारणेन धर्मः सविशेषं तिशयमद्य मे । त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः । 'त्रिवर्गो धर्मका-र्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यद्यस्मात्का-न्मनसो निर्विषयावर्थकामौ यस्यास्तया त्वयैको धर्म एव प्रतिगृह्य स्वीकृत्य यते । यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः, अतः सर्वेषां नः स ानिति प्रतिपद्यत इत्यर्थः ॥

संप्रति मनोरथं जिज्ञासुः प्रस्तौति—

**युक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।**
**ः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥३९॥**

प्रयुक्तेति ॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य मां परमन्यं संप्रतिपत्तुमवगन्तुं नार्हसि । हे संनतगात्रि संनताङ्गि । 'अङ्ग-त्रकण्ठेभ्यः' इति वक्तव्यान्ङीप् । यतः कारणान्मनस ईषिभिर्मनीषिभिर्वि-द्भिः । शकन्ध्वादित्वात्साधुः । सतां संगतं सख्यं सप्तभिः पदैरापद्यत इति सप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते । तच्चावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः । 'साप्तपदीनं सख्यम्' इति निपातनात्साधु ॥

**तोऽत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।**
**यं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥**

अत इति ॥ हे तपोधने, अतः सख्याद्धेतोरत्र प्रस्तावे बहुक्षमाम् । बहूक्तिस-

---

१ प्रवाहिभिः. २ भामिनि. ३ यथा. ४ अद्य. ५ प्रतिगोप्तुम्.

हाम्, यद्वा क्षमावतीम् । भवतीं त्वां द्विजातिभावाद्ब्राह्मणत्वादुपप सुलभधार्ष्ट्योऽयं जनः । स्वयमित्यर्थः । किंचित्प्रष्टुं मनो यस्य स किंचि प्रष्टुकामः । 'तुं काममनसोरपि' इति मकारलोपः । रहसि भवं रहस् न चेत्प्रतिवक्तुमर्हसि ॥

प्रष्टव्यमाह—

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥

कुल इति ॥ प्रथमस्य वेधसो हिरण्यगर्भस्य कुलेऽन्ववाये प्रसूतिरु 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः' इति ब्रह्मपुराणवचनात् शरीरं त्रयाणां लोकानां सौन्दर्यमिवोदितमेकत्र समाहृतम् । ऐश्वर्यसुखं खममृग्यमन्वेषणीयं न भवति । किंतु सिद्धमेवेत्यर्थः । वयो नवम् मित्यर्थः । अतः परमतोऽन्यत्किं तपःफलं स्याद्वद । अस्ति चेदिति किंचिदस्तीत्यर्थः ॥

भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि

भवतीति ॥ दुःसहात्सोढुमशक्यादनिष्टाद्भर्त्रादिकृतादपि मनस्विनी स्त्रीणामीदृशी तपश्चरणलक्षणा प्रतिपत्तिः प्रवृत्तिः । 'प्रतिपत्तिस्तु गौरवे प्रवृत्तौ प्रागल्भ्ये' इति केशवः । भवति नाम । नामेति संभावन विचारमार्गे प्रहितेन चेतसा चित्तेन तदनिष्टं च । हे कृशोदरि, त्वयि न विचार्यमाणे तदपि नास्त्यसंभावितत्वादित्यर्थः ॥

अनिष्टाभावमेव प्रपञ्चयति—

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥

अलभ्येति ॥ हे सुभ्रु, इयं त्वदीयाकृतिर्मूर्तिरलभ्यो लब्धुमनर्हः भर्त्राद्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा तथोक्ता । दृश्य शेषः । असंभावितश्चायमर्थ इत्याह—पितुर्गृहे विमाननावमानः कु संभाव्यत एवेत्यर्थः । 'सुभ्रूः कुतस्तातगृहेऽवमाननम्' इति पाठान्तर साध्वसमेवोक्तोपपत्तिसंभवात् । अन्यत्रापि 'सुभ्रु त्वं कुपितेत्यपा त्यक्ता कथा योषिताम्' इत्यादिप्रयोगदर्शनाद्वंशस्थवृत्ते पादादौ जगा सङ्गाच्चेत्यलं गोष्ठीभिः । न चान्यस्माद्भावीत्याह—पराभिमर्शः परध तव नास्ति । पन्नगरत्नसूचये फणिशिरोमणिशलाकां ग्रहीतुमि 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । करं हस्तं कः प्र

१ तनूदरि. २ परावमर्शः.

ु' इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री' इति ासंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति । तेन ह्रस्वः ादिक इति केचित् । अन्ये तु 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्र ञाबूः' 'कर्कंधूः' इत्युकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मा- ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अतएवाह रनः—'ऊकारादप्यूङ्प्रकृतेः' इति ॥

मित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥४४॥

किमितीति ॥ हे गौरि, किमिति केन हेतुना यौवने त्वयाभरणान्यपास्य ाय । वृद्धस्य भावो वार्धकम् । मनोज्ञादित्वाद्वुञ्प्रत्ययः । 'वार्धकं वृद्धसंघाते त्वे वृद्धकर्मणि' इति विश्वः । तत्र शोभत इति वार्धकशोभि वल्कलं धृतम् । ोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका भावरी रात्रिररुणाय सूर्याय कल्पते यदि अरुणं गन्तुं कल्पते किम् । वद हे । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे रुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं संघटत इति भावः ॥

तपःप्रयोजनं निराकर्तुमाह—

वं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
थोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ४५

दिवमिति ॥ दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमस्तपश्चरणप्रयासो ा निष्फलः । यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः । तव पितु- गवतः प्रदेशा देवभूमयः स्वर्गपदार्थाः । तत्रत्या इत्यर्थः । अथोपयन्तारं वरं र्थयसे तर्हि समाधिना तपसालम् । न कर्तव्यमित्यर्थः । निषेध्यस्य निषेधं ा करणत्वात्तृतीया । तथाहि । रत्नं कर्तृ । नान्विष्यति न मृगयते । ग्रहीता- ाति शेषः । किंतु तद्रत्नं मृग्यते ग्रहीतृभिरिति शेषः । न हि वरार्थं त्वया सि वर्तितव्यं किंतु तेनैव त्वदर्थमिति भावः ॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तर- ुपलभ्य स्वयमेवाशङ्क्याह—

वेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ४६

निवेदितमिति ॥ सोष्मणा निःश्वसितेन निःश्वासवायुना निवेदितम् । न्तानुभावेनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः । तर्हि किं प्रश्नव्यस- ात्याह—मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति । कुतः । ते तव ।

'कृत्यानां कर्तरि वा' इति षष्ठी। प्रार्थयितव्यः प्रार्थयितुमर्ह एव न प्रार्थितदुर्लभः प्रार्थितो यो दुर्लभः स कथं भविष्यति। नास्त्येवेत्यर्थः॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह—

**अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां**
**उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः॥**

अहो इति॥ अहो चित्रम्। तवेप्सित आप्तुमिष्टो युवा कोऽपि कठिनः वर्तत इति शेषः। कुतः। यो युवा चिराय चिरात्प्रभृति लशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धना लम्बिन्यस्ताः श्लथलम्बिनीः कलमाः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्ग उपेक्षते। यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः॥

**मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम्।**
**शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते॥**

मुनिव्रतैरिति॥ मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रमत्यन्तं कर्शितां कृतां दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदुत्वाच्च श्या विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्ताम्। अतएव शशाङ्करेखामिव स्थितां त्वां पश्यतः सचेतसो जीवतः कस्य पुंसो मनो न परितप्यते। अपि तु सर्वस्यैवेत्यर्थः॥

**अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः।**
**करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः॥**

अवैमीति॥ तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्यगर्वेण कर्त्रा विप्रलब्धमवैमि वेद्मि। यः प्रियश्चतुरं मधुरमवलोकत इति चतुराव ऽरालपक्ष्मणः कुटिलरोम्णः। 'अरालं वृजिनं जिह्मम्' इत्यमरः। अस्य चक्षुष आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति। दृष्टिपथं न त्यर्थः। तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः॥

**कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम्॥**

कियदिति॥ हे गौरि, कियत्किंप्रमाणकम्। किमवधिकमित्यर्थः श्राम्यसि तपस्यसि। अत्यन्तसंयोगे द्वितीया। ममापि पूर्वाश्रमः प्रथ ब्रह्मचर्याश्रमस्तत्र संचितं संपादितं तपो विद्यते अर्धश्चासौ भागश्च तेन त सोऽर्धभागेनैकदेशेन काङ्क्षितमिष्टं वरमुपयन्तारं लभस्व। तं वरं साधु दितुं ज्ञातुमिच्छामि। यद्यसौ योग्यो भवति तदा ममापि संमतिरिति भा

१ बन्धनीर्जटाः कपोलदेशे; बन्धलम्बिनीर्जटाः कपोले.

प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
थो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥

इतीति ॥ इतीत्थं द्विजन्मना द्विजेन प्रविश्यान्तर्गत्वा । आप्तवद्रहस्यमुद्धा-
यर्थः । अभिहितोक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक
र्था नाभूत् । लज्जयेति शेषः । अथोऽनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं
र्तितं विचालितमनञ्जनं व्रतवशाद्वर्जितकज्जलं नेत्रं यस्मिन्कर्मणि तत्तथैक्षत ।
संज्ञयैव प्रत्युत्तरं वाचयांचकारेत्यर्थः ॥

वी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
र्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥

सखीति ॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम् । 'वर्णः प्रशस्तः'
क्षीरस्वामी । सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम् । 'वर्णाद्ब्रह्मचारिणि' इती-
त्ययः । उवाच ब्रूते स्म । किमिति । हे साधो विद्वन्, तव कुतूहलं चेत् ।
तुमस्तीति शेषः । तर्हि निबोधावगच्छ । आकर्णयेत्यर्थः । 'बुध अवगमने'
धातोर्भौवादिकाल्लोट् । श्रोतव्यं किं तदाह—यस्मै लाभायेदं यदर्थम् ।
र्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या' इति वार्तिकं क्रियमा-
क्रियाविशेषणम् । एतया पार्वत्याम्भोजं पद्ममुष्णवारणमातपत्रमिव वपुः शरीरं
:साधनं कृतम् । तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥

'दृङ्मनःसङ्गसंकल्पो जागरः कृशतारतिः । ह्रीत्यागोन्मादमूर्छान्ता इत्यन-
शा दश ॥' इति । तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति 'इयम्'
ादिभिः षड्भिः श्लोकैः—

महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
रूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥

इयमिति ॥ मानिनीन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवतीयं
र्वत्यधिश्रियोऽधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादींश्चतसृणां दिशामीशानिन्द्रयमव-
कुबेरान् । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । अवमत्यावधूय मदनस्य
ग्रहान्निबर्हणाद्धेतोः । अकामुकत्वादित्यर्थः । रूपेण सौन्दर्येण हार्यो वशीकर-
यो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम् । 'प्रहर-
र्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति साधु । पतिं भर्तारमाप्तुमिच्छति ।
न संकल्पावस्था सूचिता ॥

सह्यहुंकारनिवर्तितः पुरा पुरारिम[1]प्राप्तमुखः शिलीमुखः ।
ां हृदि व्यायतपातमक्षिणो[2]द्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥ ५४ ॥

१ सरारिम्. २ अक्षणोत्.

असह्येति ॥ पुरा पूर्वमसह्येन सोढुमशक्येन हुंकारेण रौद्रेण नि
अतएव पुरारिं हरमप्राप्तमुखोऽप्राप्तफलो विशीर्णमूर्तेर्नष्टशरीरस्यापि पु
कामस्य शिलीमुखो बाण इमां पार्वतीं हृदि व्यायतः । सुदूराव
यावत् । तादृक्पातः प्रहारो यस्मिन्कर्मणि तत्तथाक्षिणोदकर्शत् । दग्धे
मार्गणो लग्नः । 'मृदुः सर्वत्र बाध्यते' इति भावः । अनेन 'विवृण्वती शै
भावम्' ( ३ । ६८ ) इत्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयम
स्योपयोगितयानूद्य कार्श्यावस्था सूचिता ॥

**तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥**

तदेति ॥ तदेति च्छेदः । तदाप्रभृति । तत आरभ्येत्यर्थः । सप्तम
दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगे पञ्चमीनियमात् । पितुर्गृहे
त्कटमन्मथा ललाटस्यालंकारो ललाटिका तिलकः । 'कर्णललाटा
इति कन्प्रत्ययः । तस्याश्चन्दनेन धूसरा धूसरवर्णा अलकाश्चूर्णकुन्तला य
तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसंघातास्तुषारघनास्त
स्तासां तलेषूपरिभागेष्वपि निर्वृतिं सुखं न लभते स्म । एतेनार
विषयविद्वेषावस्था द्वादशावस्थापक्षे संज्वरश्च व्यज्यते ॥

**उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरि**
**अनेकशः किंनरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥**

उपात्तेति ॥ पिनाकिनः शंभोश्चरिते त्रिपुरविजयादिचेष्टित उ
प्रारब्धगीतक्रमे । 'गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते' इति ह
सबाष्पे गद्गदे कण्ठे स्खलितैर्विशीर्णैः पदैः सुप्तिङन्तरूपैः करणैः । वना
तेन निमित्तेन सखीर्वयस्याः किंनरराजकन्यका अनेकशो बहुशोऽरोदयद
मकारयत् । हरचरितगानजनितमदनवेदनामेनां वीक्ष्य किंनर्योऽपि
भावः । अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनःपुनस्तत्कारणीभूतमूर्च्छा
दुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्थापक्षे तु
वस्था च व्यज्यते । 'प्रलापो गुणकीर्तनम्' इत्यालंकारिकाः ॥

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबु**
**क नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥**

त्रिभागेति ॥ किंचेति चार्थः । शिष्यत इति शेषः । कर्मणि घञ् ।
भागेभ्यः शेषास्ववशिष्टासु यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात्तृतीयो
भागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा '
'सहस्रांशः' इति । त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमा

१ विबुध्यते.

निमील्य मीलयित्वा सहसा सद्यः । हे नीलकण्ठ, क व्रजसि कुत्र गच्छसी- त्युक्त्या निर्विषया वाग्वचनं यस्याः सा तथोक्ता । तथाऽसत्ये मिथ्याभूते कण्ठे- र्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरो- न्मादौ सूचितौ ॥

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः । स्वप्नसंदर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥

यदेति ॥ यदा यत इत्यर्थः । यदेति हेतावित्युक्त्वा गणव्याख्यानेऽस्योदा- हृतत्वात् । त्वं बुधैर्मनीषिभिः सर्वगतः सर्वव्यापीत्युच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागिणमित्यर्थः । इमं जनम् । मामित्यात्मनिर्देशः । कथं न वेत्सि न जानासीति मुग्धया मूढया । अकिंचि- ज्ज्ञया चित्रगतोपालम्भ इत्यजानानयेत्यर्थः । तया स्वहस्तेनोल्लिखितश्चित्रे लिखित- श्चन्द्रशेखरो रहस्येकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेप- मुक्तश्च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणा- ल्लज्जात्यागो व्यज्यत एव ॥

यदा च तस्याभिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती[2] ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

यदेति ॥ जगत्पतेस्तस्येश्वरस्याधिगमे प्राप्तावन्यं विधिमुपायं विचिन्वती मृगयमाणा यदा नापश्यत्तदेयं पार्वती गुरोः पितुरनुज्ञयास्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि[3] ।
न च प्ररोहाभिमुखोऽपि[4] दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ६०

द्रुमेष्विति ॥ सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु । स्वयं रोपिते- ष्वित्यर्थः । तपसः साक्षिषु साक्षाद्द्रष्टृष्वेषु द्रुमेष्वपि फलं दृष्टं लब्धम् । जातमित्यर्थः । अस्याः पार्वत्याः शशिमौलिसंश्रयश्चन्द्रशेखरविषयो मनोरथस्तु प्ररोहाभिमुखोऽङ्कुरोन्मुखोऽपि न दृश्यते । 'प्ररोहस्त्वङ्कुरः' इति वैजयन्ती । स्वरोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽप्यस्ति । फलाशा दूरापास्तेत्यर्थः ॥

न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम्[5] ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

१ यतः. २ वितन्वती. ३ बद्धम्. ४ न. ५ अस्राकुलम्.

नेति ॥ प्रार्थितः सन्दुर्लभः प्रार्थितदुर्लभः स देवस्तपःकृशां तपसा क्षीणामतएव सखीभिरस्रोत्तरमश्रुप्रधानं यथा भवति तथेक्षितामिमां वस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीडिताम् । 'वृष्टिर्वर्षं तद्विघातेऽवग्राह समौ' इत्यमरः । अवग्रहो वर्षप्रतिबन्ध इत्यर्थः । सीतां कृष्टभुवम् । लाङ्गलपद्धतिः' इत्यमरः । वृषा वासव इव । 'वासवो वृत्रहा वृषा' इ कदाभ्युपपत्स्यते कदानुग्रहीष्यति न वेद्मि । अत्र वाक्यार्थः कर्म । तदव मित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥

**अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।**
**अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥**

अगूढेति ॥ इङ्गितज्ञया पार्वतीहृदयाभिज्ञया । 'इङ्गितं हृद्गतो भा सज्जनः । तया गौरीसख्येत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं य निवेदितो ज्ञापितो निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्व विशेषणसमासः । किंतु नैष्ठिकत्वविशेषणेन कामित्वविरोधः । अथवा लौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः । अव्यञ्जितं हर्षलक्ष रागादि हर्षलिङ्गं यस्य तथाभूतः सन् । अयि गौरी । अयीति कोमला इदं त्वत्सखीभाषितमेवम् । सत्यं किमित्यर्थः । परिहासः केलिर्वा । ' परीहासाः' इत्यमरः । इत्येवमुमामपृच्छत्पृष्टवान् ॥

**अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती[1] स्फटिकाक्षमालिका**
**कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥**

अथेति ॥ अथानन्तरमद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ संपुटीकृता अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणि भेदादिति वामनः । तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालि न्त्यामुञ्चती कथंचिन्महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्वीकृत एतेन लज्जोपरोधो व्यज्यते । मिताक्षरं परिमितवर्णं यथातथाभाषत बभा

किमुवाचेत्याह—

**यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥**

यथेति ॥ हे वेदविदां वर वैदिकश्रेष्ठ, त्वया यथा श्रुतं सम्यक् श्रुतार्थमेवाह—अयं जनः । स्वयमित्यर्थः । उच्चैःपदस्य शिवलाभरूपो नस्य लङ्घन आक्रमण उत्सुकः । किमत्रायुक्तमित्यत्राह—इदं तपस्तद

१ मण्डलम्.

चैःपदस्याप्तेः प्राप्तेः साधनं किल । किलेत्यलीके । अतितुच्छत्वादसाध-
वेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह—
रथानां कामानामगतिरविषयो न विद्यते । न हि स्वशक्तिपर्यालोचनया
गाः प्रवर्तन्त इति भावः ॥

आह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
ङ्गलाभ्यासरतिं[1] विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥६५॥

अथेति ॥ अथ वर्णी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । आह ।
ाचेत्यर्थः । 'आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः' इत्याह वामनः ।
मित्याह—महेश्वरो महादेवो विदितः । मया ज्ञायत इत्यर्थः । बुध्यर्थत्वा-
माने क्तप्रत्ययः तद्योगात्षष्ठी च । येन त्वं प्रागभग्नमनोरथा कृतेति भावः ।
रेव त्वं तमीश्वरमर्थयसे तदर्थिन्येव तत्कामैव प्रवर्तसे । तत्प्रभावमनुभूया-
ते भावः । अनुसरणे को दोषस्तत्राह—अमङ्गलाभ्यासेऽमङ्गलाचारे रतिर्यस्य
यथोक्तमीश्वरं विचिन्त्य विचार्य तवानुवृत्तिमनुसरणं कर्तुं नोत्सहे । नानुमन्तुं
शोमीत्यर्थः ॥

वस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
ेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६॥

अवस्त्वेति ॥ अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेशः परं प्रधानं
ास्तस्याः संबुद्धिरवस्तुनिर्बन्धपरे पार्वति, आमुक्तमासञ्जितं विवाहे यत्कौतुकं
सूत्रं तद्यस्य स तेऽयं करः । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति
श्वतः । वलयीकृताहिना भूषणीकृतसर्पेण शंभोर्महादेवस्य करेण करणभूतेन ।
व प्रथमं तत्प्रथमम् । अपरिचितत्वादतिभयंकरमिति भावः । तच्च तदवलम्बनं
णं चेति कथं नु सहिष्यते । न कथंचिदपि सहिष्यत इत्यर्थः । अग्रतो यद्भावि
रेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥

मेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।
दुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥

त्वमेवेति ॥ हे गौरि, त्वमेव स्वयमात्मना । तावदिति मात्रार्थे । यावन्मात्रं
ारणीयं तावन्मात्रमित्यर्थः । इदमेवोदाहृतं च गणव्याख्याने । परिचि-
य पर्यालोचय । किमिति । कलहंसलक्षणं कलहंसचिह्नम् । 'चिह्नं लक्ष्म
लक्षणम्' इत्यमरः । वध्वा नवोढाया दुकूलं वधूदुकूलम् । 'वधूः
ा नवोढा स्त्री' इति विश्वः । तथा शोणितबिन्दून्वर्षतीति यथोक्तम् । आर्द्र-
त्यर्थः । गजाजिनं च कृत्तिवासश्च । तत्पिनाकिन इत्याशयः । एते कदाचिज्जा-
पि योगं संगतिमर्हतो यद्यर्हतः किम् । एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः ।

१ रतम्. २ भुजेन.

पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते । कृत्तिवाससा पाणि
दुकूलधारिण्यास्तव कथं संघटिष्यत इति भावः ॥

**चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते ।**
**अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥**

चतुष्केति ॥ चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रावकीर्णयोन्य कुसुमास्तृतदिव्यभवनभूसंचारोचितयोरित्यर्थः । तव पादयोरलक्तकाङ्का क्षाररञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि । 'पदं शब्दे च वा व्यवसायापदेशयोः । पादतच्चिह्नयोः' इति विश्वः । विकीर्णा विक्षिप्ताः शवशिरोरुहा यासु तासु विकीर्णकेशासु । 'अतत्स्थं तत्र दृष्टं च' इति व 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीप् । परेतभूमिषु मिषु । श्मशानेष्वित्यर्थः । परोऽपि शत्रुरपि को नामानुमन्यते । न कोऽपि नामेति कुत्सायाम् । पिनाकपाणिपाणिग्रहणे तस्य परेतभूसंचारित्वेन र्यात्तवापि तत्र संचारोऽवश्यंभावीति भावः ॥

**अयुक्तरूपं किमतः परं वद[2] त्रिनेत्रवक्षः सुलभं तवापि यत् ।**
**स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे[3] पदं चिताभस्मरजः करिष्यति ॥**

अयुक्तेति ॥ त्रिनेत्रवक्षः । त्र्यम्बकालिङ्गनमित्यर्थः । तव तत्संब सुलभमपि सुप्रापं च । भवतीति शेषः । तवेति शेषे षष्ठी । 'न लोका इत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात् । अतःपरमस्मात्त्रिनेत्रवक्षोला दयुक्तरूपमत्यन्तायुक्तं किं वद । न किंचिदित्यर्थः । 'प्रशंसायां रूपप् रूपप्प्रत्ययः । कुतः । यद्यस्मात्कारणाद्धरिचन्दनास्पदे हरिचन्दनस्यास्पदे भूतेऽस्मिन्स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णं कर्तृ । पदं क पदं निधास्यति । भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥

**इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्य**

इयमिति ॥ इयं च ते तव पुरत आदावेवान्या विडम्बना । परिह त्यर्थः । का सेत्यत्राह—ऊढया परिणीतया । वहेः कर्मणि क्तः । वारणरा त्वयाधिष्ठितमारूढं वृद्धमुक्षाणं वृद्धोक्षम् । 'अचतुर-' इत्यादिना नि विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखो भविष्यत्युपहसिष्यति इयमिति पूर्वेण संबन्धः । स्मेरेति 'नमिकम्पिस्म्यजस-' इत्यादिना र

**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः[4] ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी**

१ अनुमंस्यते. २ भवेद्. ३ अङ्किते. ४ कपालिनः.

द्वयमिति ॥ पिनाकिन ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया । माणयेति शेषः । संप्रति द्वयं शोचनीयतां शोच्यत्वं गतम् । किं तदाह— प्रागेव हरशिरोगता । अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते'[1] । कान्तिमती । नित्ययोगे मतुप् । कलावतश्चन्द्रस्य कला षोडशो श्चास्य लोकस्य नेत्रकौमुदी । नेत्रानन्दिनीत्यर्थः । त्वं च । कान्तिमतीत्वनेत्र- दीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागेकैव शोच्या । संप्रति तु त्वमप्य- त द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥ 'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति ष्टान्नमितरे जनाः ॥' इति लोकानामाभाषणम् । तत्र किंचिदपि नास्तीत्याह—

**र्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।**
**षु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥**

वपुरिति ॥ वपुस्तावदस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य रूपाक्षम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । वैरूप्यं च त्रत्वादिति क्षीरस्वामी । अतो न सौन्दर्यवार्तापीत्यर्थः । अलक्ष्यमज्ञातं म यस्य तस्य भावस्तत्ता । कुलमपि न ज्ञायत इत्यर्थः । 'अलक्षिता जनिः' पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । वित्तं दिगम्बरत्वेनैव निवेदितम् । नास्तीति ज्ञापितमित्यर्थः । यदि भवति तदा कथं दिगम्बरो भवति । अतो ज्ञेयं निर्धनोऽयमिति । बहुना हे बालमृगाक्षि पार्वति, वरेषु वोढृषु । 'वरौ जामातृवोढारौ' इति ः । यद्रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत्त्रिलोचने त्र्यम्बके तम् । एकमपि समस्तं नाभूदिति भावः । अस्ति किम् । नास्त्येवेत्यर्थः ॥

**र्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।**
**क्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न[2] यूपसत्क्रिया ॥७३॥**

निवर्तयेति ॥ अस्मादसदीप्सितादनिष्टमनोरथान्मनो निवर्तय निवारय । पूर्वोक्ता विधा प्रकारो यस्य स तथोक्तः । अमङ्गलशील इत्यर्थः । क्व । महद- रमित्यर्थः । पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वं च क्व । अतो न तवायमर्हं र्थः । तथाहि । साधुजनेन । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' विश्वः । श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोर्वैदिकी वेदोक्ता । नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्यु- गादिसंस्कारो यूपसत्क्रिया नापेक्ष्यते नेष्यते । यथा श्मशानशूले यूपसत्क्रिया क्रियते तथा त्वमपि तस्मै न घटस इति तात्पर्यार्थः ॥

---

१ अपेक्षते. २ हि.

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते[1] तया विलोचने तिर्यगुपान्तलोहिते

इतीति ॥ इत्येवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवे चञ्चलेनाधरेणाधरोष्ठेन लक्ष्योऽनुमेयः कोपः क्रोधो यस्यास्तथोक्त पार्वत्योपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूल स्तत्तथा । सभ्रूभङ्गमित्यर्थः । तिर्यक्साच्याहिते निहिते । अनाद क्ष्यतेत्यर्थः ॥

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ मा
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्म

उवाचेति ॥ अथैनं ब्रह्मचारिणमुवाच च । किमिति । परमार्थ हरं न वेत्सि न जानासि नूनम् । कुतः । यतो मामेवमुक्तया रीत्यात्थ 'ब्रुवः पञ्चानामादितः–' इति रूपसिद्धिः । अज्ञानादेवायं शिवद्वे शयेनाह—मन्दा मूढाः । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । मान्यमितरजनसाधारणं न भवतीत्यलोकसामान्यमचिन्त्यहेतुकं दुर्बो महात्मनां चरितम् । द्विषन्ति हेत्वपरिज्ञानाद्दूषयन्ति । विद्वांसस्तु हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥

संप्रति 'अमङ्गलाभ्यासरतिम्' (५।६५) इत्याद्युक्तं दूषणजातम् इत्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्ति

विपदिति ॥ विपत्प्रतीकारपरेण । अनर्थपरिहारार्थिनेत्यर्थः । ' घञ्यमनुष्ये बहुलम्' इति दीर्घः । भूरिसमुत्सुकेनैश्वर्यकामेन वा गन्धमाल्यादिकं निषेव्यते । शरणे रक्षणे साधुः शरण्यः । 'तत्र सा यत्प्रत्ययः । 'शरणं गृहरक्षित्रोः' इत्यमरः । जगतः शरण्यस्तस्य जगच्छ निराशिषो निरभिलाषस्य सतः शिवस्य । 'आशीरुरगदंष्ट्रायां विप्रवाक्य षयोः' इति शाश्वतः । आशया तृष्णयोपहता दूषितात्मवृत्तिरन्तःकरण तैरेभिर्मङ्गलैः किम् । वृथेत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्य त्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । इष्टावाप्त्यनिष्टपरिह हि मङ्गलाचारनिर्बन्धः । तदुभयासंसृष्टस्य तु यथाकथंचिदास्ताम् । इत्यर्थः । एतेन 'अमङ्गलाभ्यासरतिम्' (५।६५) इत्युक्तं प्रत्युक्तम् ॥

अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः[2] पितृसद्मगोचर

१ भ्रूलतया. २ स लोकनाथः.

ीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥

किंचनेति ॥ स हरः । न विद्यते किंचन द्रव्यं यस्य सोऽकिंचनो दरिद्रः संपदां प्रभवत्यस्मादिति प्रभवः कारणम् । पितृसद्मगोचरः श्मशानाश्रयः त्रयाणां लोकानां नाथः । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । स भीमरूपो भयंकराकारः सन् शिवः सौम्यरूप इत्युदीर्यत उच्यते । अतः किनो हरस्य यथाभूतोऽर्थो यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदो न । लोकोत्तरमहिम्नो निर्लेपस्य यथाकथंचिदवस्थानं न दोषायेति भावः । 'अवस्तुनिर्बन्धपरे' ( ५ । ६६ ) इति परिहृतं वेदितव्यम् ॥

वस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

ूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
ालि वा स्याद[1]थवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥७८॥

विभूषणेति ॥ विश्वं मूर्तिर्यस्येति विश्वमूर्तेरष्टमूर्तेः शिवस्य वपुः शरीरं णैरुद्भासत इति भूषणोद्भासि स्यात् । पिनद्धभोग्यामुक्तभुजंगमं वा स्यात् । द्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' कारलोपः । गजाजिनालम्बि स्यात् । अथवा दुकूलधारि स्यात् । कपालम- स्तीति कपालि ब्रह्मशिरःकपालशेखरं वा स्यात् । इन्दुशेखरं वा स्यात् । नाव- ते न निर्धार्यते । सर्वं संभवतीत्यर्थः । एतेन 'त्वमेव तावत्' ( ५ । ६७ ) श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥

'अयुक्तरूपं किमतःपरं वद' ( ५ । ६९ ) इति श्लोकोक्तं प्रत्याह—

ङ्गसं[2]सर्गमवाप्य कल्पते ध्रुवं चिताभस्म रजोविशुद्धये ।
ाहि नृत्याभिनयक्रियाच्युतं विलि[3]प्यते मौलिभिरम्बरौकसां ७९

तदिति ॥ तस्य शिवस्याङ्गं तस्य संसर्गमवाप्यासाद्य चिताभस्मैव रजो- ुद्धये कल्पते । अलं पर्याप्नोतीत्यर्थः । अलमर्थयोगात् 'नमःस्वस्तिस्वाहा–' ादिना चतुर्थी । ध्रुवं शोधकत्वम् । प्रमाणसिद्धमित्यर्थः । प्रमाणमेवाह— हि । प्रसिद्धमेवेत्यर्थः । नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स क्रिया तया निमित्तेन च्युतं पतितम् । चिताभस्मरज इति शेषः । अम्बरौ- ां देवानां मौलिभिर्विलिप्यते ध्रियते । अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियेतेत्य- त्तिरनुमानं वा प्रमाणमित्यर्थः ॥

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु' ( ५ । ७२ ), 'इयं च तेऽन्या पुरतो डम्बना' ( ५ । ७० ) इत्यादि च तत्रोत्तरमाह—

ंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
ोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥८०॥

१ अथ चन्द्रशेखरम्. २ संस्पर्शम्. ३ विलुप्यते.

असंपद इति ॥ प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं ऐरावतेनोढ इत्यर्थः । वृषा देवेन्द्रोऽसंपदो दरिद्रस्य वृषेण गच्छतो वृ तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य । प्रणम्येत्यर्थः । विनिद्राणां तानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुल तथोक्तौ करोति । दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः वृषारोहणे वा को दोष इत्यर्थः ॥

यदुक्तं 'अलक्ष्यजन्मता' ( ५ । ७२ ) इति तत्रोत्तरमाह—

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भा**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्य**

विवक्षतेति ॥ च्युतात्मना नष्टस्वभावेनातएव दोषं दूषणं वक्तुमिच्छतापि त्वयेशं प्रत्येकम् 'अलक्ष्यजन्मता' इत्येतदेकम् । वच साधु भाषितं सम्यगुक्तम् । कुतः । यमीश्वरमात्मभुवोऽपि ब्रह्मणोऽपि त्मभूः सुरज्येष्ठः' इत्यमरः । कारणमामनन्त्युदाहरन्ति । विद्वांस इति 'पाघ्राध्मास्थाम्नादाण्–' इत्यादिना मनादेशः । स ईश्वरः कथं ल लक्ष्यजन्मा भविष्यति । अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कश्च ष्यत इत्यर्थः ॥

**अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु स**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते**

अलमिति ॥ अथवा विवादेन कलहेनालम् । त्वया यथा येन प्र ईश्वरः श्रुतोऽशेषं कात्स्न्र्येन तथाविधस्तावत्प्रकार एवास्तु । मम मनः भावः श्रृङ्गार एकोऽद्वितीयो रस आस्वाद्यो यस्य तत्तथा स्थितम् । कामवृत्तिः स्वेच्छाव्यवहारी वचनीयमस्थानसङ्गापवादं नेक्षते न विच न हि स्वेच्छासंचारिणो लोकापवादाद्बिभ्यन्तीति भावः ॥

**निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराध**
**न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभा**

निवार्यतामिति ॥ हे आलि सखि । 'आलिः सखी वयस्या च' इ स्फुरितोत्तराधरः स्फुरणभूयिष्ठोष्ठोऽयं बटुर्माणवकः पुनः किमपि वि मिच्छुः । ब्रुवः सन्नन्तादुप्रत्ययः । निवार्यताम् । तर्हि वक्तुमेव कथं न त्याह—तथाहि । यो महतः पूज्यानपभाषतेऽपवदति न केवलं स वति । किंतु तस्मादपभाषमाणात्पुरुषाद्यः शृणोति सोऽपि पापभाक् । शेषः । अत्र स्मृतिः—'गुरोः प्राप्तः परीवादो न श्रोतव्यः कथंचन । क पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥' इति ॥

१ श्रुतम्. २ महतां विभाषते.

प्रति गन्तव्यपक्षमाश्रयते—

गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।
पमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥८४॥

त इति ॥ अथवेतोऽन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां वल्कला रयवशात्कुचस्रस्तचीरा बाला पार्वती चचाल । वृषराजकेतनो ध्वजश्च स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् तां पार्वतीं समाम्बे जग्राह ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

मिति ॥ तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री । देवदर्शनेन देव्याः सात्विकभावोदय उक्तः । निक्षेपणायान्यत्र विन्यासायोत्क्षिप्तं पदमङ्घ्रिमुद्वहन्ती शैलाधिराजतनया पार्वती मार्गेऽचलस्तस्य व्यति- समाहत्या । अवरोधनेनेति यावत् । आकुलिता संभ्रमिता सिन्धुर्नदीव । नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । न ययौ न तस्थौ थेति भावः । वसन्ततिलकावृत्तमेतत् ॥

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

द्येति ॥ चन्द्रमौलौ शिवे । हे अवनताङ्गि पार्वति, अद्यप्रभृति । द्दिनादारभ्येत्यर्थः । प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते । तपोभिः क्रीतः । 'दासृ दाने' । दासत आत्मानं ददातीति दासोऽस्मीति नि वदति सति । सा देव्यह्नाय सपदि । 'स्रागझटित्यञ्जसाह्नाय द्राङ्मङ्क्षु दे द्रुतम्' इत्यमरः । नियमजं तपोजन्यं क्लमं क्लेशमुत्ससर्ज । फलप्राप्त्या विसस्मारेत्यर्थः । तथाहि । क्लेशः फलेन फलसिद्ध्या पुनर्नवतां विधत्ते देवाक्लिष्टतामापादयतीत्यर्थः । सफलः क्लेशो न क्लेश इति भावः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः ।

---

१ रय. २ निक्षेप एव.

## षष्ठः सर्गः ।

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥

अथेति ॥ अथ देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वात्मा यस्येति । विश्वस्यात्मेति वा । विश्वात्मने शिवाय मिथो रहसि । 'मिथो रहस्यपि' इत्यमरः । सखीं संदिदेशातिससर्ज । क्रियामात्रयोगेऽपि त्वाच्चतुर्थी । किमिति । भूभृतां नाथो हिमवान्मे मम दाता सः प्रमा तामिति । दातृत्वेन प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा नायाः परिग्रहो मम महाननुग्रह इति भावः ॥

तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्याशे मधौ परभृतोन्मुखी ॥ २ ॥

तयेति ॥ तया सख्या । सखीमुखेनेत्यर्थः । व्याहृतसंदेशोक्तवाचिक हरविषये निभृता निश्चला । परमासक्तेत्यर्थः । सा गौरी । मधौ वसन्ते स्थिरा परभृतया कोकिलयोन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देना णव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्तीत्यर्थः । पा क्रियाशब्दविवक्षायाम् 'जातेरस्त्री–' इति ङीष्प्रत्ययो न भवति । तयेत्यु व्यस्तत्वादुपमानवाचि परभृताशब्दस्य समासः सोढव्यः । अथवा भृञ संपदादित्वात्क्विप् । परैर्भृद्यस्यास्तया परभृतेति व्यासेन व्याख्येयम् । पद कारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह । चूतयष्टिश्चूतशाखेवाभ्याशे बभौ । 'सदेशाभ्याशसविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्ण अप्यभितोऽव्ययम् ॥' इत्यमरः ॥

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः ॥ ३ ॥

स इति ॥ स प्रकृतः । शास्तीति शासनः । बहुलग्रहणात्कर्तरि स्मरस्य शासन ईश्वरस्तथेति प्रतिज्ञाय । तथा करिष्यामीत्युक्त्वेत्यर्थः । कथमपि कृच्छ्रेण विसृज्य । तत्र गाढानुरागत्वादिति भावः । ज्योतिर्मय रूपान्सप्तर्षीनङ्गिरःप्रभृतीन्सस्मार स्मृतवान् ॥

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन्पुरः प्रभोः ॥ ४ ॥

त इति ॥ ते तप एव धनं येषां ते तपोधनाः सप्तर्षयः प्रभामण्ड पुञ्जैर्व्योमाकाशं द्योतयन्तः प्रकाशयन्तः । अरुन्धत्या सह वर्तन्त इति

तीकाः सन्तः । 'नद्यृतश्च' इति कप् । सपदि प्रभोरीश्वरस्य पुरः पुरोभागे पुरासन्नप्रत्यक्षा बभूवुः ॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन्वर्णयति—

आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु[1] ।
व्योमगङ्गाप्रवाहेषु[2] दिङ्नागमदगन्धिषु ॥ ५ ॥

आप्लुता इति ॥ उत्किरन्ति विक्षिपन्तीत्युत्किराः । 'इगुपध-' इत्यादिना प्रत्ययः । तीरे ये मन्दाराः कल्पवृक्षास्तेषां कुसुमानामुत्किरा वीचयस्तरंगा यां तेषु दिङ्नागानां दिग्गजानां मदगन्धो येष्वित्ति तथोक्तेषु व्योमगङ्गाप्रवाहेष्वाकाशगङ्गास्रोतःस्वाप्लुताः स्नाताः ॥

मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः[3] ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥ ६ ॥

मुक्तेति ॥ मुक्तानां मौक्तिकानां यज्ञोपवीतानि । मुक्तामयानीत्यर्थः । बिभ्रतो धानाः । हेममयानि वल्कलानि येषां ते हैमवल्कलाः । रत्नमयान्यक्षसूत्राणि षां ते रत्नाक्षसूत्राः । प्रव्रज्यां प्रव्रजनम् । 'व्रजयजोर्भावे क्यप्' इति क्यप् । श्रिताः कल्पवृक्षा इव स्थिताः । अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन नप्रस्थाश्रमो लक्ष्यते । 'जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः' ( ६ । ३४ ) ते सपत्नीकत्वाभिधानात् । 'सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्' इति नप्रस्थस्योभयथा स्मरणात् ॥

अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात्सप्रणाममुदीक्षिताः ॥ ७ ॥

अध इति ॥ अधःप्रस्थापिताश्वेन । सूर्यमण्डलोपरिवर्तित्वात्सप्तर्षिमण्डल- रेति भावः । समावर्जितकेतुना तन्मण्डलाघातशङ्कया नामितध्वजेन सहस्र- श्मिना सूर्येण साक्षात्स्वयमेव सप्रणाममुदीक्षिताः । गमनाभ्यनुज्ञादानपर्यन्त- त्यर्थः । भगवतः सूर्यस्याप्युपास्या इति भावः ॥

आसक्तबाहुलतया सार्धमुद्धृतया[5] भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥

आसक्तेति ॥ पुनः किंविधाः । प्रलयापदि कल्पान्तसंकट आसक्तबाहुल- या । दंष्ट्रायामिति शेषः । उद्धृतया । दंष्ट्रयेति शेषः । भुवा सार्धं धरण्या सह हावराहदंष्ट्रायां विश्रान्ताः । महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम्[4] ।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ ९ ॥

---

[1] कुसुमोत्कर. [2] आकाशगङ्गास्रोतस्सु. [3] हेम. [4] शश्वत्. [5] उद्धतया.

सर्गेति ॥ विश्वयोनेर्ब्रह्मणोऽनन्तरं सर्गशेषस्य प्रणयनात् । ब्रह्मसृष्टेः सृष्टेः करणाद्धेतोरित्यर्थः । पुराविद्भिः पुराणवेदिभिर्व्यासादिभिः धातार इति कीर्तिताः । विश्वयोनेरिति संबन्धमात्रे षष्ठी । तस्यानन्तर भाष्ये दर्शनात् । अपादानत्वविवक्षायां तु पञ्चमी । अयमदःशब्दो द्वावृत्तादनन्तरस्येति शाबरभाष्ये दर्शनात् । तथा 'अथातो धर्मजिज्ञासा वेदाध्यायादनन्तरम्' इत्याचार्याः । कविश्च 'पुराणपत्रापगमादनन्तरम्' एवमन्यत्रापि द्रष्टव्यम् ॥

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १० ॥

प्राक्तनानामिति ॥ प्राक्तनानां जन्मान्तरभवानां विशुद्धानां निर्दोषाणां परिपाकं फलदानोन्मुखत्वमुपेयुषां गतानां तपसां फलान्युपभुञ्जानाः तपस्विनस्तपोनिष्ठाः । प्रारब्धभोगिनो निस्पृहाश्चेति भावः । कुलकम् ॥

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥

तेषामिति ॥ तेषामृषीणां मध्यगता साध्वी पतिव्रता । अतएव पत्युर्वसिष्ठस्य पादयोरर्पितेक्षणा निविष्टदृष्टिररुन्धती साक्षात्प्रत्यक्षा तपःसिद्धिरिव मेवेति शेषः । तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा । बहु बभासे भाति स्म ॥

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२ ॥

तामिति ॥ ईश्वरो भगवांस्तामरुन्धतीं मुनींश्चागौरवभेदेन समा पत्त्यापश्यद्दृष्टवान् । न चायमविवेक इत्याह—हि यस्मात्स्त्री पुमांश्चेत्येषा स्त्रीपुंसभेदो न विवक्षितः । किंतु सतां साधूनां वृत्तं चरित्रमेव महितं पू 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति भावः ॥

तद्दर्शनादभूच्छंभोर्भूयान्दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ॥ १३ ॥

तदिति ॥ तद्दर्शनादरुन्धतीदर्शनाच्छंभोर्दारार्थं परिग्रहार्थमादरो न्बहुतरोऽभूत् । ननु दाराः कुत्रोपयुज्यन्त इत्यत्राह—धर्म्याणां धर्माद नाम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । क्रियमाणानामिज्यादीनां पतिव्रताः पत्न्यः सत्पत्न्यः । 'पत्युर्नो यज्ञसंयोगे' इति ङीप् नकारश्च । कारणं खलु ॥

१ भूयः. २ साधनम्.

धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥

धर्मेणेति ॥ धर्मेण दारसंजिघृक्षालक्षणेनापि कर्त्रा । शर्वे ईश्वरे पार्वतीं पदं कारिते सति । 'हृक्रोरन्यतरस्याम्' इति शर्वस्याणिकर्तुः कर्मत्वम् । पराधभीतस्य कामस्य मन उच्छ्वसितम् । पुनरुज्जीवनावकाशो भवतीति त्याशमभूदित्यर्थः ॥

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥

अथेति ॥ अथानूचानाः साङ्गवेदप्रवक्तारः । 'अनूचानः प्रवचने साङ्गेऽधीती स्तु यः' इत्यमरः । 'उपेयिवाननाश्वाननूचानश्च' इति निपातः । प्रीत्या टकिताः पुलकितास्त्वचो येषां ते तथोक्ताः । ते सर्वे मुनयो जगद्गुरुं हरं नयित्वा पूजयित्वेदं वक्ष्यमाणमूचुः ॥

यद्ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥

यदिति ॥ ब्रह्म वेदः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । सम्यङ्नियमपूर्व- म्नातमधीतमिति यत् । अग्नौ विधिना हुतमिति यत् । तपश्चान्द्रायणादिकं मिति च यत्तस्याध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्मण र्थः । समुदायाभिप्रायकमेकवचनमन्यथावृत्त्यान्वयप्रसङ्गात् । न च नपुंस- कवद्भावः, अनपुंसकेति नियमात् । फलं कार्यमद्य नोऽस्माकं विपक्वम् । सुनि- न्नमित्यर्थः । कर्मणि क्तः । 'पचो वः' इति निष्ठातस्य वत्वम् ॥

तदेव फलमाह—

यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥

यदिति ॥ यद्यस्मात्कारणाज्जगतामध्यक्षेणाधिपेन त्वया वयं मनोरथस्यामि- षयस्याविषयमगोचरमात्मनः स्वस्य मनोविषयं मनोदेशमारोपिताः प्रापिताः । स्माद्विपक्वं फलमिति पूर्वेण संबन्धः । सकलजगदन्वेष्टव्यस्य भगवतोऽपि यमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः ॥

तदेवोपपादयति—

यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥

यस्येति ॥ यस्य जनस्य चेतसि वर्तेथाः । येन स्मर्यस इत्यर्थः । स तावत्स

१ प्रथमे. २ प्रणिपत्य. ३ अप्यपथम्. ४ विश्वयोनेः.

एव कृतिनां कृतकृत्यानां वरः श्रेष्ठः । ब्रह्मणो वेदस्य वेधसो वा योनि णस्य । यद्वा वेदप्रमाणकस्य तव चेतसि यो वर्तते । त्वया स्मर्यत किं पुनः । स कृतिनां वर इति किमु वक्तव्यमित्यर्थः ॥

सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां[1] स्मरणानुग्रहात्तव ॥ १९ ॥

**सत्यमिति** ॥ अर्कात्सूर्याच्च सोमाच्चन्द्राच्च परमुच्चैः पदं स्थानम तिष्ठामः । वयमिति शेषः । सत्यम् । 'अधिशीङ्स्थासां कर्म' इति कर्म अद्य तु तव कर्तुः । स्मरणमेवानुग्रहः प्रसादस्तस्माद्धेतोः । ताभ्या भ्यामुच्चैस्तरमत्युच्चं पदम् । अध्यास्महे इति संबन्धः । उच्चैस्तरमिति र्षत्वान्नामुप्रत्ययः ॥

त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥

**त्वदिति** ॥ वयं त्वया संभावितं सत्कृतं त्वत्संभावितमात्मानमात्म बह्वधिकं यथा तथा मन्यामहे । तथाहि । उत्तमादरः सत्पुरुषकर्तृकः स्वगुणेषु विषये प्रायेण भूम्ना प्रत्ययं विश्वासमाधत्ते जनयति । सर्वस्यापि जनपरिग्रह एव पूज्यताहेतुरित्यर्थः ॥

या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसंभवा ।
सा किमावेद्यते[2] तुभ्यमन्तरात्मासि देहिनाम् ॥ २१ ॥

**येति** ॥ हे विरूपाक्ष, त्वदनुध्यानसंभवा त्वत्कर्तृकस्मरणजन्या नो या प्रीतिः सा प्रीतिस्तुभ्यं किमावेद्यते किमर्थं निवेद्यते । तथाहि । दे प्राणिनामन्तरात्मान्तर्याम्यसि । सर्वसाक्षिणा त्वयास्मत्प्रीतिरनावेदितापि एव यतस्ततो न बुद्धबोधनं संभवतीति भावः ॥

साक्षाद्दृष्टोऽसि न[3] पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥ २२ ॥

**साक्षादिति** ॥ हे देव, साक्षात्प्रत्यक्षेण दृष्टोऽसि । अञ्जसा पुनस्तत्त्व त्वां वयं न विद्मः । दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः । अतः प्रस नुगृहाण । आत्मानं निजस्वरूपं कथय । न चाकथितं तत्सुबोधमित्याह— बुद्धीनां पथि न वर्तसे । अतस्त्वयैव त्वद्रूपं कथनीयमित्यर्थः ॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं मित्याह—

१ तस्मात्. २ आख्यायते. ३ नो विद्मः पुनः.

**किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।**
**अथ विश्वस्य संहर्ता भागः कतम एष ते ॥ २३ ॥**

**किमिति** ॥ हे देव, एष दृश्यमानस्ते भागो मूर्तिः किं येन भागेन क्तं प्रपञ्चं सृजसि सः । यत्तदोर्नित्यसंबन्धात्सर्वत्र तच्छब्दोऽध्याहार्यः । उत भागेन तद्व्यक्तं बिभर्षि पालयसि स वा । अथ यो भागस्तस्य विश्वस्य र्ता स वा । किमादयः संदेहे । कतमः । ब्रह्मविष्णुमहेश्वरेष्वयं कतमो गस्तदुच्यतामित्यर्थः ॥

ननु हर इत्येवं निश्चयात्कथमयं संशयस्तत्राह—

**अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।**
**चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥ २४ ॥**

**अथवेति** ॥ अथवा हे देव, सुमहती । गुह्यतमत्वादतिदुर्लभेत्यर्थः । एषा र्थना निजरूपनिरूपणप्रार्थना तिष्ठतु । किंतु चिन्तितेन चिन्तिता एवोपस्थिता-न्तितोपस्थितास्तान्नोऽस्मांस्तावच्छाध्याज्ञापय किं करवाम । प्रार्थनायां लोट् । लमप्रस्तुतेन, प्रस्तुते तावन्नियुङ्क्ष्वेत्यर्थः ॥

**अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।**
**उपचिन्वन्प्रभां तन्वीं प्रत्याह परमेश्वरः ॥ २५ ॥**

**अथेति** ॥ अथ परमेश्वरो मौलिगतस्येन्दोस्तन्वीमल्पाम् । कलामात्रत्वादिति वः । प्रभां कान्तिं विशदैः शुभ्रैर्दशनांशुभिरुपचिन्वन्वर्धयन्प्रत्याह । प्रत्यु-चेत्यर्थः ॥

**विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।**
**ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ २६ ॥**

**विदितमिति** ॥ हे मुनयः, काश्चिदपि मे प्रवृत्तयो व्यापाराः स्वार्था न भ-न्ति यथा तथा वो युष्माकं विदितम् । वाक्यार्थः कर्म । बुद्ध्यर्थत्वाद्वर्तमाने क्तः । योगात्षष्ठी । प्रवृत्तिपारार्थ्ये प्रमाणमाह—अष्टाभिर्मूर्तिभिरित्थंभूतं इमं प्रकारं रार्थप्रवृत्तिरूपं प्राप्तः । 'भू प्राप्तौ' इति धातोः कर्तरि क्तः । सूचितो ज्ञापि-तोऽस्मि । मत्स्वमूर्तिचेष्टया स्वपारार्थ्यमनुमेयमित्यर्थः ॥

**सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।**
**अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥**

**सोऽहमिति** ॥ स परार्थवृत्तिरहं तृष्णातुरैश्चातकैर्वृष्टिं विद्युत्वान्मेघ इवारि-विप्रकृतैः शत्रुपीडितैर्देवैः प्रसूतिं पुत्रोत्पादनं प्रति याचितः । याचतेर्दुहादित्वाद-प्रधाने कर्मणि क्तः ॥

---

१ यस्तस्य.

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥

**अत इति** ॥ अतः सुरप्रार्थितत्वाद्धेतोरात्मने पुत्राय । पुत्रसु… तुमित्यर्थः । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । पार्वतीं यजमानो… 'पूङ्यजोः शानन्' इति शानन्प्रत्ययः । हविर्भोक्तुरग्नेरुत्पत्तयेऽरणिम… नदारुविशेषमिव । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । आहर्तुं… तुमिच्छामि ॥

तामसदर्थे युष्माभिर्याचितव्यो हिमालयः[1] ।
विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ २९ ॥

**तामिति** ॥ अस्मदर्थेऽस्मत्प्रयोजने निमित्ते सति युष्माभिस्तां पार्वतीं… लयो हिमवान्याचितव्यः । याचेर्दुहादित्वादप्रधाने कर्मणि तव्यप्रत्य… आवश्यकं चैतदित्याह—सद्भिः सत्पुरुषैरनुष्ठिताः संघटिताः संबन्धा यौन… विक्रियायै वैकल्योत्पादनाय न कल्पन्ते न पर्याप्नुवन्ति । न समर्था इत… अलमर्थयोगाच्चतुर्थी ॥

न चाहं लौल्यात्स्त्रियमिच्छामि किंतु देवोपकाराय । यद्येवं निखिल… विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स… श्लाघ्यसंबन्धोऽत्रभवान्हिमवानित्याह—

उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसंबन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥

**उन्नतेनेति** ॥ उन्नतेन प्रांशुना प्रसिद्धेन च स्थितिमता प्रतिष्ठावता… धुरं भारमुद्वहता । निर्वाहकेणेत्यर्थः । तेन हिमवता योजितः संघटितः सं… यौनसंबन्धो यस्य तं मामप्यवञ्चितमव्यामोहितं वित्त जानीत । 'विद… इति धातोर्लोट् ॥

तर्हि स किं वाच्य इत्याशङ्क्याह—

एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१ ॥

**एवमिति** ॥ कन्यार्थं कन्याप्रदानाय स हिमवानेवं वाच्य इति… युष्मभ्यं नोपदिश्यते । कुतः । हि यस्मात्साधवो विद्वांसो भवद्भिः प्रणीतं… रूपेण निबद्धमाचारमामनन्त्युपदिशन्ति । न हि स्वयमुपदेष्टारः परोपदे… क्षन्त इत्यर्थः ॥

आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति ।
प्रायेणैवंविधे कार्ये पुरंध्रीणां प्रगल्भता ॥ ३२ ॥

1 हिमाचलः.

आर्येति ॥ आर्या पूज्यारुन्धत्यपि तत्र विवाहकृत्ये व्यापारं साहाय्यं कर्तुम-
। तथाहि । प्रायेण प्राचुर्येणैवंविधे कार्ये विवाहादिकार्ये । दुर्घट इत्यर्थः ।
स्त्रीणां कुटुम्बिनीनाम् । 'स्यात्तु कुटुम्बिनी । पुरंध्री' इत्यमरः । प्रगल्भता
र्यम् । स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥

तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन्संगमः पुनरेव नः ॥ ३३ ॥

तदिति ॥ तत्तस्मात्कारणादोषधिप्रस्थं नाम हिमवत्पुरं हिमवन्नगरं सिद्धये
र्यसिद्ध्यर्थं प्रयात गच्छत । अस्मिन्पुरोवर्तिनि । महाकोशी नाम तत्रत्या
चिन्नदी तस्याः प्रपाते भृगावेव । सा नदी यत्र पतति तस्मिन्नित्यर्थः ।
पातस्त्वतटो भृगुः' इत्यमरः । नोऽस्माकं पुनः संगमः । अस्त्विति शेषः ।
त्समागमं प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥

तस्मिन्संयमिनामाद्ये जाते परिणयोन्मुखे[1] ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः[2] ॥ ३४ ॥

तस्मिन्निति ॥ संयमिनां योगिनामाद्ये तस्मिन्नीश्वरे परिणयोन्मुखे विवाहो-
के जाते सति प्रजापतेरिमे प्राजापत्याः । ब्रह्मपुत्रा इत्यर्थः । तपस्विनो मुनयः
रिग्रहैः पत्नीभिर्व्रीडाम् । गार्हस्थ्यनिमित्तामित्यर्थः । 'पत्नीपरिजनादानमूल-
पाः परिग्रहाः' इत्यमरः । जहुस्तत्यजुः । जहातेर्लिटि रूपम् । न हि समान-
गदोषेषु व्रीडागमोऽस्तीति भावः ॥

ततः परम[3]मित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः प्रथमोद्दिष्टमास्पदम्[4] ॥ ३५ ॥

तत इति ॥ ततोऽनन्तरं मुनिमण्डलं मुनिसमूहः परममित्युक्त्वा ओमि-
त्युक्त्वा । अनुमन्येत्यर्थः । अव्ययमेतत् । 'ओमेवं परमं मतम्' इत्यमरः ।
तस्थे । भगवानीश्वरोऽपि प्रथमोद्दिष्टं पूर्वसंकेतितमास्पदं स्थानं महाकोशी-
पातं संप्राप्तः ॥

ते[5] चाकाशमसिश्याममुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६ ॥

त इति ॥ मनसा समरंहसो मनस्तुल्यवेगास्ते परमर्षयश्च । पूर्वश्लोकोक्ते-
रसमुच्चयार्थश्चकारः । असिवच्छ्यामं नीलमाकाशं खं प्रत्युत्पत्यौषधिप्रस्थं
हिमवत्पुरमासेदुः । सद्यः प्रापुरित्यर्थः ॥

इतः परं दशभिः श्लोकैरोषधिप्रस्थमेव वर्णयति—

अलकामतिवाह्यैव[6] वसतिं वसुसंपदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्[7] ॥ ३७ ॥

१ उत्सुके. २ तपोधनाः. ३ प्रमाणम्. ४ आश्रमम्. ५ अथ. ६ इव. ७ विनिवेशितम्.

अलकामिति ॥ वसुसंपदां धनसमृद्धीनां वसतिं स्थानमलकां कु॰ मतिवाह्य । परिच्छिद्येति यावत् । उपनिवेशितमिव स्थितम् । तथा भिष्यन्दोऽतिरेकः । अतिरिक्तजन इति यावत् । तस्य वमनं निःसारणं निवेशितमिव स्थितम् । उभयत्रापि कौटिल्यः—'भूतपूर्वमभूतपूर्वं वा परदेशापवादेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति । अलका॰ तिशयितसमृद्धिकमित्यर्थः ॥.

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि[1] मनोहरम् ॥ ३८ ॥

गङ्गेति ॥ गङ्गायाः स्रोतोभिः प्रवाहैः परिक्षिप्तं परिवेष्टितम् । तैरे॰ खमित्यर्थः । वप्रश्चयः । प्राकारचैत्यमिति यावत् । 'स्याच्चयो वप्रम॰ इत्यमरः । तस्यान्तर्मध्ये ज्वलिताः प्रकाशमाना ओषधयो यस्य तत्त॰ ज्वलितौषधित्वाद्रात्रिषु संचारिणां दीपनिरपेक्षमित्यर्थः । बृहद्विपुलो॰ शिलानां माणिक्यानां सालः प्राकारो यस्य तत्तथोक्तम् । 'प्राकारो॰ सालः' इत्यमरः । अतएव गुप्तावपि संवरणेऽपि मनोहरम् । अकृत्रिम॰ वरणमिति भावः ॥

जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥ ३९ ॥

जितेति ॥ यत्र पुरे नागा गजा जितं सिंहेभ्यो भयं यैस्ते तथोक्ताः॰ धिकबला इत्यर्थः । नाथस्तु 'पदं तुषारस्रुतिधौतरक्तम्' (१ । ६)॰ द्विरोधभयात् 'वीतवीतभयाः' इति पपाठ । तथा न भेतव्यं तत्र वन॰ सिंहहतत्वाभिधानात् । अत्र त्वोषधिप्रस्थगजानां हिमवन्महिम्ना सिं॰ कसंभवेनाविरोधादिति । 'वीतवीतभयाः' इति पाठे वीतं विगतं वीता॰ शकर्मभ्यां भयं येषां ते तथोक्ताः । स्वभावविनीता इत्यर्थः । 'पादकर्मयुत॰ यातमङ्कुशवारणम् । उभयं वीतमाख्यातम्' इति यादवः । अश्वा बिल॰ बिलसंभवाः । अन्यत्र तु न तथेति वैचित्र्यम् । उक्तं च—'अमृताद्वा॰ वह्नेर्वेदेभ्योऽण्डाच्च गर्भतः । साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता॰ इति । यक्षाः प्रसिद्धाः । किंपुरुषाः किंनराश्च पौराः पुरजनाः । वनदेवता॰ योषितः । न तु मानुष्य इत्यर्थः ॥

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः[2] करणैर्मुरजस्वनाः ॥ ४० ॥

शिखरेति ॥ यत्र पुरे शिखरेष्वासक्ता मेघा येषां तेषां वेश्मनां॰ न्धिनः । अनुगर्जितानि प्रतिगर्जितानि तैः संदिग्धा मुरजस्वनाः करणैस्ता॰

१ स्वर्गादपि. २ मन्द्रगर्जित.

पकैस्ताडनविशेषैः । तदुक्तं राजकंदर्पेण—'नृत्यवादित्रगीतानां प्रयोगव-दिनाम् । संस्थानं ताडनं रोधः करणानि प्रचक्षते ॥' इति । व्यज्यन्ते क्रियन्ते ॥

यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥

यत्रेति ॥ यत्र नगरे विलोलानि चञ्चलानि विटपेष्वंशुकानि येषां तैः कल्प-रेवापौरादरेण पौरादरं विनैव निर्मिता । अयत्नसिद्धेत्यर्थः । गृहेषु यानि ण्याधारदारूनि तेषु पताकास्तासां श्रीः संभवतीति शेषः । तत्र लम्बाम्बराः पतरव एव वैजयन्तीति संभाव्यन्त इत्यर्थः ॥

यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु[1] ।
ज्योतिषां प्रतिविम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥

यत्रेति ॥ यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्येष्वापानभूमिषु पानगोष्ठीप्रदेशेषु तिषां नक्षत्राणां प्रतिबिम्बान्युपहारतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा नुवन्ति ॥

यत्रौषधिप्रकाशेन नक्तं दर्शितसंचराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥ ४३ ॥

यत्रेति ॥ यत्र पुरे दुर्दिनेषु मेघाच्छन्नदिवसेषु नक्तमोषधीनां तृणज्योतिषां काशेन संचरन्त एभिरिति संचराः पन्थानः । 'गोचरसंचर-' इत्यादिना घप्र-यान्तो निपातः । दर्शितसंचराः प्रकाशितमार्गा अभिसारिकाः कान्तार्थिन्यः । कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यमरः । तमिस्राणां तमसाम् । योगात्कर्मणि षष्ठी । अनभिज्ञाः । तमांसि नाभिजानन्तीत्यर्थः ॥

यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।
रतिखेद[2]समुत्पन्ना निद्रा संज्ञाविपर्ययः ॥ ४४ ॥

यौवनान्तमिति ॥ यस्मिन्पुरे वयो यौवनान्तं यौवनावधिकम् । सर्वेऽप्य-रा इत्यर्थः । तथा कुसुमायुधात्कामात् । अन्य इति शेषः । अन्तको मृत्युर्न । स्तीति शेषः । विरहिणां तादृग्दुःखोत्पादकत्वादन्तकत्वोपचारः । कामं विना त्युर्नास्तीत्यर्थः । अतएव तत्कार्यभूतमरणाभाव इत्याशयेनाह—रतीति । तिखेदसमुत्पन्ना निद्रा सुप्तिरेव संज्ञाविपर्ययश्चेतनापगमः । न तु दीर्घनिद्रारूप त्यर्थः । अत्रत्याः सर्वेऽजरामरा इति श्लोकतात्पर्यार्थः । अन्तयत्यन्तं करोतीत्य-न्तकः । अन्तयतेस्तत्करोतीति ण्यन्ताद्यत्प्रत्ययः ॥

भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥ ४५ ॥

१ पङ्क्तिषु. २ समुत्थाना.

भ्रूभेदिभिरिति ॥ यत्र पुरे प्रिया युवानो भ्रूभेदिभिर्भ्रूभङ्गवद्भिः ओष्ठा येषु तैर्ललितान्यङ्गुलितर्जनानि येषु तैः स्त्रीणां कोपैर्मानप्रसादार्थिन आ प्रसादं प्रसादपर्यन्तमर्थिनो याचकाः कृताः । न तु पैरिति भावः ॥

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ ४६ ॥

संतानकेति ॥ किंचेति चार्थः । संतानकतरोश्छायासु सुप्ता विद्याधरा देवताविशेषास्त एवाध्वगा यस्मिंस्तत्तथोक्तं गन्धवद्गन्धाढ्यं गन्धमादनो गिरिर्यस्य पुरस्य बहिर्भवं बाह्यमुपवनमारामः । संतानकतरुच्छायेत्यत्र पूर्वपदार्थबाहुल्यसंभवेऽपि 'शलभच्छायम्' 'इक्षुच्छायम्' इतिवत्समर्थच्छायानिष्पत्त्यपेक्षाभावात् 'छाया बाहुल्ये' इति नपुंसकत्वं नास्तीत्यनुसंधेयम् । अत्र 'गन्धवद्गन्धमादनम्' इत्यागन्तुकः पाठः । प्राचीनपाठस्तु 'सुगन्धिर्गन्धमादनः' इति पुंलिङ्गान्तः । अतएव क्षीरस्वामिना 'गन्धमादनमन्ये च' इत्यत्र गन्धेन माद्यतीति गन्धमादन इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याह 'सुगन्धिर्गन्धमादनः' इति कालिदास इति ॥

अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसंधिसुकृतं वञ्चनामिव मेनिरे ॥ ४७ ॥

अथेति ॥ अथ ते दिवि भवा दिव्या मुनयो हिमवत इदं हैमवतं पुरं स्वर्गाभिसंधिना स्वर्गोद्देशेन यत्सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत्स्वर्गाभिसंधि वञ्चनां प्रतारणामिव मेनिरे । हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्वं वेदेन वयं विप्रलब्धा इत्यर्थः । स्वर्गादतिरमणीयमिति भावः ॥

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८ ॥

त इति ॥ लिखितानलनिश्चलैः । चित्रगतज्वलननिष्पन्दैरिति वेत्यस्य नपोक्तिः । जटाभारैरुपलक्षितास्ते मुनयः । द्वारि तिष्ठन्तीति द्वाःस्था द्वारपालकाः 'प्रतिहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः' इत्यमरः । उन्मुखैरुन्मुखैर्द्वाःस्थैर्वीक्षिताः सन्तः । न तु विनिवारिता इत्यर्थः । गिरेर्हिमवतः सद्मनि वेगादवतेरुरवतीर्णवन्तः ॥

गगनादवतीर्णा सा यथावृद्धपुरस्सरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९ ॥

गगनादिति ॥ गगनादवतीर्णावरूढा यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरस्सरा अग्रेसरा यस्यां सा तथोक्ता । अनुपसर्जनाधिकारान्न ङीप् । सा मु

---

१ सुगन्धि गन्धमादनम्. २ ततस्ते. ३ निश्चलाः.

ा मुनिपङ्क्तिस्तोयान्तस्तोयाभ्यन्तरे भास्करालो प्रतिबिम्बितार्कपङ्क्तिरिव रेजे । मुनीनां तेजस्वित्वेऽपि सुखसंदर्शनं सूचयति । भास्कराणां भूयिष्ठत्वसं-नार्थं तोयान्तरित्युक्तम् । अतएव बहुत्वसिद्धिश्च ॥

तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः ।
नमयन्सारगुरुभिः पादन्यासैर्वसुंधराम् ॥ ५० ॥

ानिति ॥ गिरिर्हिमवानर्घ्यमर्घार्थं जलमादाय सारगुरुभिरन्तःसारदुर्भरैः न्यासैर्वसुंधरां नमयन्नधः प्रापयन् । अर्घमर्हन्तीत्यर्घ्यान्पूज्यान् । दण्डादि-प्रत्ययः । तान्मुनीन्दूरात्प्रत्युद्ययौ ॥

ंप्रति हिमवन्तमेव जंगमस्थावररूपद्वयसाधारणैर्विशिनष्टि—

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१ ॥

धात्विति ॥ धातुवत्ताम्रोऽधरो यस्य स तथोक्तः । अन्यत्र धातुरेव ताम्रो-ो यस्य । प्रांशुरुन्नतः । उभयत्रापि समानम् । देवदारुवद्बृहन्तौ भुजौ यस्य तथोक्तः । देवदारव एव बृहन्तौ भुजौ यस्येत्यन्यत्र । प्रकृत्या स्वभावेनैव ावदुरो यस्य स शिलोरस्कः । शिलैवेत्यन्यत्र । 'उरःप्रभृतिभ्यः कप्' इति । अतो हिमवानिति सुव्यक्तः । वर्तमाने क्तः । सत्यं स एवायं हिमवानिति र्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥

विधिप्रयुक्तसत्कारैः[1] स्वयं मार्गस्य दर्शकः[2] ।
स तैराक्रमयामास[3] शुद्धान्तं शुद्धकर्मभिः ॥ ५२ ॥

विधीति ॥ स हिमवान्विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्चनैः शुद्धक-मरदुष्टचरितैः । शुद्धान्तप्रवेशार्हैरित्यर्थः । तैर्मुनिभिः स्वयं मार्गस्य दर्शय-ते दर्शको दर्शयिता सन् । पश्यतेर्ण्यन्तादण्प्रत्ययः । शुद्धान्तमन्तःपुरमाक्र-मास । प्रवेशयामासेत्यर्थः । अत्र क्रमेरगत्यर्थत्वात् 'गतिबुद्धि–' इत्यादिना त्यस्य न कर्मत्वम् ॥

तत्र वेत्रासनासीनान्कृतासनपरिग्रहः[4] ।
इत्युवाचेश्वरान्वाचं प्राञ्जलिर्भूधरेश्वरः[5] ॥ ५३ ॥

तत्रेति ॥ वेत्रं लताविशेषः । तत्र शुद्धान्ते वेत्रासनासीनान्वेत्रमयविष्टरोप-ष्टानीश्वरान्प्रभून्मुनीन्भूधरेश्वरो हिमवान्कृतासनपरिग्रहः । उपविष्टः सन्नि-र्थः । प्राञ्जलिः कृताञ्जलिः सन् । इत्येवं वाचमुवाच ॥

अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥

१ सत्कारान्. २ देशकः. ३ तान्. ४ नीचासन. ५ पृथिवीधरः.

अपेति ॥ अतर्कितोपपन्नमविचारितमेवोपगतम् । अत्यन्तासं- त्यर्थः । वो युष्माकं दर्शनमपमेघोदयं वर्षमनभ्रा वृष्टिस्तथाऽदृष्टं कु- तत्तथोक्तं फलं च तन्मे प्रतिभाति । अतिदुर्लभलाभः संवृत्त इत्य- मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाभिधानाद्वि- मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालंकारश्चेत्युभयोः संसृष्टिः

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥

मूढमिति ॥ भवदनुग्रहादात्मानं मां मूढं बुद्धिं विना कृतं बुद्धा भूत्वा यो बुद्धवांस्तमिव । कर्तरि क्तः । आयसमयोविकारं हैमीभूतम् सत्वं विहाय सौवर्णत्वं प्राप्तमिवेत्यर्थः । भूमेर्भूलोकाद्दिवं स्वर्गमारूढमिव ज्ञानरूपस्थानान्यद्य मे परमुत्कृष्यन्त इति भावः ॥

अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते[1] ॥ ५६ ॥

अद्येति ॥ अद्यप्रभृतीत आरभ्य भूतानां प्राणिनां शुद्धयेऽधिगम्यः शुद्ध्यर्थिनां तीर्थभूतोऽस्मीत्यर्थः । भवदागमनादिति शेषः । हि यदर्हद्भिः सद्भिरध्यासितमधिष्ठितम् । जुष्टमिति यावत् । तत्तीर्थं प्र- 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः ॥

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥

अवैमीति ॥ हे द्विजोत्तमाः, आत्मानं मां द्वयेनैव पूतं शुद्धमवैम्यवगच्छामि । केन । द्वयेन । मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन, वो युष्माकं क्षालितयोः पादयोरम्भसा च । गङ्गाजलवत्पादाम्भसः पावनत्वमि- गम्यते । तच्च 'प्रस्तुताप्रस्तुतयोः' इति दीपकालंकारः । 'प्रेयः प्रियतरा- इति लक्षणात्प्रेयोलंकार इति केचित् ॥

जङ्गमं प्रैष्यभावे[2] वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि[3] मे वपुः ॥ ५८ ॥

जङ्गममिति ॥ हे मुनयः, द्विरूपं जंगमस्थावरात्मकत्वाद्द्विप्रकारकं वपुर्विभक्तानुग्रहं विभज्य कृतप्रसादं मन्ये । कुतः । जंगमं वपुर्वो युष्माकं भावे कैंकर्ये । स्थितमिति शेषः । 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति 'नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः' इत्यमरः । स्थावरं वपुश्चरणाङ्कितम् अयमेव हि महाननुग्रहो दासजनस्य यत्कर्मसु नियोजनं मूर्धनि पादन्या- तात्पर्यार्थः ॥

१ प्रचक्ष्यते. २ प्रैक्ष्यभावेन. ३ विरूपम्; द्वैरूप्यम्.

भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥

वदिति ॥ व्याप्ता दिगन्ता यैस्तानि व्याप्तदिगन्तानि । महान्त्यपीत्यर्थः । माङ्गानि भवत्संभावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितो- न प्रभवन्ति न पर्याप्नुवन्ति । अलमर्थयोगाच्चतुर्थी । यथा महत्स्वपि मद्गा- न माति तथा मे हर्षो वर्धत इत्यर्थः ॥

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥

ति ॥ भास्वतां तेजस्विनां विवस्वतां च वो युष्माकं दर्शनेन केवलं दरी- गुहागतं तमो ध्वान्तरूपमेव नापास्तम् । किंतु मेऽन्तर्गतमन्तरात्मगतं ो रजोगुणात्परमनन्तरं तमोऽज्ञानरूपमप्यपास्तम् । रजस्तु पादन्यासैरेवा- तमिति भावः । प्रसिद्धैर्भास्वद्भिर्बाह्यं तमोऽपास्यते, एभिस्त्वान्तरमपीति तरेको व्यज्यते ॥

कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते[2] ।
मन्ये[3] मत्पावनायैव प्रस्थानं भवतामिह[4] ॥ ६१ ॥

कर्तव्यमिति ॥ कर्तव्यं कार्यं वो युष्माकं न पश्यामि । निःस्पृहत्वादिति ः । अथ स्याच्चेद्विद्येत यदि किं नोपपद्यते किं नाम न संभवति । सर्वं भमेवेत्यर्थः । अथवा किमत्र प्रयोजनचिन्तयेत्याह—मत्पावनाय मच्छोधना- भवतामिह विषये प्रस्थानम् । इमं देशमुद्दिश्येदं प्रयाणमित्यर्थः । मन्ये यामि ॥

तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६२ ॥

तथापीति ॥ तथापि भवतां निःस्पृहत्वेऽपि कस्मिंश्चित् । कर्मणीति शेषः । ज्ञामिदं कुर्वित्यादेशं तावदिदानीं मे मह्यं दातुमर्हथ । मदनुग्रहबुद्ध्येति वः । हि यस्मात्किंकरा भृत्याः । प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये । वश्च' इतीष्णुच्प्रत्ययः । विशेषेण नियोगो विनियोगः प्रेषणमेव प्रसादोऽनु- ो येषां ते तथोक्ताः । अन्यथा स्वस्वामिभावो निष्फल इति भावः ॥

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ६३ ॥

एत इति ॥ किं बहुना, एते वयममी दारा इयं कुलस्य जीवितं प्राणभूतां मप्रेमास्पदमित्यर्थः । कन्या । अत्रैषां मध्ये येन जनेन वः कार्यं प्रयोजनं त । तमिति शेषः । येन सोऽपि दीयत इति भावः । रत्नहिरण्यादिकं तु न

१ अभिव्याप्त. २ उपदिश्यते. ३ शङ्के. ४ इदम्.

मे गण्यमित्याह—बाह्यवस्तुषु कनकरत्नादिष्वनास्थानादरः। प्रसज्य नञ्समास इष्यते। अदेयं न किंचिदस्तीति भावः॥

इत्यूचिवांस्तमेवार्थं गुहामुखविसर्पिणा।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः॥ ६४॥

इतीति॥ इत्यूचिवानुक्तवान्। वचेः क्वसुप्रत्ययः। हिमालयो हिमव मुखेषु विवरेषु विसर्पतीति तथोक्तेन प्रतिशब्देन तमेव पूर्वोक्तमेवार्थं द्वि 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः। व्याजहार बभाषे॥

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम्॥ ६५॥

अथेति॥ अथानन्तरमृषय उदाहरणानि कथाप्रसङ्गास्त एव वस्तून्यर्थ नयतीत्यग्रणीस्तमग्रण्यं प्रगल्भम्। 'सत्सूद्विष—' इत्यादिना क्विप् 'अग्र नयतेरिति वक्तव्यम्' इति णत्वम्। अङ्गिरसं नामर्षिं नोदयामासुः प्रेरयामासुः। सोऽङ्गिरा भूधरं हिमवन्तं प्रत्युवाच॥

उपपन्नमिदं सर्वमतः परमपि त्वयि।
मनसः शिखराणां च सदृशी ते समुन्नतिः॥ ६६॥

उपपन्नमिति॥ इदम् 'एते वयममी दाराः' (६। ६३) इत्या मतः परमतोऽधिकमपि त्वय्युपपन्नं यज्यते। तथाहि। ते मनसः च समुन्नतिः सदृशी। शिखराणीव मनो महोन्नतमित्यर्थः। किं नाम दु तचित्तानामिति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्व लंकारः॥

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते।
चराचराणां भूतानां कुक्षिराधारतां गतः॥ ६७॥

स्थान इति॥ त्वां स्थावरात्मानं स्थावररूपिणं विष्णुमाहुः। 'स्था हिमालयः' इति गीतावचनात्। स्थाने युक्तम्। युक्तार्थेऽव्ययमेतम् द्धे सांप्रतं स्थाने' इत्यमरः। तथाहि। ते तव कुक्षिश्चराचराणां जंगम रूपिणां भूतानां पृथिव्यादीनामाधारतां गतः। तवेव विष्णोः कुक्षि इति भावः॥

गामधास्यत्कथं नागो मृणालमृदुभिः फणैः।
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत्॥ ६८॥

गामिति॥ नागः शेषाहिर्मृणालमृदुभिर्बिसकोमलैः फणैर्गां भुवं धास्यद्धारयेत्। त्वमा रसातलमूलात्पातालपर्यन्तम्। विकल्पादसमासः।

---

१ उक्तवान्. २ दरी. ३ हिमाचलः. ४ चोदयामासुः; प्रेर ५मनीषिणः. ६ सदृशैः.

ष्ण्यथाश्चेत्पादैर्नावलम्बथा यदि । त्वदवलम्बनादेव भुजगराजोऽपि भुवं
र्तीत्यर्थः । अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्यः ॥

**अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः[1] ।**
**पुनन्ति लोकान्[2]पुण्यत्वात्कीर्तयः सरितश्च ते ॥ ६९ ॥**

अच्छिन्नेति ॥ अच्छिन्ना अविच्छिन्ना अमलाश्च संतानाः प्रबन्धाः प्रवाहाश्च
ां तास्तथोक्ताः समुद्रोर्मिभिरनिवारिताः । पारगमनादन्तःप्रवेशाच्चेति भावः ।
व कीर्तयः सरितश्च गङ्गादयः पुण्यत्वात्पवित्रत्वाल्लोकान्पुनन्ति पावयन्ति ।
पावनाः खलु पुण्यश्लोका इति भावः । केवलप्रकृतविषयस्तुल्ययोगिता-
रः ॥

**यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।**
**प्रभवेण[3] द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥**

यथैवेति ॥ गङ्गा भागीरथी । प्रभवत्यस्मादिति प्रभवस्तेन कारणेन परमे
ष्ठतीति परमेष्ठिनो विष्णोः । परमे किप्प्रत्ययः । 'तत्पुरुषे कृति बहुलम्'
लुक् । '—परमेबर्हिर्दिव्यग्निभ्यः स्थः' इति षत्वम् । पादेन चरणेन यथैव
घ्यते प्रशस्यते तथैव द्वितीयेन प्रभवेणोच्छिरसा त्वया श्लाघ्यते । हरिचरणव-
स्यापि तीर्थभूतस्त्वमिति भावः ॥

**तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।**
**त्रिविक्रमोद्यतस्यासीत्स तु[4] स्वाभाविकस्तव[5] ॥ ७१ ॥**

तिर्यगिति ॥ तिर्यगूर्ध्वमधस्ताच्च व्यापकः । सर्वव्यापीत्यर्थः । महिमा
स्त्वं हरेर्विष्णोस्त्रिषु विक्रमेषूद्यतस्य सत आसीत् । त्रिविक्रमोद्यतस्यास्ति कदा-
देव न तु सर्वदेत्यर्थः । तव तु व्यापको महिमा स्वाभाविकः । नित्यसिद्ध
र्थः ॥

**यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।**
**उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥**

यज्ञेति ॥ यज्ञभागभुजामिन्द्रादीनां मध्ये पदमातस्थुषा निहितवता त्वयो-
न्नतं हिरण्यस्य विकारो हिरण्मयम् । 'दाण्डिनायनहास्तिनायन–' इत्या-
निपातनात्साधुः । सुमेरोः शृङ्गं शिखरम् । प्राधान्यं च ध्वन्यते । 'शृङ्गं
धान्यसान्वोश्च' इत्यमरः । वितथीकृतं व्यर्थीकृतम् । तस्य यज्ञभागाभावादिति
वः । अस्य तु तत्सद्भावे प्रमाणम्—'हिमवतो हस्ती' इति श्रुतिः ॥

**काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।**
**इदं तु ते भक्तिनम्रं सतामाराधनं[6] वपुः ॥ ७३ ॥**

---

१ निवारिताः. २ लोकम्. ३ प्रभावेन. ४ च. ५ तथा. ६ अर्हदाराधनम्.

काठिन्यमिति ॥ भवता सर्वं काठिन्यम् । अनम्रत्वमित्यर्थः स्थिरे कार्ये । शिलामय इत्यर्थः । अर्पितं न्यस्तम् । सतामर्हतामाराध साधनं त इदं वपुस्तु जंगममित्यर्थः । भक्तिनम्रम् । काठिन्यलेशोऽप्य न्यथा नम्रत्वासंभवादित्यर्थः । तथा चासाधारण्यं ध्वन्यते ॥

[1]तदागमनकार्यं नः शृणु कार्यं [2]तवैव तत् ।
श्रेयसामुपदेशात्तु[3] वयम[4]त्रांशभा[5]गिनः ॥ ७४ ॥

तदिति ॥ तत्तस्मान्नोऽस्माकमागमनस्य कार्यं प्रयोजनं शृणु । त तवैव न त्वस्माकमित्यवधारणार्थ एवकारः । वयं तु श्रेयसामुपदेशा ऽशभागिनः । त्वमेवात्र फलभाग्वयमुपदेष्टार इति भावः ॥

कार्यमेवाह—

अणिमादिगु[6]णोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥ ७५ ॥

अणिमेति ॥ यः शंभुरणिमादिगुणोपेतमणिमादिभिरष्टभिर्गुणैर्वाच्य तम् । अष्टैश्वर्यवाचकमित्यर्थः । अतएवास्पृष्टं पुरुषान्तरं येन तं तथोक्त न्तरस्यानभिधायकम् । तस्यैवैवंगुणत्वादित्यर्थः । उच्चैः परममीश्वर इति निरुपपदेश्वरशब्दमित्यर्थः । सार्धचन्द्रमर्धचन्द्रयुक्तम् । अर्धचन्द्रं बिभर्ति ॥

[7]कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
ये[8]नेदं ध्रि[9]यते विश्वं धुर्यैर्यानमिवाध्वनि ॥ ७६ ॥

कलितेति ॥ येन शंभुना कलितं धृतिसंग्रहादिस्वस्वगुणसंपादितम सामर्थ्यं परस्परसहकाररूपं यैस्तथोक्तैः । स्वस्वरूपसामर्थ्यमन्योन्याधेय भावः । पृथिव्यादिभिरात्मभिः । अष्टाभिर्मूर्तिभिरित्यर्थः । इदं व्यक्तं वि वहन्तीति धुर्यैरश्वैः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । अध्वनि यानं ध्रियते ॥

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ ७७ ॥

योगिन इति ॥ योगिनोऽध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्तिनं शरीरा सर्वभूतान्तर्यामिणम् । परमात्मस्वरूपिणमित्यर्थः । 'क्षेत्रं पत्नीशरीरयोः' मरः । यं शंभुं विचिन्वन्ति मृगयन्ते । मनीषिणो विद्वांसो यस्य शंभोः स्थानमविद्यमानमावृत्तेः पुनः संसारापत्तेर्भयं यत्र तत्तथाभूतमाहुः ॥

---

१ यथा; यत्. २ तथा. ३ च. ४ अपि. ५ भाजिनः. ६ गुणो ७ कलिपताः. ८ यस्य. ९ धार्यते.

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शंभुरस्मत्संक्रामितैः पदैः ॥ ७८ ॥

स इति ॥ विश्वस्य जगतः कर्मणां साक्षी द्रष्टा । 'साक्षाद्द्रष्टरि संज्ञायाम्' निप्रत्ययः । वरानिष्टान्ददातीति वरदः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । पूर्वोक्तः शंभुरस्मत्संक्रामितैः पदैरस्मासु निवेशितैर्वाक्यैस्ते दुहितरं साक्षा- णुते । अस्मन्मुखेन स्वयमेव याचत इत्यर्थः ॥

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ७९ ॥

तमिति ॥ तं शंभुं भारत्या वाचार्थमभिधेयमिव सुतया दुहित्रा योक्तुं संघ- तुमर्हसि । अत्र वागर्थयोरुपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित युक्तम् । 'वागर्थाविव संपृक्तौ' ( रघुवंशे १ । १ ) इत्यत्रापि । तथाहि सद्भर्त्रे तिपादिता दत्ता कन्या पितुरशोच्या ॥

गुणान्तरमप्याह—

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥ ८० ॥

यावन्तीति ॥ स्थावराणि चराणि च यावन्त्येतानि भूतानि । सन्तीति शेषः । र्वाणि भूतानीत्यर्थः । एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मादीशो गतः पिता । पितृदारेषु मातृभावो न्याय्य इति भावः ॥

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१ ॥

प्रणम्येति ॥ विबुधा देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नील- ण्ठप्रणामानन्तरमस्याश्चरणौ चूडामणिमरीचिभी रञ्जयन्तु । ईश्वरपरिग्रहाद- लदेवतावन्द्या भवत्वित्यर्थः ॥

उमा वधूर्भवान्दाता याचितार इमे वयम् ।
वरः शंभुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२ ॥

उमेति ॥ उमा वधूः । भवान्दाता । इमे वयं याचितारः प्रार्थकाः । शंभु- रो वोढा । एष विधिरेषा सामग्री त्वत्कुलस्योद्भूतय उच्छ्रयायालं पर्याप्तं हि । मःस्वस्तिस्वाहास्वधा-' इत्यादिना चतुर्थी ॥

अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासंबन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥

अस्तोतुरिति ॥ स्वयमन्यस्तोता न भवतीत्यस्तोतुः किंतु स्तूयमानस्य सर्व-

१ संक्रमितैः. २ सद्भर्त्रे. ३ जगताम्.

स्तुत्यस्य वन्द्यस्य जगद्वन्द्यस्य स्वयमन्यं न वन्दत इत्यनन्यवन्दिनो वि वस्य सुतासंबन्धविधिना यौनसंबन्धाचरणेन गुरुर्भव। यो नान्यं वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्तेत्यर्थः ॥

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥

एवमिति ॥ देवर्षावङ्गिरस्येवंवादिनि सति पार्वती पितुः पार्श्वे सती। लज्जयेति शेषः। लीलाकमलपत्राणि गणयामास संचख्यौ। स्कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः। अनेनावहित्थाख्यः संचा उक्तः। तदुक्तम्—'अवहित्था तु लज्जादेर्हर्षादाकारगोपनम्' इति ॥

शैलः संपूर्णकामोऽपि मेनामुखमुदैक्षत।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु[1] कुटुम्बिनः ॥ ८५ ॥

शैल इति ॥ शैलो हिमवान्संपूर्णकामोऽपि। दातुं कृतनिश्चयोऽपि मेनामुखमुदैक्षत। उचितोत्तरजिज्ञासयेति भावः। तथाहि। प्रायेण कु गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्यज्ञानकारणं ये तथोक्ताः। कलत्रप्रधानवृत्तय इत्यर्थः ॥

मेने मेनापि तत्सर्वं[2] पत्युः कार्यमभीप्सितम्[3]।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ८६ ॥

मेन इति ॥ मेनापि पत्युर्हिमालयस्य तत्सर्वमभीप्सितं कार्यं मेने कार। तथाहि। पतिरेव व्रतं यासां ता भर्तुरिष्टेऽभीप्सिते न विद्यते व्यभि यासां ता अव्यभिचारिण्यो भवन्ति। भर्तृचित्ताभिप्रायज्ञा भवन्तीति भाव

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः।
आददे वचसामन्ते मङ्गलालंकृतां सुताम् ॥ ८७ ॥

इदमिति ॥ स हिमवान्वचसामन्ते मुनिवाक्यावसानेऽत्र मुनिवाक्ये मुत्तरश्लोके वक्ष्यमाणं दानमेव न्याय्यं न्यायादनपेतमुत्तरमिति बुद्ध्या विमृश्य विचिन्त्य मङ्गलं यथा तथालंकृतां मङ्गलालंकृतां सुतामाददे हस्ते जग्राह ॥

एहि विश्वात्मने[4] वत्से भिक्षासि[5] परिकल्पिता।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८८ ॥

एहीति ॥ हे वत्से पुत्रि, एह्यागच्छ। त्वं विश्वात्मने शिवाय भिक्षा कल्पितासि निश्चितासि। 'रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विनः' इति नादिति भावः। अर्थिनो याचितारो मुनयः। मया गृहमेधिनो गृहस्थस्य प्राप्तम्। इह परत्र च तारकत्वात्पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः॥

१ कन्यार्थे हि. २ सद्यः. ३ समीहितम्. ४ शर्वार्पणे. ५ भिक्षा

एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥ ८९ ॥

एतावदिति ॥ महीधरो हिमवांस्तनयामेतावत्पूर्वोक्तमुक्त्वर्षीनाह—किमि-
। इयं त्रिलोचनवधूस्त्र्यम्बकपत्नी वः सर्वान्नमतीति । त्रिलोचनवधूरिति
द्भूवदभिधानेनाविप्रतिपन्नं दानमिति सूचयति ॥

ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ९० ॥

ईप्सितार्थेति ॥ ते मुनयः । ईप्सितार्थक्रिययेष्टार्थकरणेनोदारं महत् ।
दारो दातृमहतोः' इत्यमरः । गिरेर्हिमवतो वचो वचनमभिनन्द्य साध्विति
स्तुत्याम्बिकामम्बाम् । पच्यत इति पाकः फलम् । पुरःपाकाभिः पुरस्कृत-
लाभिराशीर्भिराशीर्वादैरेधयामासुः संवर्धयामासुः ॥

तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥

तामिति ॥ प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारौ वतं-
के कनककुण्डले यस्यास्तां लज्जमानां तामम्बिकामरुन्धत्यङ्कमारोपयामास ।
हः पोऽन्यतरस्याम्' इति पकारः ॥

तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥ ९२ ॥

तदिति ॥ दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां वियोक्ष्यत इति भीताम् ।
त एवाश्रूणि मुखे यस्यास्तामश्रुमुखीं तस्या अम्बिकाया मातरं तन्मातरं मेनां
। अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः । 'सर्वनाम्नो वृत्तिविषये पुंवद्भावः' इति
र्वपदस्य पुंवद्भावः । स न भवतीत्यनन्यपूर्वस्तस्यानन्यपूर्वस्य । सापत्न्यदुःखम-
र्वेत इत्यर्थः । वरस्य वोढुर्गुणैर्मृत्युंजयत्वादिभिर्विशोकां निर्दुःखामकरोत् ॥

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ९३ ॥

वैवाहिकीमिति ॥ चीरपरिग्रहा वल्कलमात्रवसनास्ते तपस्विनस्तत्क्षणं
स्मिन्नेव क्षणे हरबन्धुना हिमवता वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केत्यनु-
युक्ताः सन्तः । त्रयाणामह्नां समाहारस्त्र्यहः । 'तद्धितार्थोत्तरपदसमाहारे च'
इति समासः । 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । द्विगुत्वादेकवचनम् ।
रात्राह्नाहाः पुंसि' इति पुंलिङ्गता । तस्मात्त्र्यहादूर्ध्वमुपर्याख्याय चतुर्थेऽहनि
वैवाह इत्युक्त्वा चेरुश्चलिताः ॥

१ दुहितुः. २ चेलुः.

ते हिमालयमामन्त्र्य पुनः प्राप्य[1] च शूलिनम् ।
सिद्धं चास्मै[2] निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥

त इति ॥ ते मुनयो हिमालयमामन्त्र्य साधु यामेत्यापृच्छ्य पुनः हरं संकेतस्थानस्थं प्राप्य सिद्धं निष्पन्नमर्थं प्रयोजनमस्मै निवेद्य च च तद्विसृष्टास्तेन शूलिना विसृष्टाः खमाकाशं प्रत्युद्ययुरुत्पेतुः । अत्र सं भिधानात्संक्षेपो नाम गुण उक्तः । तदुक्तम्—'संक्षिप्तार्थाभिधानं परिकीर्तितः' इति ॥

भगवान्पशुपतिस्त्र्यहमात्रविलम्बमपि सोढुं न शशाक तदौत्सुक्यादि

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥

पशुपतिरिति ॥ उत्कं मनो यस्य स उत्कः । 'उत्क उन्मनाः निपातः । अद्रिसुतासमागमोत्कः पार्वतीपरिणयोत्सुकः पशुपतिरपि त्रीणीति शेषः । अहानि कृच्छ्रादगमयदयापयत् । कविराह—अमी औत्सुक्यादयः संचारिणोऽवशमिन्द्रियपरतन्त्रमपरं पृथग्जनं कं न वि विकारं नयेयुः । यद्यस्माद्विभुं समर्थम् । जितेन्द्रियमिति यावत् । तं स्मा स्पृशन्ति । विकुर्वन्तीत्यर्थः । अत्र विभुविकारसमर्थनादर्थादितरजन कैमुतिकन्यायादापततीत्यर्थापत्तिरलंकारः । तथा च सूत्रम्—'दण्डापूपिक न्तरपतनमर्थापत्तिः' इति । 'अर्थान्तरन्यास इति केचित्' तदुपेक्ष्यं युक्तिस्तु विस्तरभयान्नोच्यते । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीस ख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमाप्रदानो नाम षष्ठः सर्गः ।

---

## सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

अथेति ॥ अथ त्र्यहानन्तरं हिमवानोषधीनामधिपस्य चन्द्रस्य वृद्धौ पक्ष इत्यर्थः । शुभकर्मस्वापूर्यमाणपक्षस्य प्राशस्त्यात् । तिथौ च जामित्रं त्सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेनान्वितायां स यद्यपि जामित्रशुद्धिर्लग्नधर्मस्तथापि तद्वारा तिथेरपि तथा व्यपदेशे न

---

१ प्रेक्ष्य. २ तस्मै.

तबन्धुर्युक्तबन्धुः सन् । सुताया दुहितुर्विवाहदीक्षा विवाहसंस्कारः सैव धेः कर्म तमन्वतिष्ठत्कृतवान् ॥

वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरंध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥ २ ॥

वैवाहिकैरिति ॥ अनुरागात्प्रीतिवशात् । गृहे गृहे प्रतिगृहम् । वीप्सायां र्भावः । विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः । 'प्रयोजनम्' इति ठक् । तुकसंविधानैर्मङ्गलार्थसंपादनैर्व्यग्रो व्याकुलः पुरंध्रिवर्गः कुटुम्बिनीसंघो संस्तत्तथोक्तं सानुमतोऽद्रेः पुरं बाह्यमोषधिप्रस्थमन्तःपुरमवरोधनं चैककुले-कगृहेण वोपमेयमासीत् । 'सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्' इति श्वः । सर्वेषामपि स्वगृह एवेदं शोभनं वर्तत इत्यभिमानोऽभूदित्यर्थः । एतेन मान्द्रेः प्रजाराग उक्तः । अत्र सर्वं संपन्नमेवेत्यर्थः ॥

संतानकाकीर्णमहापथं[1] तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्वलत्[2]काञ्चनतोरणानां स्थानान्तरं स्वर्ग[3] इवाबभासे ॥३॥

संतानकैरिति ॥ संतानकैर्मन्दारकुसुमैराकीर्णा आस्तृता महापथा राजकी-पथा यस्मिंस्तत्तथोक्तम् । चीनांशुकैः पट्टवस्त्रैः कल्पिता विरचिताः केतुमाला जपङ्क्तयो यस्य तत्तथोक्तम् । काञ्चनतोरणानां भासा प्रभयोज्वलद्दीप्यमानं पुरं स्थानान्तरं मेरोरन्यत्र स्थितः स्वर्ग इवाबभासे । उत्प्रेक्षालंकारः ॥

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य[4] दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति[5] पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥

एकैवेति ॥ पुत्राश्च दुहितरश्च पुत्राः । 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येक-षः । 'पुत्रौ पुत्रश्च दुहिता च' इत्यमरः । तेषां पङ्क्तौ सङ्घे सत्यामप्युमैकैव रस्य दृष्टेव चिरान्नष्टलब्धेव मृतोत्थितेव मृत्वा पुनरुत्पन्नेवासन्नपाणिग्रहणासन्न-वाहेति । भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः । पित्रोर्मातापित्रोः । 'पिता मात्रा' त्येकशेषः । विशेषेणोच्छ्वसितं प्राणभूता बभूव । पुमपत्यादप्यधिकप्रेमास्प-मभूदित्यर्थः ॥

अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
संबन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥५॥

अङ्कादिति ॥ सा पार्वत्युदीरिताशीः प्रयुक्ताशीर्वादा सत्यङ्कादङ्कमुत्सङ्गं यौ । मण्डनान्मण्डनान्तरमन्यन्मण्डनमन्वभुङ्क्त । तदा सर्वे बन्धवः प्रत्येकमेव मङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः । तच्च स्नेहनिबन्धनमेवेत्याह—संबन्धि-भिन्नः स्वपुत्रादिभिर्भिन्नो विभक्तोऽपि गिरेः कुलस्य वंशस्य स्नेहस्तदेकायतनं वैकमायतनं स्थानं तज्जगाम । तदिति छेदेऽप्ययमेवार्थः । विधेयप्राधान्यान्नपुं-

१ चतुःपथम्. २ भासा ज्वलत्. ३ स्थानान्तरस्वर्गः. ४ चिरेण. ५ उपोढपाणि.

सकत्वमिति । सर्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति यार्थः ॥

मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥

मैत्र इति ॥ अथ मैत्रे मित्रदैवत्ये मुहूर्ते । उदयमुहूर्तात्तृतीयमुहूर्ते । 'आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च' इति बृहस्पतिस्मरणात् । फल्गुनीषु फल्गुनीनक्षत्रे । 'फल्गुनीप्रोष्ठपदानां च नक्षत्रे' इत्येकस्मिन् वचनम् । शशलाञ्छनेन चन्द्रेण योगं गतासु सतीषु तस्याः पार्वत्याः बन्धुस्त्रियः प्रतिकर्म प्रसाधनम् । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । कीदृश्यः । याः पतिपुत्रवत्यः । जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः ॥

प्रतिकर्मप्रकारमेव प्रपञ्चयति—

सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नशोभम्[1] ।
निर्नाभि कौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलंचकार ॥ ७

सेति ॥ सा गौरी गौरसिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिर्दूर्वाप्रवाङ्कुरैः प्रतिभिन्नशोभं विशेषितशोभं निर्नाभ्यतिक्रान्तनाभि कौशेयं वस्त्रं यस्मिंस्तत्तथोक्तम् । 'कौशेयं कृमिकोशोत्थम्' इत्यमरः । उपात्तबाणं गृहीतशरम् । 'शरः क्षत्रियया ग्राह्यः' इति मनुस्मरणात् । अभ्यङ्गनेपथ्यमभ्यङ्गवेषमलंचकार । अलंकारमप्यमलंचकारेत्यर्थः ॥

बभौ च संपर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशाङ्करेखा[2] ॥ ८

बभाविति ॥ किंचेति चार्थः । बाला नवेन दीक्षाविधौ विवाहदीक्षायां सायकस्तेन संपर्कमुपेत्य बहुलावसाने कृष्णपक्षात्यये । शुक्लपक्षादावित्यर्थः । करेण किरणेन संधुक्ष्यमाणोपचीयमाना । 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति' इत्यादिवचनात् । शशाङ्करेखेव बभौ ॥

तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं नार्यश्चतुष्[3]काभिमुखं व्यनैषुः ॥

तामिति ॥ लोध्रकल्केन लोध्रचूर्णेन हृतमङ्गतैलं यस्यास्ताम् । कृतोद्वर्तनामित्यर्थः । आश्यानमीषच्छुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागाम् । गन्ध्यामित्यर्थः । 'अथ जायकम् । कालेयकं च कालानुसार्यं च' इत्यमरः । अभिषेकयोग्यं वासो वस्त्रं वसानां स्नानशाटीमाच्छादयन्तीं तां पार्वतीं नार्यश्चतुःस्तम्भगृहं तदभिमुखं व्यनैषुः । स्नानगृहं निन्युरित्यर्थः ॥

१ रागम्. २ लेखा. ३ अभिमुखीमनैषुः.

विन्यस्तवैदूर्यशि[1]लातलेऽस्मिन्ना[2]विद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥

विन्यस्तेति ॥ विन्यस्तं वैदूर्यशिलातलं मरकतशिलाप्रदेशो यस्मिंस्तस्मिन्नाब-
ां मुक्ताफलानां भक्तिभी रचनाभिश्चित्रेऽस्मिंश्चतुष्क एनां पार्वतीमावर्जिताना-
मितानामष्टापदकुम्भानां कनककलशानां तोयैः सतूर्यं मङ्गलवाद्ययुक्तं यथा
स्नपयांबभूवुः । अष्टसु लोहेषु पदं प्रतिष्ठा यस्येत्यष्टापदम् । 'अष्टनः
ायाम्' इति दीर्घः । 'अष्टापदं स्यात्कनकम्' इति विश्वः ॥

सा मङ्गलस्नानविशुद्धगात्री गृहीतप[3]त्युद्गमनीयवस्त्रा ।
निर्वृ[4]त्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

सेति ॥ मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी पत्युर्वरस्योद्गमनीयवस्त्रं
तवस्त्रम् । 'धौतमुद्गमनीयं स्यात्' इति हलायुधः । 'तत्स्यादुद्गमनीयं यद्धौ-
ोर्वस्त्रयोर्युगम्' इत्यमरः । युगग्रहणं तु प्रायिकाभिप्रायम् । अत एवात्र क्षीर-
मी—'युगं प्रायशो यल्लक्ष्यं तदेव' इति व्याख्याय 'गृहीतपत्युद्गमनीयवस्त्रा'
येतदेवोदाहृतवान् । गृहीतं पतिं प्रत्युद्गमनीयवस्त्रं यया सा । धौतवस्त्रमाच्छा-
तवतीत्यर्थः । सा पार्वती निर्वृत्तो निष्पन्नः पर्जन्यस्य जलेनाभिषेको यस्याः
तथोक्ता । प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधेव
े शुशुभे ॥

तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः प[5]रिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ॥१२॥

तस्मादिति ॥ किंचेति चार्थः । तस्मात्प्रदेशात्स्नानप्रदेशाद्वितानवन्तमुल्लोचयु-
म् । 'अस्त्री वितानमुल्लोचः' इत्यमरः । मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्ज-
नमासनं यस्मिंस्तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्यामालिङ्ग्य
न्ये नीता । प्रसाधनार्थमित्यर्थः ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरोनिषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥१३॥

तामिति ॥ नार्यः प्रसाधिकास्तां तन्वीं पार्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवे-
श्योपवेश्य पुरोनिषण्णा अग्रे स्थिताः । प्रसाध्यतेऽनेनेति प्रसाधनेऽलंकारसाध-
वर्गे संनिहितेऽपि भूतार्था सत्यरूपा । स्वाभाविकीति यावत् । या शोभा राम-
णीयकं तया ह्रियमाणान्याकृष्यमाणानि नेत्राणि यासां तास्तथोक्ताः क्षणं व्यल-
म्बन्त । स्वभावसुन्दर्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुरित्यर्थः ॥

१ शिले च तस्मिन्. २ आविद्ध. ३ शुद्धोद्गमनीय. ४ निवृत्ति. ५ प्रतिगृह्य.

धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १४

धूपेति ॥ काचित्प्रसाधिका धूपोष्मणा करणेनार्द्रभावमार्द्रत्वं त्या[...] पचादिषु पाठाद्विकर्मकत्वम् । त्यजतेर्ण्यन्तादप्रधाने कर्मणि क्तः । अन्त[...] मन्तर्निक्षिप्तकुसुमं तस्या इमं तदीयं केशान्तं केशपाशं दूर्वावता म[...] ग्रथितदूर्वेण पाण्डुमधूकदाम्ना हरितमधुद्रुमकुसुममाल्येन । 'मधूके तु [...] मधुद्रुमौ' इत्यमरः । उदारबन्धं यथा तथा पर्याक्षिपद्बबन्ध ॥

विन्यस्तशुक्लागुरु चकुरङ्गं गोरोचनापत्रविभक्तमस्याः ।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ।

विन्यस्तेति ॥ अस्या गौर्या अङ्गं गात्रं विन्यस्तं विरचितं शुक्लागुरु यत्[...] रोचनायाः पत्रैः । पत्ररचनाभिर्विभक्तं विशेषितं च चकुः । सा तथाभूत[...] चक्रवाकैरङ्कितं सैकतं यस्यास्तस्यास्त्रिस्रोतसो गङ्गायाः । कान्तिं शोभामत[...] क्रम्य तस्थौ । अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं, त्रिस्रोतसो [...] तु प्रसिद्धत्वान्न स्वपदेनोपात्तम् ॥

लग्नद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६

लग्नेति ॥ प्रसिद्धैर्भूषितैः । 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः । अलकै[...] क्षिता तस्या गौर्याः आननश्रीर्लग्नद्विरेफं पद्मं समेघलेखं मेघरेखायुक्तं [...] बिम्बं च परिभूय तिरस्कृत्य सादृश्यमुपमा तस्य कथोक्तिस्तस्याः प्रसङ्गं [...] सादृश्यं वाङ्मात्रप्रसक्तमपि चिच्छेदाभिनत् । प्रसक्तयोः पद्मचन्द्रयोः प[...] त्वादन्यत्र चाप्रसङ्गादित्यर्थः । अत्र पूर्वार्धवाक्यार्थस्य सादृश्यकथाच्छेद[...] हेतुत्वेनोपन्यासात्काव्यलिङ्गमलंकारः । लक्षणं तूक्तम् ॥

कर्णार्पितो लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७

कर्णेति ॥ तस्या गौर्याः कर्णेऽर्पितो निक्षिप्तो यवप्ररोहो यवाङ्कुरो लो[...] वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे । उद्वर्तिते इत्यर्थः । 'क[...] रसभेदे स्यादङ्गरागे विलेपने' इति विश्वः । गोरोचनायाः क्षेपेण विन्या[...] नितान्तगौरेऽत्यन्तारुणे । 'गौरः श्वेतेऽरुणे पीते' इति विश्वः । कपोले गण्ड[...] परभागलाभाद्वर्णोत्कर्षप्राप्तेश्चक्षूंषि । द्रष्टॄणामिति शेषः । बबन्ध जहार । [...] कर्षेत्यर्थः । गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसंनिधा[...] लब्धवर्णोत्कर्षः संश्चक्षुराकर्षकोऽभूदिति भावः ॥

१ धूपेन संमार्जितम्. २ आसक्त. ३ अस्याः. ४ विभङ्गमङ्गम्. ५ लीन. [...]

ाविभक्तः सुविभक्त[1]गात्र्याः किंचिन्मधूच्छिष्टविमृष्ट[2]रागः ।
म्प्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

रेखेति ॥ सुविभक्तगात्र्याः सुसंश्लिष्टावयवायाः पार्वत्या रेखया मध्यगतया क्तः सुश्लिष्टः किंचिदीषन्मधूच्छिष्टेन सिक्थकेन विमृष्टो विशेषेण निर्मली- तो रागो यस्य स तथोक्तः । 'मधूच्छिष्टं तु सिक्थकम्' इति, 'निर्णिक्तं शोधितं ष्टम्' इति चामरः । अन्यत्रोक्तम्—'अलौहित्यापगमायाधरेषु सिक्थकलेपः यते' । आसन्नं संनिहितं लावण्यफलं सौन्दर्यप्रयोजनं मुखचुम्बनादिरूपं यस्य तथोक्तोऽधरोष्ठः स्फुरितैर्भाविशुभशंसिभिः स्पन्दैः कामप्यनिर्वाच्यामभिख्यां भामपुष्यत्पुपोष । 'अभिख्या नामशोभयोः' इत्यमरः ॥

त्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
ा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥१९॥

पत्युरिति ॥ सख्या कन्या । चरणौ रञ्जयित्वा लाक्षारसाक्तौ कृत्वा । कृता- शीरिति करोतिना समानकर्तृकत्वम् । अनेन चरणेन रञ्जने द्वयोरपि नियमाच्च- णावित्युक्त्वाप्यौचित्यात्ताडनविधावेकतरपरामर्श इत्याहुः । पत्युरीश्वरस्य शिर- न्द्रकलाम् । सुरतविशेष इति शेषः । स्पृश ताडयेति परिहासपूर्वं कृताशीः युक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया । 'माल्यं मालास्रजौ' त्यमरः । निर्वचनं यथा तथा । तूष्णीमित्यर्थः । जघान ताडयामास । निर्वचन- त्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः । तदुक्तम्—'प्राप्तकालं तु यद्ब्रूयात्कु- ोद्वा विहृतं हि तत्' इति ॥

तस्याः सुजातोत्पलपत्रकान्ते प्रसाधिकाभिर्नयने निरीक्ष्य[3] ।
न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम् ॥२०॥

तस्या इति ॥ प्रसाधिकाभिरलंकर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्रे इव कान्ते रम्ये तस्या नयने निरीक्ष्य कालाञ्जनमञ्जनविशेषश्चक्षुषोः कान्तिविशेष- बुद्ध्या । शोभातिशयो भविष्यतीति बुद्ध्येत्यर्थः । नोपात्तं न गृहीतं किंतु मङ्गलं शुभमिति हेतोरुपात्तम् । निसर्गसुभगस्य किमाहार्यकाडम्बरेणेति भावः ॥

सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहंगैरिव लीयमानैरामुच्यमानाभरणा चकासे ॥ २१ ॥

सेति ॥ आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी संभवद्भिरुत्पद्य- मानैः कुसुमैर्लतेव । अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसु- मानां नानावर्णत्वात् । उद्यद्भिरुदयं गच्छद्भिर्ज्योतिर्भिरुडुभिस्त्रियामा रात्रिरिव । अनेन मौक्तिकानि कथितानि । लीयमानैराश्रयद्भिः । निषीदद्भिरित्यर्थः । विहंगै-

१ च विभक्त. २ विसृष्ट. ३ समीक्ष्य.

श्चक्रवाकैः सरिदिव । अनेन सुवर्णाभरणानि सूचितानि । विहंगाश्च त[...] चक्रवाका अभिमताः । चकासे रेजे । अत्र लताकुसुमादीनां सहजसंब[...] पमानत्वेनोपादानानाहार्यकमपि तस्याः सहजमिवाशोभतेति भावः ॥

**आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।**
**हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥**

आत्मानमिति ॥ किंचेति चार्थः । गौरी शोभमानमात्मानं निजा[...] दर्शबिम्बे दर्पणमण्डले । 'दर्पणे मुकुरादर्शौ' इत्यमरः । स्तिमितायता[...] न्निश्चलायतलोचना सत्यालोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा [...] स्त्रीणां वेषो नेपथ्यं प्रियस्य भर्तुरालोको दर्शनं फलं प्रयोजनं यस्य स[...] हि । अन्यथारण्यचन्द्रिका स्यादिति भावः । अनेन कालाक्षमत्वलक्षणमौ[...] त्सुक्यमित्यनुसंधेयम् ॥

**अथाङ्गुलिभ्यां[1] हरितालमार्द्रं माङ्गल्यमादाय[2] मनःशिलां च ।**
**कर्णावसक्तामलदन्तपत्रं माता तदीयं मुखमुन्नमय्य ॥ २३ ॥**

अथेति ॥ अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थमा[...] हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं चाङ्गुलिभ्यां तर्जनीम[...] भ्यामादाय कर्णयोरवसक्ते लग्ने अमले दन्तपत्रे यस्य तत्तथोक्तं तस्याः [...] इदं तदीयं मुखमुन्नमय्य । 'विवाहदीक्षातिलकं चकार' (७।२४) इ[...] श्लोकेनान्वयः ॥

**उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो यः प्रथमं बभूव ।**
**तमेव मेना दुहितुः कथंचिद्विवाहदीक्षातिलकं चकार ॥ २४ ॥**

उमेति ॥ उमायाः स्तनोद्भेदमनु । स्तनोदयमारभ्येत्यर्थः । प्रवृद्धो [...] गतः । प्रागेवोत्पन्न इति भावः । यो मनोरथो वाञ्छा । 'वाञ्छा लिप्सा[...] रथः' इत्यमरः । प्रथमं मनोरथान्तरात्प्राक् । अयमेव प्रथमो मनोरथ इ[...] बभूव । मेना दुहितुस्तमेव मनोरथभूतमेव । तद्विषये तत्तोपचारः । [...] दीक्षायां विवाहकृत्ये तिलकं कथंचित्कृच्छ्रेण चकार । आनन्दबाष्पान्ध[...] शेषः । विवाहानन्तरभावित्वादन्येषामयमेव प्रथमो मनोरथ इति भ[...] युग्मकम् ॥

**बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसंनिवेशम् ।**
**धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥ २५**

बबन्धेति ॥ अस्याः पार्वत्या अस्रैरानन्दबाष्पैराकुलदृष्टिरत एव स्थान[...] कल्पितः संनिवेशो निक्षेपो यस्य तत् । स्वस्थानादन्यत्र स्थापितमि[...]

१ अङ्गुलीभ्याम्. २ मङ्गल्यम्.

एव धात्र्या उपमातुरङ्गुलीभिः प्रतिसार्यमाणं स्वस्थानं प्राप्यमाणमूर्णामयं दिलोमनिर्मितम् । 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः । कौतुकहस्तसूत्रं लहस्तसूत्रम् । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । बबन्ध मेनेति शेषः । पूर्वोक्ततिलकक्रियासमुच्चयार्थश्चकारः ॥

**रोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।**
**नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ २६ ॥**

क्षीरोदेति ॥ नवं नूतनं क्षौमं दुकूलं निवस्त आच्छादयतीति नवक्षौम-वासिनी । वस्तेराच्छादनार्थाण्णिनिः । तथा नवं दर्पणमादधाना बिभ्रती सा री सफेनपुञ्जा सडिण्डीरपङ्क्तिः । क्षीरमुदकं यस्य स क्षीरोदः क्षीरसमुद्रः । दकस्योदः संज्ञायाम्' इत्युदादेशः । तस्य वेला तीरभूमिरिव । 'वेला काले च लधेस्तीरनीरविकारयोः' इति विश्वः । पर्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा रद्रात्रिरिव भूयो भूयिष्ठं बभौ चकासे ॥

**मर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।**
**कारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥**

तामिति ॥ कारयितव्येषु दक्षा कारयित्री । कर्मोपदेशकुशलेत्यर्थः । माता ना प्रतितिष्ठत्यस्यामिति प्रतिष्ठा । 'आतश्चोपसर्गे' इति कः । स्त्रियां टाप् । कुलस्य तिष्ठां कुलालम्बनभूताम् । स्थितिकारिणीमित्यर्थः । तां गौरीम् । अर्चिताभ्यः जिताभ्यः कुलदेवताभ्यो गृहदेवताभ्यः प्रणमय्य प्रणामं कारयित्वा । 'ल्यपि घुपूर्वात्' इति णेरयादेशः । सतीनां पतिव्रतानां पादग्रहणं पादाभिवन्दनं मेणाकारयत्कारयामास । 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मत्वम् । अन्यत्र 'गतिबुद्धि–' इत्यादिना नमेरकर्मकत्वात् ॥

**खण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा[1] स्म नम्रा ।**
**या तु तस्यार्धशरीरभाजा[2] पश्चात्कृताः स्निग्धजना[3]शिषोऽपि ॥२८॥**

अखण्डितमिति ॥ नम्रा प्रणतोमा ताभिः सतीभिः पत्युः शिवस्याखण्डि-तमक्षतं प्रेम लभस्व प्राप्नुहीत्युच्यते स्म अभिहिता । 'लट् स्मे' इति भूतार्थे लट् । तस्य हरस्य । अर्धं शरीरस्यार्धशरीरम् । 'अर्धं नपुंसकम्' इति समासः । भजतीत्यर्धशरीरभाजा तया गौर्या तु स्निग्धजनाशिषो बन्धुजनाशीर्वादा अपि पश्चात्कृता अधरीकृताः । ततोऽप्यधिकफलालाभादिति भावः ॥

**इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।**
**सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः[4] ॥२९॥**

इच्छेति ॥ कृती कुशलः । सभायां साधुः सभ्यः । 'सभाया यः' इति यप्र-

---

१ असौ. २ लाभात्. ३ बन्धुजन. ४ आगमनं प्रतीक्ष्य.

त्ययः । अद्रिर्हिमवानिच्छाविभूत्योरुत्साहैश्वर्ययोरनुरूपं सदृशं यथा तथा पार्वत्याः कृत्यं कर्तव्यमशेषयित्वाऽशेषं निःशेषं कृत्वा । समाप्येत्यर्थः । शब्दात् 'तत्करोति' इति ण्यन्तात्क्त्वाप्रत्ययः । सुहृदास्थितायां बन्धुजना सभायां संसदि वृषाङ्कस्य हरस्यागमनं प्रतीक्षत इति तथोक्तः सन् । ' इत्यण् । तस्थौ स्थितः ॥

**तावद्भ[1]वस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।**
**प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पु[2]रशासनस्य ॥ ३० ॥**

तावदिति ॥ तावत् । यावद्गौरीप्रसाधनं क्रियते तत्काल एवेत्यर्थः । कु कैलासे । तदेव पूर्वं तत्पूर्वं तच्च तत्पाणिग्रहणं तस्यानुरूपं प्रसाधनमल मयी आदृताभिः सादराभिः । कर्तरि क्तः । मातृभिर्ब्राह्मीप्रभृतिभिः काभिः । पुरं शास्तीति पुरशासनस्तस्य । कर्तरि ल्युट् । भवस्यापि पु न्यस्तं निक्षिप्तम् ॥

**तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।**
**स[3] एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥**

तदिति ॥ ईश्वरेण शिवेन सा मङ्गलमण्डनश्रीः शुभप्रसाधनसंपत्त तासु मातृष्वादरात्केवलं पस्पृशे स्पृष्टैव न तु दध्र इत्यवधारणार्थः केवल 'केवलं चावधारणे' इति शाश्वतः । किंतु तस्य विभोर्देवस्य स एव वेषः विको भस्मकपालादिवेष एव परिणेतुर्लोक उद्वोढुरिष्टमपेक्षितं भावान्तरं न्तरं प्रपेदे । अङ्गरागादिरूपतां प्रापेत्यर्थः ॥

भावान्तरापत्तिमेवाह—

**बभूव भस्मैव सि[4]ताङ्गरागः कपालमेवामलशेखरश्रीः ।**
**उपान्तभा[5]गेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥**

बभूवेति ॥ भस्मैव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव । कपालमेव शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव । गजाजिनस्यैवोपान्तभागेष्वञ्चल शेषु रोचनैवाङ्को हंसादिचिह्नं यस्य स तथोक्तो दुकूलभावः पट्टांशुकत्वं च व भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥

**[6]शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टाम[7]लपिङ्गतारम् ।**
**सांनिध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥ ३३ ॥**

शङ्खेति ॥ शङ्खान्तरे ललाटास्थिमध्ये द्योतत इति तथोक्तम् । 'शङ्खो ललाटास्थ्नि' इत्यमरः । अन्तर्निविष्टा मध्यगतामला पिङ्गा तारा कनीनिका तत्तथोक्तम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । यद्विलोचनं तद्विलोच

१ वरस्य. २ त्स्मर. ३ स एव. ४ कृताङ्गरागः. ५ भावेषु. ६ नेत्रान्तर. ७ अ

तालमय्या वर्णद्रव्यविशेषविकारस्य तिलकक्रियायास्तिलकरचनायाः संनि-
व सांनिध्यं तदेव पक्षः साध्यम् । 'पक्षः पार्श्वगरुत्साध्यसहायबल-
त्तिषु' इति यादवः । तस्मिन्सांनिध्यपक्षे जातम् । प्रविष्टमित्यर्थः । अनेन
टलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥

ाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
रीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥

यथेति ॥ यथाप्रदेशं प्रदेशान्कोष्ठादीननतिक्रम्याभरणान्तरत्वं कङ्कणाद्या-
णविशेषत्वं करिष्यतां संपादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव
कृतिं रूपान्तरं प्रपेदे । फणरत्नशोभास्तथैव तस्थुः । तासां तथैवोपादेयत्वा-
ते भावः ॥

वापि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।
न्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

दिवापीति ॥ दिवा दिनेऽपि निष्ठ्यूता उद्गीर्णा मरीचिभासः किरणकान्तयो
य तेन बाल्याद्यल्पतनुत्वादनाविष्कृतलाञ्छनेन । अदृश्यमानकलङ्केनेत्यर्थः ।
न्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः संगतमुकुटस्य हरस्य चूडामणेर्ग्रहणं
कारः किं किमर्थम् । चन्द्रचूडामणेर्देवस्य किमन्यैश्चूडामणिभिरिति भावः ॥

द्भुतैकप्रभवः प्रभावात्प्रसिद्धनेपथ्य[2]विधेर्विधाता ।
त्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥

इतीति ॥ इतीत्थं प्रभावात्सामर्थ्यात्प्रसिद्धस्य नेपथ्यविधेर्वेषसंविधानस्य
धाता निर्माता । अतएवाद्भुतानामाश्चर्याणामेकप्रभवो मुख्यनिधिः स देव
सन्नगणेन पार्श्वस्थवर्गेण । प्रमथगणेनेत्यर्थः । उपनीत आनीते खड्गे निषक्त-
तिमं संक्रान्तप्रतिबिम्बमात्मानं ददर्श । वीरपुरुषाणामेष आचारः ॥

गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
क्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

स इति ॥ स देवो नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् ।
र्दूलचर्मणा व्याघ्रचर्मणान्तरितमाच्छादितमुरु विशालं पृष्ठं यस्य तं तथोक्तम् ।
ार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । तस्मिन्देवे भक्त्या संक्षिप्तं संकोचितं बृहत्प्र-
णं यस्य तं गोपतिं वृषभं कैलासमिवारुह्य प्रतस्थे चचाल ॥

मातरो देवमनुव्रजन्त्यः स्ववाहन[3]क्षोभचलावतंसाः ।
खैः प्रभामण्डलरेणुगौरैः पद्माकरं[4] चक्रुरिवान्तरीक्षम्[5] ॥ ३८ ॥

---

१ अत्यद्भुत. २ नेपथ्यविधिः. ३ आक्षोभ. ४ पद्माकरीचक्रुः. ५ अन्तरिक्षम्.

तमिति ॥ तं देवमनुव्रजन्त्योऽनुगच्छन्त्यः स्ववाहनानां क्षोभेण चलावतंसाश्चलकुण्डला मातरः सप्तमातृकाः प्रभामण्डलान्येव रेणवः गौरैररुणैः । 'गौरोऽरुणे सिते पीते' इति यादवः । मुखैरन्तरीक्षमाड करमिव चक्रुः ॥

तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजी[1] दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥

तासामिति ॥ कनकप्रभाणां सुवर्णवर्णानां तासां मातॄणां पश्चात् रणा । सितकपालालंकारेत्यर्थः । काली महाकाली देवी च । कृष्णवर्णत्वा कालीसंज्ञयाभिधानम् । बलाकिनी बलाकावती । व्रीह्यादित्वादिनिः । तथा पुरोऽग्रे क्षिप्ताः प्रसारिताः शतह्रदा विद्युतो यस्याः सा तथोक्ता दराजी कालमेघपङ्क्तिरिव चकासे ॥

ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः ।
विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

तत इति ॥ ततोऽनन्तरं शूलभृतः शिवस्य पुरो गच्छन्तीति पुरोगैः 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति गमेर्डप्रत्ययः । गणैः प्रमथैः उत्पादितो मङ्गलतूर्यघोषो मङ्गलवाद्यध्वनिर्विमानशृङ्गाण्यवगाहमानः सुरेभ्यो विमानस्थेभ्यः सेवावसरं शशंस । सुराः प्रस्थानतूर्यध्वनिमाकर्ण्य नः सेवावसर इत्याजग्मुरित्यर्थः ॥

सुराणां सेवाप्रकारमेवाह—

उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग[2] इवोत्तमाङ्गे ॥ ४१ ॥

उपादद इति ॥ तस्य हरस्य सहस्ररश्मिः सूर्यस्त्वष्ट्रा विश्वकर्मणा नवमातपत्रमुपाददे । धृतवानित्यर्थः । उत्प्रेक्षते—तद्दुकूलात्तस्यातपत्रस्य लम्बिनो दुकूलादविदूरमौलिः । तद्दुकूलस्यासन्नमौलिरित्यर्थः । स हर उ शिरसि । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । पतन्ती गङ्गा यस्य स पतद्ग बभौ । तद्दुकूलादित्यत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति दूरार्थयोगे ल्पेन पञ्चमी । नाथेनोक्तम् 'अन्यारात्–' इत्यत्राराच्छब्दस्यार्थग्रहणार्थत्व मीति तदनाकरम् । किंचास्य शास्त्रोक्तविकल्पापवादत्वात् 'दूरं कामस्य' दिषष्ठीप्रयोगो दूरापास्तः स्यादित्युपेक्षणीयमेव ॥

मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते[3] इव लक्ष्यमाणे ॥ ४२ ॥

१ राजिः. २ वहन्गाङ्गमिव प्रवाहम्. ३ सहंसपाते.

मूर्ते इति ॥ गङ्गा च यमुना च गङ्गायमुने मूर्ते विग्रहधारिण्यौ सचामरे रसहिते सत्यौ । अतएव समुद्रगा नदी तस्या रूपं स्वरूपं तस्य विपर्यये-भावेऽपि सह हंसपातेन हंसचारेण वर्तेते इति सहंसपाते इव । 'तेन सहेति योगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । लक्ष्यमाणे दृश्यमाने तदानीं विवाहसमये देवमसेविषातामभजताम् । सेवतेर्लुङ् । गङ्गायमुने रग्राहिण्यौ देवमुपतस्थतुरित्यर्थः ॥

भ्यगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
ति वाचा महिमानमस्य संवर्धयन्तौ हविषेव[1] वह्निम् ॥ ४३ ॥

तमिति ॥ प्रथम आद्यो विधाता चतुर्मुखस्तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः षो विष्णुश्च साक्षात्तं देवमभ्यगच्छत्संमुखमाययौ । किं कुर्वन्तौ । जयेति वा जयशब्देनास्येश्वरस्य महिमानं महत्त्वं हविषा वह्निमिव संवर्धयन्तौ द्धं गमयन्तौ ॥

न चानुचितमेतदुक्तमित्याह—

कैव मूर्तिर्बिभिदे त्रिधा सा[2] सामान्यमेषां प्रथमावरत्वम् ।
ष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ[3] ॥ ४४ ॥

एकैवेति ॥ सैकैव मूर्तिस्त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन बिभिदे । औपाधि-ऽयं भेदो न वास्तविक इत्यर्थः । अतएवैषां त्रयाणां प्रथमावरयोर्भावः प्रथ-वरत्वं ज्येष्ठकनिष्ठभावः । सामान्यं साधारणम् । इच्छया सर्वे ज्येष्ठा भवन्ति निष्ठाश्चेत्यर्थः । एतदेव विवृणोति—कदाचिद्धरो विष्णोराद्यः । कदाचिद्धरिस्त-द्यः । कदाचिद्वेधास्तयोर्हरिहरयोराद्यः । कदाचित्तौ हरिहरावपि धातुः स्रष्टु-द्यौ । एवमेतेषां पौर्वापर्यमनियतमिति दर्शितम् ॥

लोकपालाः पुरुहूतमुख्याः श्रीलक्ष्मणोत्सर्गविनीतवेषाः ।
ष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥

तमिति ॥ पुरुहूतमुख्या इन्द्रादयो लोकपालाः श्रीलक्षणानामैश्वर्यचिह्नानां त्रचामरवाहनानामुत्सर्गेण त्यागेन विनीतवेषा अनुनीतवेषाः सन्तः । तथा ष्टिप्रदाने दर्शननिमित्ते । दर्शनप्रदानार्थमित्यर्थः । कृता नन्दिनः प्रतिहारस्य ज्ञा संकेतो यैस्तादृशाः । मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना त्यर्थः । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः । तद्दर्शितास्तेन न्दिना दर्शिता अयमिन्द्रः प्रणमत्ययं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः प्राञ्ज-लयः कृताञ्जलयः सन्तः तं भवं प्रणेमुः प्रणताः ॥

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्संभावयामास यथाप्रधानम् ॥ ४६ ॥

---

१ एव. २ असौ. ३ ईड्यौ.

कम्पेनेति ॥ स देवः शतपत्रयोनिं चतुर्मुखं मूर्ध्नः कम्पेन तथा संभाषणेन वृत्रं हतवन्तं वृत्रहणमिन्द्रम् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इ… स्मितेन मन्दहासेनाशेषान्सुरानालोकमात्रेण दृष्टिमात्रेणेत्थं यथाप्रधा… संभावयामास ॥

**तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।**
**विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥ ४७**

तस्मा इति ॥ तस्मै शिवाय सप्तर्षिभिः । 'दिक्संख्ये संज्ञा… समासः । पुरस्तादग्रे जयेत्याशीः ससृजे प्रयुक्ता । तान्सप्तर्षीन्स्मितपू… किमिति । वितते विस्तृतेऽत्र प्रवर्तिते विवाह एव यज्ञस्तस्मिन्यू… पूर्वमेव वृताः प्रार्थिता अध्वर्यवो ऋत्विज इति । विशेषवाचिना … मुक्तम् ॥

**विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः ।**
**अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराधिपखण्डधारी ॥**

विश्वावस्विति ॥ विश्वावसुर्नाम कश्चिद्गन्धर्वो देवगायकस्तत्प्राग्रहरैः प्रवीणैः प्रकृष्टवीणैर्निपुणैर्वा । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' … मरः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । 'तद्धितार्थोत्तरपद-' इ… समाहारसमासः । 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गता… त्रिपुरस्य संबन्ध्यवदानं पूर्ववृत्तं कर्म विजयरूपं त्रिपुरावदानं तत्संगीयमा… मानं यस्य स तथोक्तः । 'अवदानं कर्म वृत्तम्' इत्यमरः । ध्वान्तं तमः इति यावत् । तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीत्यध्व… कारलङ्घ्यः । विवाहादिकं तु तस्य लीलेत्यर्थः । ताराधिपखण्डधारी च… शंभुरध्वानं मार्गं ततारात्यग… … हरस्य स…

**खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिंकिणीकः ।**
**तटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥ ४**

ख इति ॥ ख आकाशे खेलं सुन्दरं गच्छतीति खेलगामी । … शब्दायमानाश्चामीकरकिंकिण्यः काञ्चनक्षुद्रघण्टिका यस्य स तथोक्तः । … क्षुद्रघण्टिका' इत्यमरः । 'नद्यृतश्च' इति कप् । वाह्यतेऽनेनेति वाहो … करणे घञ् । प्रोतघने स्यूतमेघे अतएव तटाभिघाताद्रोधोभेदाल्लग्नपङ्के इव स्थिते विषाणे शृङ्गे मुहुर्धुन्वंस्तं हरमुवाह वहति स्म ॥

**स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्तात् ।**
**पुरोविलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृ[1]ष्यमाणः ॥ ५० ॥**

१ कृष्यमाणम्.

स इति ॥ स वाहोऽप्राप्तः पराभियोगः शत्रुसमाक्रान्तिर्यस्य तत्तथोक्तं नगे-
हिमवता गुप्तं रक्षितं नगरमोषधिप्रस्थं पुरोऽग्रे विलग्नैः संक्रान्तैर्हरदृष्टि-
ः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्तात्प्रापत् । अन्यथा कथं दूरस्याशुप्राप्तिः
दिति भावः । पुरः प्रसृता हरदृष्टयः पिङ्गलवर्णत्वात्सौवर्णानि वृषाकर्षणदा-
ीवालक्ष्यन्तेत्यर्थः ॥

तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाण[1]चिह्नादवतीर्य मार्गा[2]दासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

तस्येति ॥ तस्य पुरस्योपकण्ठेऽन्तिके घनो मेघ इव नीलः कण्ठो यस्य स नीलकण्ठो देवः कुतूहलाद्दर्शनौत्सुक्यादुन्मुखैः पौरैर्दृष्टः सन् । स्वबाणचि-
त्रिपुरविजयसमये स्वबाणाङ्कान्मार्गात्कुतश्चिदाकाशदेशादवतीर्यावरुह्यासन्नभू-
निकटभूतलमियाय प्राप ॥

तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

तमिति ॥ आगमनेन शिवागमनेन प्रतीतो हृष्टो गिरिचक्रवर्ती पर्वताधि-
ो हिमवानृद्धिमता वस्त्रालंकारादिसमृद्धेन बन्धुजनेनाधिरूढैः । अनेन
धूनां समसाम्यं सूचितम् । गजानां वृन्दैः प्रफुल्ला विकसितकुसुमा वृक्षा
तैः स्वैः स्वकीयैः कटकैर्नितम्बैरिव तं हरं प्रत्युज्जगामाभिययौ । 'कटकोऽस्त्री
म्बोऽद्रेः' इत्यमरः ॥

वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

वर्गाविति ॥ दूरविसर्पि दूरगामी घोषो ययोस्तौ देवाश्च महीधराश्च तेषां
महीधराणामुभौ वर्गावुद्घटितापिधानेऽपनीत[illegible]वाटे पुरस्य द्वारे भिन्नो दीर्ण
सेतुः याभ्यां तौ भिन्नैकसेतू पयसामोघौ जल[illegible]विव समीयतुः संगतौ ॥

ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूर[3]मावर्जितं नात्मशिरो विवेद ॥५४॥

ह्रीमानिति ॥ भूमिधरो हिमवान् । त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादि-
त्वात्ष्यञ्प्रत्ययः । तस्य वन्द्येन नमस्कार्येण कृतप्रणामः सन् । 'ऋत्विक्पितृव्य-
श्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्यात्प्रत्युत्थायाभिवादनम् ॥' इति
रणात् । ह्रीमानभूत् । महादेवं प्रति स्वयमल्पत्वात्संकोचं प्रापेत्यर्थः । ननु
दितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामातुराचारमात्रस्वीकारे कः संकोच
ते शङ्कां निरस्यति—पूर्वमिति ॥ हि यस्मात्स हिमवान्पूर्वं प्रागेव तस्येश्वरस्य

---

१ स्ववाहवाहात्. २ वाहात्. ३ दूरात्.

महिम्ना सामर्थ्येन दूरमत्यन्तमावर्जितं नमितमात्मशिरो न विवेद। प्रणतत्वानुसंधानेन संकोचः। तदनुसंधानं त्वौत्सुक्यान्नास्तीति भावः॥

स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य।
प्रावेशयन्मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम्॥

स इति॥ प्रीतियोगात्संतोपसंबन्धाद्विकसन्मुखश्रीर्विकसन्ती मुख... स तथोक्तः स हिमवान्। जायां मिमीते जानातीति जामातुर्वरस्य। ...दित्वात्साधु। 'जामाता दुहितुः पतिः' इत्यमरः। अग्रेसरतां पुरोगामित्वं... देवमागुल्फं पादग्रन्थिपर्यन्तं कीर्णानि पर्यस्तान्यापणमार्गेषु पण्यवी... पुष्पाणि यस्मिंस्तदागुल्फकीर्णापणमार्गपुष्पम्। 'तद्ग्रन्थी घुटिके गुल्फौ' इ... ऋद्धं समृद्धं मन्दिरं नगरम्। 'मन्दिरं नगरेऽगारे मन्दिरो मकराल...' विश्वः। प्रावेशयत्॥

तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम्।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि॥

तस्मिन्निति॥ तस्मिन्मुहूर्ते हरपुरप्रवेशसमय ईशानस्य संदर्शने लाल... लोलुपानाम्। 'लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः' इति या... पुरसुन्दरीणां प्रासादमालास्वित्थं वक्ष्यमाणप्रकारेण त्यक्तान्यकार्याणि वि... र्यान्तराणि विचेष्टितानि व्यापाराः। 'नपुंसके भावे क्तः' इति क्तः। ...बुरासन्॥

तान्येवाह पञ्चभिः श्लोकैः—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः[1]।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि च[2] केशपाशः॥५...

आलोकमार्गमिति॥ आलोकमार्गं दर्शनपथम्। गवाक्षमित्यर्थः। ... व्रजन्त्या गच्छन्त्या कयाचिदुद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनोऽतएव ... माल्य उद्गीर्णमाल्यश्च यः स उद्वेष्टनवान्तमाल्यः करेण रुद्धो गृहीतः। च केशपाशः केशकलापः। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचा...' इत्यमरः। तावदालोकनमार्गप्राप्तिपर्यन्तं बद्धुम्। बन्धनायेत्यर्थः। न संभा... न स्मृत एव॥

प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां[3] पदवीं ततान॥ ५८

प्रसाधिकेति॥ काचित्स्त्री प्रसाधिकयालंकर्त्र्यालम्बितं रञ्जनार्थं धृतं द्र... गमेवार्द्रालक्तकमेव। अग्रश्चासौ पादश्चाग्रपदः। इति समानाधिकरणसमा...

१ माङ्गल्य. २ न केशहस्तः; हि केशपाशः. ३ उन्मृष्ट.

ग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः । तमाक्षिप्याक्रृष्टलीलागतिस्त्यक्तमन्दगमना सत्या गवाक्षाद्गवाक्षपर्यन्तम् । पदद्वयमेतत् । मलक्तकाङ्क्षां लाक्षारसचिह्नां चकार ॥

विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

विलोचनमिति ॥ अपरा स्त्री दक्षिणं विलोचनमञ्जनेन संभाव्यालङ्कृत्य ञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती । तथैव तेनैव रूपेण शलाकामञ्जनकूर्चिकां वहन्ती बिभ्रती वातायनसंनिकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं संभ्रमाद्व्युत्क्रमद्योतनार्थम् । 'सव्यं हि पूर्वं मनुष्या अञ्जत' इति श्रुतेः ॥

जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

जालान्तरेति ॥ अन्या स्त्री जालान्तरप्रेषितदृष्टिर्गवाक्षमध्यप्रसारितदृष्टिः प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम् । 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । न बबन्ध नाबध्नात्, किंतु नाभिं प्रविष्टानां कङ्कणानां प्रभा यस्य तेन । प्रभैव नाभेरावरणमभूदिति भावः । हस्तेन वासोऽवलम्ब्य धृत्वा तस्थौ ॥

अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

अर्धाचितेति ॥ सत्वरं सवेगमुत्थितायाः कस्याश्चिदर्धमाचिता मणिभिर्गुम्फिताचिता दुर्निमिते संभ्रमाद्दुःखेन निक्षिप्ते । 'डुमिञ् प्रक्षेपणे' इति धातोः कर्मणि । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रशना ला तदानीं तस्मिन्नवसरेऽङ्गुष्ठमूलेऽर्पितं लगितं सूत्रमेव शेषो यस्याः सासीत् ॥

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

तासामिति ॥ तदानीं सान्द्रकुतूहलानां तासां स्त्रीणामासवगन्धो गर्भे तैः । विलोलानि नेत्राण्येव भ्रमरा येषु तैर्मुखैर्व्याप्तान्तराश्छन्नावकाशा गवाक्षाः सहस्रपत्राभरणा इवासन् । कमलालंकृता इव स्थिता इत्यर्थः ॥

तावत्पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वञ्ज्योत्स्नाभिषेकद्विगुणद्युतीनि ६३

---

१ अर्धाञ्चिता. २ छवीनि. ६१–६२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—
स्तनंधयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥

तावदिति ॥ तावत्तस्मिन्नवसर इन्दुमौलिरीश्वरो दिवापि प्रासाद... ज्योत्स्नाया अभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । 'गुणस्... शब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । कुर्वन्पताकाभिराकुलं ... मुक्तोरणमुच्छ्रिततोरणं राजपथं प्रपेदे ॥

**तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथाहि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥**

तमिति ॥ एक एव दृश्यो दर्शनीयस्तमेकदृश्यं तमीश्वरं नयनैः पि... अतितृष्णया पश्यन्त्य इत्यर्थः । 'ताः शंकरं दृष्टिभिरापिबन्त्यः' इति वा... नार्यो विषयान्तराणि ततोऽन्यान्विषयान् । शब्दादीनित्यर्थः । न जग्मु... विदुरित्यर्थः । तथाहि । आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः ... त्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ... शक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स... याधिगमः किं न स्यादिति भावः ॥

अथ पौराङ्गनावचनान्याह—

**स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवया[1]पि तप्तम् ।**
**या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय...**

स्थान इति ॥ पेलवया कोमलयाप्यपर्णया पार्वत्यैतस्मै शिवायैतद... 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च' इति विशेष्यनिघ्नत्वम् । दुश्चरं त... स्थाने युक्तम् । कुतः । या नार्यस्येश्वरस्य दास्यं दासीत्वमपि लभेत सा ... स्यात् । या अङ्क एव शय्या तामङ्कशय्यां लभेत सा किमुत । कृतार्थेति ... वक्तव्यमित्यर्थः ॥

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलो[2]ऽभविष्यत् ॥**

परस्परेणेति ॥ स्पृहणीयशोभं सर्वैराशास्यमानसौन्दर्यमिदं द्वन्द्वं मि... 'द्वन्द्वं रहस्य-' इति निपातः । परस्परेण नायोजयिष्यच्चेन्न योजयेद्यदि ... पत्युर्विधातुरस्मिन्द्वये द्वन्द्वे रूपविधाने सौन्दर्यनिर्माणे यत्नः प्रयासो वि... ऽभविष्यद्भवेत् । एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः । 'लिङ्निमित्ते क्रियातिपत्तौ' इति लृङ् ॥

**न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।**
**व्रीडादमुं देवमुदीक्ष्य[3] मन्ये संन्यस्तदेहः स्वयमेव कामः ॥**

नेति ॥ आरूढरुषा प्ररूढकोपेनानेन हरेण कुसुमायुधस्य कामस्य शरी...

---

१ कोमलया. २ वितथः. ३ अवेक्ष्य.

धं नूनं किंतु कामोऽमुं देवमुदीक्ष्य दृष्ट्वा व्रीडात्सौन्दर्येण जितोऽसीति लज्जया स्वयमेव संन्यस्तदेहस्त्यक्तदेह इति मन्य इत्युत्प्रेक्षा । न स्वयं न्यस्ताकृतेः कोपः भवतीति भावः ॥

काचित्कांचिदाह—

अनेन संबन्धमुपेत्य[1] दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं[2][3] वक्ष्यति शैलराजः ॥६८॥

अनेनेति ॥ हे आलि सखि । 'आलिः सखी वयस्या च' इत्यमरः । शैलराजो हिमवान् । दिष्ट्येत्यानन्देऽव्ययम् । मनोरथैः प्रार्थितमवरुद्धम् । अभिलाषविषयीकृतमित्यर्थः । 'प्रार्थना याञ्चावरोधयोः' इत्यभिधानात् । अनेनेश्वरेण संबन्धमुपेत्यावाप्य क्षितिधारणेनोच्चमुन्नतं मूर्धानमुच्चैस्तरमुन्नततरम् । उच्चैरित्यव्ययात्तरप्प्रत्ययः । 'मूर्ध्नो द्रव्यत्वान्नामुप्रत्ययान्तो निपातः । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यादिनाऽद्रव्यप्रकर्षे तस्य विधानादिति । वक्ष्यति धारयिष्यति । वहतेर्लृट् ॥

इत्योषधिप्रस्थविलासिनीनां शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं[4] हिमालयस्यालयमाससाद ॥ ६९ ॥

इतीति ॥ त्रिनेत्रस्त्र्यम्बकः । त्रिनेत्रत्रिनयनशब्दयोः 'क्षुभ्नादिषु च' इति णत्वाभावः । इतीत्थमोषधिप्रस्थविलासिनीनां संबन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथा आलापाञ्शृण्वन्केयूरैरङ्गदैश्चूर्णीकृता लाजानां मुष्टयो यस्मिंस्तं तथोक्तम् । तत्रावकीर्णा आचारलाजा अन्तराल एवाङ्गदैश्चूर्णपेषं पिष्यन्त इति पुरंध्रिजनसंबन्धातिशयोक्तिः । हिमालयस्य हिमवत आलयं भवनमाससाद ॥

तत्रावतीर्याच्युतदत्तहस्तः[5] शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश[6] ॥७०॥

तत्रेति ॥ तत्र हिमवदालयेऽच्युतेन विष्णुना दत्तहस्तो वितीर्णहस्तावलम्बः सन् । शरद्घनाच्छरन्मेघात् । शरद्विशेषणान्मेघस्य शुभ्रत्वं गम्यते । दीधितिमान्सूर्य इवोक्ष्णो वृषादवतीर्य कमलासनेन पूर्वमग्रे क्रान्तानि प्रविष्टान्यद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश । 'कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहे प्रकोष्ठके' इति यादवः ॥

तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयमभ्यगच्छन्[7] प्रशस्तमारम्भमिवोत्तमार्थाः ॥७१॥

---

१ अवाप्य. २ क्षितिपालनोच्चम्. ३ उच्चैस्तराम्. ४ वृष्टिः; मुष्टिः. ५ ततः. ६ कक्षान्तराणि. ७ अन्वगच्छन्.

तमिति ॥ तमीश्वरमन्वगनुपदम् । अव्ययमेतत् । 'अन्वगन्वक्षमनुगे... क्लीबमव्ययम्' इत्यमरः । इन्द्रप्रमुखा देवाश्च सप्तर्षयः पूर्वे येषां ते सप्तर्षिपू... 'न बहुव्रीहौ' इति सर्वनामसंज्ञाप्रतिषेधः । परमर्षयः सनकादिमहर्षि... 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः । गणाः प्रमथाश्चोत्त... महाप्रयोजनाः प्रशस्तं प्रकृष्टम् । अमोघमित्यर्थः । आरभ्यत इत्यारम्भ उपा... मिव गिर्यालयं हिमवन्मन्दिरमभ्यगच्छन् । प्राविशन्नित्यर्थः ॥

तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं[1] प्रत्यग्रहीत्सर्वममन्त्रवर्जम्[2] ॥ ७२

तत्रेति ॥ तत्र हिमवदालय ईश्वरो विष्टरभागासनगतः । उपविष्ट इत्य... यथावद्यथार्हम् । विधिवदित्यर्थः । सरत्नं रत्नसहितमर्घ्यमर्घार्थं जलम् । ... क्षौद्रमस्मिन्नस्तीति मधुमत् । गवि भवं गव्यं दधि च । मधुपर्कमित्यर्थः । ... मधुनी सर्पिर्वा मध्वलाभे' इत्याश्वलायनगृह्यसूत्रात् । नवे दुकूले चेति सर्वं ... पनीतं हिमवदानीतमर्घ्यादिकं मन्त्रान्वर्जयित्वा मन्त्रवर्जम् । ततो नञ्समा... अमन्त्रवर्ज्यम् । मन्त्रान्न वर्जयित्वेत्यर्थः । 'द्वितीयायां च' इति णमुल्प्रत्यय इ... न्यासकारः 'अनुदात्तं पदमेकवर्जम्' इत्यत्र । प्रत्यग्रहीत्स्वीकृतवान् ॥

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः[3] ।
वेलासमीपं[4] स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३

दुकूलेति ॥ अथ दुकूलवासाः । दुकूलं वसान इत्यर्थः । स हरो विनी... नुद्धतैरवरोधेषु ये दक्षास्तैरवरोधदक्षैर्वधूसमीपं निन्ये नीतः । कथमिव । स्... फेनानां राजिर्यस्य स उदकमस्यास्तीत्युदन्वान्समुद्रः । 'उदन्वानुदधौ च'... निपातनात्साधुः । नवैरचिरोदितैश्चन्द्रपादैश्चन्द्रकिरणैर्वेलासमीपमिव ॥

तया प्रवृद्धाननचन्द्रकान्त्या[5] प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ७४

तयेति ॥ आननं चन्द्र इवेत्युपमितसमासः । प्रवृद्धाननचन्द्रस्य कान्ति... र्यस्यास्तया तथोक्तया तया कुमार्या, शरदा लोक इव संसृज्यमानः संगच्छमा... शिवश्चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य स तथोक्तः । चेतः सलिल... तत्प्रसन्नं यस्य स तथोक्तः प्रसन्नचेतःसलिलोऽभूत् । शरल्लोकयोरपि यथोचि... विशेषणानि योज्यानि ॥

तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां तत्क्षणम्[6]अन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥ ७५

---

१ नगोपनीते. २ वन्ध्यम्. ३ पक्षैः. ४ सकाशम्. ५ विवृद्ध. ६ आन... मुहूर्तम्, आनशिरे मनोज्ञाम्.

तयोरिति ॥ तयोर्वधूवरयोः समापत्तिषु यदृच्छया संगतिषु कातराणि चकितानि । 'अधीरे कातरः' इत्यमरः । द्रष्टुमसमर्थानीति भावः । किंचिदीषव्यवस्थापितानि स्थिरीकृतानि पश्चात्संहृतानि निवर्तितानि चेति व्यवस्थापितसंहृतानि । 'पूर्वकाल-' इत्यादिना तत्पुरुषः । अन्योन्यस्मिँल्लोलानि सतृष्णानि । 'लोलश्चलसतृष्णयोः' इत्यमरः । विलोचनानि दृष्टयस्तत्क्षणं तस्मिन्क्षणे ह्रीयन्त्रणां ह्रिया निमित्तेन संकोचमन्वभूवन् ॥

तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमातनौ[1] गूढतनोः स्मरस्य तच्छङ्किनः[2] पूर्वमिव प्ररोहम् ॥७६॥

तस्या इति ॥ अष्टमूर्तिः शिवः । तस्मादीश्वराच्छङ्कत इति तच्छङ्किनः । तद्भीतस्येत्यर्थः । अतएवोमातनावुमाशरीरे गूढतनोर्गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवतोपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसोपनीतं ताम्राङ्गुलिं रक्ताङ्गुलिं तस्याः पार्वत्याः करं जग्राह ॥

रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः[3] पुंगवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ ७७ ॥

रोमोद्गम इति ॥ उमाया रोमोद्गमो रोमाञ्चः प्रादुरभूत् । पुमान्गौः पुंगवो वृषभः । 'गोरतद्धितलुकि' इति टच् । स केतुश्चिह्नं यस्य स पुंगवकेतुः शिवः स्विन्नाङ्गुलिरासीत् । अत्रोत्प्रेक्षते—पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा । तयोर्वधूवरयोर्मनोभवस्य वृत्तिरवस्थितिः समं विभक्तेव । समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिसंस्पर्शकृतत्वमुत्प्रेक्षते । ननु 'कन्या प्रथमसंगमे स्विन्नकरणा भवति पुमांस्तु रोमाञ्चितो भवती'ति वात्स्यायनेन विपरीतमुक्तमिति चेन्नैष दोषः । एभिरनयोर्भावं परीक्षेतेति वाक्यशेष एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेनानियमावधारणात् । अतएव रघुवंशेऽन्यथाभिधानात्स्वोक्तिविरोध इत्यपास्तम् । तदेतद्रघुवंशसंजीविन्यां ( ७ । २२ ) सुव्यक्तमवोचम् । सात्त्विकास्तु 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' इति ॥

प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥७८॥

प्रयुक्तेति ॥ यद्यस्मात्कारणात्प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तमन्यल्लौकिकम् वधूश्च वरश्च वधूवरम् । समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकालेऽनयोरुमाशिवयोः सांनिध्ययोगात्संनिधिभावादग्र्यामुत्तमां कान्तिं शोभां पुष्यति

---

[1] उमात्मना. [2] तच्छङ्कितः. [3] चित्राङ्गुलिः.

पुष्णाति तस्योभयस्योमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते । यत्प्र
न्यस्य शोभालाभस्तस्य शोभा किमु वक्तव्येत्यर्थः । 'विवाहसमये गौ
वधूवरावनुप्रविशेताम्' इत्यागमः ॥

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९

प्रदक्षिणेति ॥ तन्मिथुनमुदर्चिष उन्नतज्वालस्य कृशानोः कर्मणः
क्षिणप्रक्रमणात्प्रदक्षिणीकरणाच्चकासे । किमिव । मेरोरुपान्तेषु परिसरेषु
मानमावर्तमानम् । मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योन्येन संसक्तं संग
मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा चाहस्त्रियामं रात्रिंदिवमिव । सम
द्वन्द्वैकवद्भावः ॥

तौ दंपती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥

तावििति ॥ स पुरस्तादेव हितं विधत्त इति पुरोधाः पुरोहितोऽन्योन्
संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दंपती कर्मभू
जायाशब्दस्य दंभावो निपातितः । वह्निं त्रिस्त्रिवारम् । 'द्वित्रिचतुर्भ्यः
इति सुच् । परिणीय परितो नीत्वा । प्रदक्षिणीकार्येत्यर्थः । नयतेर्द्विकर्मकात्
समिद्धार्चिषि दीप्तज्वाले तस्मिन्वह्नौ वधूं लाजमोक्षं लाजविसर्गं कारयामा
'हृक्रोरन्यतरस्याम्' इति विकल्पादणिकर्तुः कर्मत्वम् ॥

सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८१

सेति ॥ सा वधूर्गुरोः पुरोधस उपदेशादिष्टः । घ्राणतर्पण इत्यर्थः । गन्
यस्य तं लाजधूमाञ्जलिं वदनं निनाय । कपोलसंसर्पिणी शिखा यस्
तथोक्तः स धूमस्तस्या गौर्या मुहूर्तकर्णोत्पलतां प्रपेदे । धूमस्य विसृमरत्वा
हूर्तग्रहणम् ॥

तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद्बभूव ॥ ८२ ॥

तदिति ॥ तद्वधूमुखमाचारधूमग्रहणादाचारप्राप्तधूमत्वादीषदार्द्रे स्नि
अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम् । अक्ष्णोरुच्छ्वास्युद्गच्छन्काल
ञ्जनस्य रागोऽञ्जनं यस्य तत्तथोक्तम् । क्लान्तो यवावतंसो यवाङ्कुरकर्ण
यस्य तत्तथाभूतं बभूव । 'लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्' इति प्रयो
वृत्तिकारः ॥

वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति कर्मसाक्षी[1] ।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ८३ ॥

वधूमिति ॥ अथ वधूं द्विजः पुरोधाः प्राह । किमिति । हे वत्से, एष वह्निस्तव विवाहं प्रति । विवाहकर्मणीत्यर्थः । कर्मसाक्षी कर्मद्रष्टा । भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्या धर्माचरणं कार्या कर्तव्येति । यं च प्राजापत्यविवाहो द्रष्टव्यः । यथाहाश्वलायनः—'सह धर्मं चरेदिति जापत्यः' इति ॥

आलोचनान्तं श्रवणे[2] वितत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव[3] माहेन्द्रमम्भः प्रथमं पृथिव्या ॥८४॥

आलोचनान्तमिति ॥ भवस्य पत्न्या भवान्या । 'इन्द्रवरुणभवशर्वरुद्र—' त्यादिना ङीप् आनुगागमश्च । आलोचनान्तं नेत्रान्तपर्यन्तम् । 'आङ् मर्याभिविध्योः' इत्यव्ययीभावः । श्रवणे श्रोत्रे वितत्य विस्तार्य यत्पूर्वोक्तं गुरोर्याकस्य वचनं 'सह धर्मं चर' इति वाक्यं निदाघकाले ग्रीष्मकाल उल्बणतापत्कटसंतापया पृथिव्या प्रथममाद्यं माहेन्द्रं पार्जन्यमम्भ इव पीतम् । अत्यारेण शुश्रावेत्यर्थः ॥

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य[5] ह्रीसन्नकण्ठी[4] कथमप्युवाच ॥ ८५ ॥

ध्रुवेणेति ॥ प्रियं दर्शनं यस्य कर्मभूतस्य तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन र्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय । 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु' इत्यमरः । प्रयुज्यमाना दृश्यतामिति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रिया नस्वरा सा वधूः कथमप्याननमुन्नमय्य दृष्ट इत्युवाच ॥

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ ८६ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । विधिज्ञेन विवाहप्रयोगज्ञेन । शास्त्रज्ञेनेत्यर्थः । पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाहकर्माणौ प्रजानां पितरौ तावुमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितॄणां पित्रे पितामहाय ब्रह्मणे । 'पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च' इति विश्वः । 'पितृव्यमातुलमातामहपितामहाः' इति निपातनात्साधुः । प्रणेमतुर्नमश्चक्रतुः । पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ॥

वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्तौ[6] त्वाशास्यचिन्तास्तिमितो बभूव ॥८७॥

१ पूर्वसाक्षी. २ श्रवणौ. ३ तप्तयेव. ४ कण्ठम्. ५ उन्नत. ६ मूर्तावाशास्य.

वधूरिति ॥ वधूः कन्या विधात्रा ब्रह्मणा । हे कल्याणि शोभने, वी
वोऽपत्यं यस्याः सा वीरप्रसवा वीरसूर्भवेति प्रतिनन्द्यते स्म । आशिषमुक्त्
स विधाता वाचस्पतिर्वागीश्वरोऽपि सन् । कस्कादिषु पाठात्साधुः ।
शिवे त्वाशास्यमाकाङ्क्ष्यं तत्र चिन्ता विचारस्तस्यां स्तिमितो मन्दो बभूव
निरीहस्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥

**क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकासनस्थौ ।**
**जायापती लौकिकमेषणीय[1]मार्द्राक्षतारोपणमन्वभूताम् ॥**

क्लृप्तेति ॥ तौ जायापती वधूवरौ पश्चान्नमस्कारानन्तरं क्लृप्ता रचिता उ
पुष्परचनादयो यस्यां तां चतुरस्रवेदीमेत्य प्राप्य कनकासनस्थौ सन्तौ
लोके विदितम् । आचारप्राप्तमित्यर्थः । अतएवैषणीयमाशास्यम् ।
लौकिकाचारं मनसापि न लङ्घयेत्' इति शास्त्रादवश्यकर्तव्यमित्यर्थः ।
च्छार्थादनीयर्प्रत्ययः । आर्द्राक्षतारोपणमन्वभूताम् ॥

**पत्रान्तलग्नैर्जलबिन्दुजालै[2]राकृष्टमुक्ताफलजालशोभम्[3] ।**
**तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥ ८**

पत्रान्तेति ॥ लक्ष्मीः श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैर्जलबिन्दुजालै
हृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन त
त्तमायतं दीर्घं नालमेव दण्डो यस्य तत्कमलमेवातपत्रं तत्तयोरुपर्याधत्त

**द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥**

द्विधेति ॥ अथ सरस्वती वाग्देवी द्विधा संस्कृतप्राकृतरूपेण द्वैवि
प्रयुक्तेनोच्चारितेन वाङ्मयेन शब्दजालेन तन्मिथुनं नुनाव तुष्टाव । 'णु
इति धातोर्लिट् । केन कमिवेत्याह—संस्कारेति ॥ संस्कारेण शास्त्रव्यु
पूतेन प्रकृतिप्रत्ययविभागशुद्धेन । संस्कृतेनेत्यर्थः । वरेण्यं वरणीयम् । श्ला
त्यर्थः । वृणोतेरौणादिक एण्यप्रत्ययः । वरं वोढारं शिवम् । सुखेन ग्राह्यं
निबन्धनं रचना यस्य तेन वाङ्मयेन । प्राकृतभाषयेत्यर्थः । वधूम् नुनावे
संबन्धः ॥

**तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।**
**अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९**

ताविति ॥ तौ दंपती संधिषु मुखादिनिर्वहणान्तेषु पञ्चसंधिषु ।
दशरूपके—'मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः' इति । व्यञ्जितवृ
स्फुटीकृतकौशिक्यादिवृत्तिविशेषम् । रसानुगुण्येनेति शेषः । तदुक्तं भूपाले

१ एषितव्यम्. २ वृन्दै. ३ भक्तिशोभम्.

कैशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती । रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः ॥ शृङ्गारादिषु भावज्ञै रसेष्विष्टा तु भारती ॥' तथा । 'कैशिक्यारभटी च सात्वती भारती तथा । चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम् ॥' इति । रसान्तरेषु शृङ्गारादिरसभेदेषु । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः' इति । प्रतिबद्धरागं प्रतिनियमेन प्रवर्तितो वसन्तललितादिरागो यस्मिंस्तम् । यस्मिन्रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाह कोहलः—'रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण कीर्तिताः ॥ भयानके च बीभत्से शान्ते गेयो नपुंसके ॥' इति । ललिताङ्गहारं सुन्दराङ्गविक्षेपम् । 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । आदौ भवमाद्यम् । रूपकान्तरप्रकृतिभूतमित्यर्थः । तदुक्तम्—'आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः' इति । अप्सरसामुर्वश्यादीनाम् । प्रयुज्यत इति प्रयोगो रूपकम् । नाटकमित्यर्थः । आद्यमिति विशेषणात् । तं मुहूर्तमपश्यतां दृष्टवन्तौ । 'पाघ्राध्मास्था–' इत्यादिना दृशेः पश्यादेशः ॥

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने प्रतिपन्न[1]मूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥

देवा इति ॥ देवा इन्द्रादयस्तदन्ते तस्य प्रयोगदर्शनस्यान्तेऽवसान ऊढभार्यं परिणीतदारं हरं किरीटेषु बद्धा अञ्जलयो येषां ते तथोक्ताः सन्तः । निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्तेर्लब्धशरीरस्य । 'परिणेष्यति पार्वतीं यदा' ( ४।४२ ) इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः । पञ्चशरस्य कामस्य कर्तुः । सेवां ययाचिरे । पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः । 'दुह्याच्पच्–' इत्यादिना द्विकर्मकत्वम् ॥

तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
[2]कालप्रयुक्ता खलु [3]कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥९३॥

तस्येति ॥ विमन्युर्विगतक्रोधो भगवानीश्वर आत्मन्यपि तस्य कामस्य सायकानां व्यापारमनुमेने । तथाहि । कार्यविद्भिः कार्यज्ञैः । अथवा कालविद्भिः अवसरज्ञैः । काले योग्यावसरे प्रयुक्तानुष्ठिता भर्तृषु स्वामिषु विषये विज्ञापना सिद्धिमेति खलु । सफला भवतीत्यर्थः । अयमेवास्य स्मरसेवास्वीकारो यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति ॥

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामा[4]ददानः करेण ।
कनककलश[5]युक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४ ॥

१ प्रतिलब्ध. २ काले प्रयुक्ता. ३ कालविद्भिः. ४ आदधानः. ५ रक्षा.

अथेति ॥ अथेन्दुमौलिरीश्वरस्तान्विबुधगणान्विसृज्य क्षितिधरप[illegible] पार्वतीं करेणाददानः कनककलशयुक्तं मङ्गलार्थमन्तर्निहितहेममयपू[illegible] भक्तयः पुष्पादिरचनास्तासां शोभया सनाथम् । सहितमित्यर्थः । क्षि[illegible] चितशय्यं क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिंस्त[illegible] कौतुकागारमागाच्छय्यागृहं जगाम । अत्राश्वलायनः—'अत ऊर्ध्वमक्षा[illegible] णाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्' इति । अत ऊर्ध्वं विवाहादू[illegible] आ त्रिरात्रादिति शेषः । 'त्रिरात्रं द्वादशरात्रं वा' इति वचनात् । तथा[illegible] शास्त्रेऽपि 'अथ परिणयरात्रौ प्रक्रमेणैव किंचित्तिसृषु च रजनीषु स्व[illegible] दुनोति । त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न चास्या हृदयमननुरुध्य स्वेच्छ[illegible] कुर्यात् ॥' इति ॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।
अपि शयनसखीभ्यो दत्तवाचं कथंचि-
त्प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

नवेति ॥ तत्र कौतुकागार ईश ईश्वरो नवपरिणयेन नवोद्वाहेन या[illegible] सा भूषणं यस्यास्तामत एव तेनेश्वरेण कृताक्षेपं कृताकर्षणम् । उन्नमित[illegible] यावत् । वदनमपहरन्तीं साचीकुर्वन्तीम् । अयं लज्जानुभावः । अनुभाव[illegible] माह—शयनसखीभ्योऽपि शयने सहशायिनीभ्योऽपि नर्मसहचरीभ्योऽपीत्य[illegible] कथंचित्कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथा भृङ्गिरिटिप्रभृतयो हास्यर[illegible] देवताः पशुपतेः पारिषदाः । यथाह भरतः—'शृङ्गारो विष्णुदैवत्यो हा[illegible] प्रमथदैवतः' इति । 'प्रमथाः स्युः पारिषदाः' इत्यमरः । तेषां मुखविका[illegible] विकृतचेष्टितैर्गूढमप्रकाशं हासयामास । हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्य[illegible] यथाह गोनर्दः—'हासेन मधुना नम्रवचसा लज्जितां प्रियाम् । विलुप्त[illegible] कुर्वीत निपुणैश्च सखीजनैः ॥' इति ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमा[illegible]
ख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे
महाकाव्ये उमापरिणयो नाम सप्तमः सर्गः ।

---

१ प्रथम.

श्रीः ।

# कुमारसंभवम् ।

## संजीविन्या समेतम् ।

## अष्टमः सर्गः ।

शिरसा शकलं शशाङ्कमूर्तेर्भसितं बिभ्रतमङ्गकेन भूरि ।
गरलं च गलेन चिन्तयामो हरमर्धाङ्गहराद्रिराजकन्यम् ॥

टीका सप्तसु मल्लिनाथकृतिना संजीविनीसंज्ञिका
या सर्गेषु कुमारसंभवमहाकाव्यस्य चक्रे पुरा ।
सैवैतद्व्यवशिष्टदिक्प्रमिततत्सर्गेषु विद्वन्मुदे
सीतारामकवीश्वरेण हि यथाप्रज्ञं समापूर्यते ॥

नवपरिणीतगिरिजारहःकेलिमपि विवर्णयिषुस्तत्रभवान्कालिदासोऽष्टमं सर्ग-रभते—

**पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।**
**भावसाध्वसपरिग्रहादभूत्कामदोहद[1]मनोहरं वपुः ॥ १ ॥**

पाणिपीडनविधेरिति ॥ पाणिपीडनं नाम षोडशविधेषु संस्कारेषु कश्चि-स्कारविशेषः । पीडयति यस्मिन्निति पीडनम् । 'करणाधिकरणयोश्च' इति युट् । पाणेः करतलस्य पीडनं ग्रहणम् । विवाह इत्यर्थः । पाणेरिति कृद्यो-लक्षणा कर्मणि षष्ठी । तस्य विधेर्विधानात् । 'विधिर्विधाने दैवे च' इत्य-रः । अनन्तरं पश्चात् । भावसाध्वसयोः कामेच्छातिभययोः परिग्रहात् । रिग्रहं ग्रहणं कृत्वेत्यर्थः । ल्यब्लोपे पञ्चमी । मुग्धात्वादुभे अप्यवलम्ब्येति ावः । 'भावः स्वभावेऽभिप्राये चेच्छासत्तात्मजन्मसु' इति विश्वः । स्थिताया ति शेषः । इयं च मुग्धाभेदो नवोढा । तदुक्तं भानुमिश्रैः—'लज्जाभय-राधीनरतिर्नवोढा' इति । शैलराजस्य हिमालयस्य दुहितुः कन्यायाः पार्वत्याः पुरङ्गम् । हरं शिवं प्रति । लक्षयित्वेत्यर्थः । 'लक्षणेत्थं–' इति प्रतेः कर्मप्रवच-ीयसंज्ञा । तद्योगे 'कर्मप्रवचनीययुक्ते' इति द्वितीया । कामे यद्दोहदमभिलाषः । च्छेति यावत् । 'अथ दोहदम् । इच्छा काङ्क्षा' इत्यमरः । कामविषयकोऽभि-ाष इत्यर्थः । तेन निमित्तेन मनोहरं रुचिकरमभूत् । अतिमनोहराण्यपि कामिनी-वपूंषि स्वकामेच्छयैव रोचकानि भवन्तीति भावः । सर्गेऽस्मिन्नथोद्धतावृत्तम् ।

---

१ सुखं मनोहरम्.

'रान्नराविह रथोद्धता लगौ' इति लक्षणात्। रसश्च प्रायः संभोगशृङ्गा
इदानीं लक्षणरीत्या नवोढात्वमेव दशभिः प्रपञ्चयति—

व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका।
सेवते स शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः

व्याहृतेत्यादि ॥ सा पार्वती व्याहृता प्रियेण पृष्टा सती प्रतिवचः
न संदधे। न दत्तवतीत्यर्थः। तथावलम्बितं करेण धृतमंशुकं वस्त्रं यस्या
सती गन्तुमैच्छत्। तथा पराङ्मुखी परिवर्तितवदना सती शयनं पर्यङ्क
स सिषेवे। तथापि तस्यां प्रतिकूलवर्तिन्यामपि सत्यां पिनाकिनो हरस्य
प्रमोदाय बभूव। प्रियायाः प्रतिकूलव्यापारैरपि प्रियः प्रसन्न एवाभूदि
तस्य मुग्धास्वभावबोधकुशलत्वादिति भावः ॥

कैतवेन शयिते[1] कुतूहलात्पार्वती प्रति मुखं निपातितम्।
चक्षुरुन्मिषति सस्मितं प्रिये विद्युताहतमिव[2] न्यमीलयत्।

कैतवेनेति ॥ पार्वती कर्त्री। प्रिये हरे कुतूहलात्कैतवेन मिथ्यैव
सुप्ते सति। किमियं कुर्यादित्यभिप्रायेणेति भावः। मुखं प्रेयोमुखं प्रति
कृत्य निपातितं निक्षिप्तम्। किमयं स्वपिति जागर्ति वेत्यभिप्रायादिति
चक्षुः स्वनेत्रं कर्म। अथ च प्रिय इत्याकाङ्क्षावशात्पुनरपि संबध्यते।
समन्दहासं यथा स्यात्तथोन्मिषत्युज्जाग्रति सति विद्युताहतमिव प्रतिह
त्युत्प्रेक्षा। न्यमीलयत्। मुद्रयति स्मेत्यर्थः ॥

नाभिदेशनिहितः सकम्पया[3] शंकरस्य रुरुधे तया करः।
तद्दुकूलमथ[4] चाभवत्स्वयं दूरमुच्छ्वसितनीविबन्धनम् ॥ ४

नाभिदेश इति ॥ नाभिदेशे निहितः स्थापितः। नीवीमोचनार्थं
भावः। शंकरस्य करस्तया पार्वत्या सकम्पया सत्या रुरुधे प्रतिरुद्धः।
लिट्। अथ च तद्दुकूलं तस्या दुकूलं वस्त्रं कर्तृ। स्वयमात्मना। नतु प्रेरक
गात् दूरमतिशयितमुच्छ्वसितमुद्घाटितं नीव्या बन्धनं यस्य तथोक्तम
सात्त्विकभावादिति भावः ॥

एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥

एवमिति ॥ सा पार्वती कर्त्री। हे आलि हे सखि पार्वति, त्वया
निगृहीतं त्यक्तं साध्वसं भयं यस्मिन्कर्मणि यथा तथा शंकरः सेव्यतामित्
सखीभिः कर्त्रीभिः। 'न लोक–' इति षष्ठीनिषेधः। उपदिष्टमुपदेशम्।
निष्ठा। प्रिये प्रमुखवर्तिनि सत्याकुला संभ्रान्ता सती नास्मरत् ॥

१ शयने. २ विद्युतेव निहितम्. ३ सशङ्कया. ४ तन्नितम्बमभवत्तदा; तन्नित
चाभवत्.

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिवीक्ष्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

अपीति ॥ पार्वत्यनङ्गशासनं प्रियं कथायां संभाषणे प्रवृत्तये । लज्जावशान्मौं
ति मौनमाश्रिताया अस्याः संभाषणे कथमपि प्रवृत्त्यर्थमित्यर्थः । अवस्तुन्यप्य-
यपदार्थेऽपि प्रश्नतत्परं परिवीक्ष्य ज्ञात्वा । हृच्चक्षुषावेक्षणमिहापेक्षितम् ।
क्षितेन प्रियसंमुखमवलोकनेन मूर्ध्नः कम्पस्तन्मयं तद्रूपम् । नहि किंचिन्म-
पेक्षितमित्यभिलाषव्यञ्जकमिति भावः । उत्तरं ददौ ॥

शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥

शूलिन इति ॥ रहसि हृतांशुका । रतार्थमिति भावः । अतएव करतलयो-
न शूलिनः प्रियस्य नयने । द्वे इति शेषः । संनिरुध्यावृत्य स्थिता सा
ती । तस्य ललाटलोचने तृतीये नेत्रे पश्यति सति । मोघो निष्फलो यत्नो
। अतएव विधुरा दुःखिता । ततो विशेषणसमासः । अभूत् ॥

चुम्बनेष्वधरदानवर्जितं खिन्न[2]हस्तसदयोपगूहनम् ।
क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥

चुम्बनेष्विति ॥ चुम्बनेष्वधरदानेनाधरोष्ठखण्डनेन । 'दो अवखण्डने' ।
वे ल्युट् । वर्जितं रहितमपि यथा खिन्नहस्तं मन्दप्रचारितकरम् । स्तनयोरिति
: । गम्यमानार्थत्वादप्रयोगः । 'पाणिः' इति पाठे भिन्नं पदम् । तदा खिन्न-
यपीति योजनीयम् । सदयमगाढं यदुपगूहनमालिङ्गनं तद्यस्मिंस्तादृशमपि ।
एव क्लिष्टः परितोषाभावात्खिन्नो मन्मथः कामो यस्मिंस्तथोक्तमपि । तथा
भं प्रतिकृतं प्रतीकारो यस्य । रसाभासभियेति भावः । प्रतिकृतमिति भावे
ा । तथोक्तमपि वधूरतं प्रियासुरतं प्रभोः प्रियस्य प्रियं प्रीतिजनकम् ।
पध-' इति कः । अभूदिति शेषः ॥

यन्मुखग्रहणमक्षताधरं [3]दानमव्रणपदं [4]नखस्य यत् ।
यद्रतं च सदयं प्रिय[5]स्य तत्पार्वती विषहते स्म नेतरत् ॥ ९ ॥

यदिति ॥ पार्वती प्रियस्य प्रियकर्तृकम् । 'कर्तृकर्मणोः-' इति कर्तरि षष्ठी ।
क्षताधरमदष्टाधरोष्ठं यन्मुखस्य ग्रहणं चुम्बनार्थं करेणादानम् । तथाऽव्रण-
मदत्तचिह्नं यन्नखस्य दानम् । इह कर्मणः शेषत्वविवक्षायां षष्ठी । अन्यथा
लोक-' इति तन्निषेधः प्रसज्जेत । तथा सदयं स्पर्शमात्रविरामं यच्च
म् । मध्यान्तयोस्तृतीयान्तेन संबन्धः । 'नलोक-' इति कृद्योगलक्षणायाः
या बाधात् । तद्विषहते स्म सोढवती । 'लट् स्मे' इति भूतार्थे लट् ।
रिनिविभ्यः' इति षत्वम् । इतरत्कठोरमुखग्रहणादि न विषहते स्मेत्यर्थः ॥

१ परिगृह्य. २ सन्नहस्तमदयोपगूहने. ३ दत्तम्. ४ नखं च. ५ हरस्य.

रात्रिवृत्तमनुयोक्तुमुद्यतं सा प्र[1]भातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया शंसितुं तु[2] हृदयेन तत्वरे ॥ १

रात्रिवृत्तमिति ॥ प्रभातसमये रात्रिवृत्तं नैशं वृत्तान्तम्। 'वाच्य वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः। अनुयोक्तुं प्रष्टुम्। 'प्रश्नोऽनुयोगः च' इत्यमरः। उद्यतं सखीजनं सा पार्वती ह्रिया हेतुभूतयाऽपकुतूहलं जिज्ञासाकौतुकं नाकरोत्। नोत्तरयांचक्र इत्यर्थः। अथ च हृदयेन मनसा शंसितुमुत्तरं कर्तुं तत्वरे त्वरितम्। भावे लिट् ॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
प्रेक्ष्य बिम्बमुप[3]बिम्बमात्मनः कानि कानि न[4] चकार लज्जया

दर्पण इति ॥ किंचेति चार्थः। दर्पणे परिभोगदर्शिनी संभोगचिह्न किनी सा पार्वती। पृष्ठतो निषेदुषः स्थितवतः प्रणयिनो हरस्य बिम्ब मण्डलम्। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। आत्मन उपबिम्ब समीपे। 'अव्ययं विभक्ति–' इति समीपार्थेऽव्ययीभावः। पतितं प्रेक्ष्य कानि कानि चेष्टाविशेषचमत्कृतानि न चकार। अपि तु चकारैवेत्यर्थः ॥

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी स[5]माश्वसत्
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥

नीलकण्ठेति ॥ जननी मेना। तां पार्वतीं नीलकण्ठेन शिवेन यौवनं यस्यास्तथोक्तां विलोक्य समाश्वसदाश्वासं प्राप। हृष्टवतीति तथाहि। वधूजनो मातुर्मानसीं मनसिजां शुचं शोकं भर्तृवल्लभतया तिपात्रतयास्यति क्षिपति। 'असु क्षेपणे' लट्। आत्मजासु पतिप्रसा मातॄणां मुदो हेतुरिति भावः ॥

वासराणि कतिचित्कथंचन स्थाणुना र[6]तमकारि चानया।
ज्ञातमन्मथरसा शनैः शनैः सा मुमोच र[7]तिदुःखशीलता

वासराणीति ॥ कतिचिद्वासराणि दिवसान्। 'वा तु क्लीबे दिवस इत्यमरः। 'कालाध्वनोः–' इति द्वितीया। स्थाणुना शिवेन। 'स्था उमापतिः' इत्यमरः। अनया पार्वत्या सह कथंचन बलेन रतं सुरत कृतम्। तदनुकूलरसोत्पत्त्यभावादिति भावः। अथ च सा शनैःशनैर्ज्ञातो थरसो यया तथा सती रतौ या दुःखशीलता दुरवगाह्यस्वभावता तां स्वयमप्यनुरज्यति सेत्यर्थः ॥

१ विभात. २ च. ३ अनुबिम्बम्. ४ अपि. ५ समाश्वसीत्. मकार्यत प्रिया. ७ रत.

वाह—

**सस्वजे प्रियमुरोनिपीडनं[1] प्रार्थितं मुखमनेन नाहरत् ।**
**मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥**

सस्वज इति ॥ सा पार्वती । उरसो निपीडनं यस्मिन्कर्मणि यथा स्यात्तथा नं सस्वज आलिङ्गितवती । तथानेन प्रियेण प्रार्थितम् । चुम्बनार्थमित्यर्थः । खं नाहरन्नावक्रयत् । परंतु मेखलया काञ्च्या सह यः प्रणयः स्नेहस्तत्र या लता । जिघृक्षया मन्दप्रसरणमित्यर्थः । तां गतं प्राप्तमस्य प्रियस्य हस्तं शिथिलं मन्दं यथा तथा रुरोध । न तु प्रागिवेति भावः ॥

**भावसूचितमदृष्टविप्रियं दार्ढ्य[2]भाक्क्षणवियोगकातरम् ।**
**कैश्चिदेव दिवसै[3]स्तथा तयोः प्रेम गूढ[4]मितरेतराश्रयम् ॥ १५ ॥**

भावेति ॥ भावेन स्वगतत्वाभिव्यञ्जकचेष्टाविशेषेण सूचितं ज्ञापितम् । वः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति मेदिनी । तथा न दृष्टं विप्रि-दासीन्यं यत्र । तथा दार्ढ्यं दृढत्वं भजति तथोक्तम् । तथा क्षणवियोगेऽपि तरम् । तदसहिष्णिवत्यर्थः । गूढं सखीजनानभिज्ञेयं तयोः शिवपार्वत्योः स्नेहः । 'प्रेम स्नेहोऽथ दोहदम्' इत्यमरः । कैश्चिदेव दिवसैरितरेतराश्रयं स्परनिष्ठम् । अभूदिति शेषः ॥

म्णः परस्पराश्रयत्वमेव प्रपञ्चयति—

**तं यथात्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।**
**सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसै[5]कवृत्तिभाक् ॥ १६ ॥**

तमिति ॥ वधूः पार्वती । आत्मसदृशं तं वरं शिवमनु लक्षयित्वा यथा न प्रकारेणारज्यत । 'रञ्ज रागे' दैवादिकाल्लङ् । वरः शिवस्तां वधूमनु तथैवा-त । हि यथा जाह्नवी सागरात्समुद्रादनपगानिवर्तमाना । अस्तीति शेषः । ऽपि समुद्रोऽपि तस्या जाह्नव्या मुखसंबन्धिनि रस एकां केवलां वृत्तिं भज ति तथोक्तः । अस्तीति शेषः । उपमालंकारः ॥

**शिष्यतां निधुवनोपदेशिनः शंकरस्य रहसि प्रपन्नया ।**
**शिक्षितं युवतिनैपुणं तया यत्त[6]देव गुरुदक्षिणीकृतम् ॥ १७ ॥**

शिष्यतामिति ॥ निधुवनोपदेशिनः सुरतोपदेष्टुः शंकरस्य शिष्यतामुपदे-तां प्रपन्नया प्राप्तया तया पार्वत्या रहसि यद्युवतिषु त्रिजगद्विलासिनीषु मध्ये णं कौशलं शिक्षितमधीतम् । तदेव नैपुणशिक्षणमेव गुरुदक्षिणीकृतं गुरो-दक्षिणा दक्षिणा संपद्यते तथा कृतम् । अभूततद्भावे च्विः । 'अस्य च्वौ'

---

१ निपीडितम्; निपीडिता. २ चाटु तत्क्षण; चाटुमत्क्षण. ३ तदा. ४ रूढम्. निर्वृतिः. ६ तत्.

इतीकारः । शिवोपयोगित्वेन तत्कृतसुरतारम्भानुगुणसुरतकौशलमेव दौ त्वेन परिणतमिति भावः । इह वाक्यार्थवृत्तिनिदर्शनालंकारः—'वाक्या सदृशयोरैक्यारोपो निदर्शना' इत्युक्तत्वात् ॥

दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत्क्षणं मौलिचन्द्रशकलेन शूलिनः ॥ १

दष्टमुक्तमिति ॥ अम्बिका पार्वती पूर्वं दष्टं पश्चान्मुक्तमधरोष्ठं वे पीडया विधुतौ कम्पितौ हस्तौ पाणी एव पल्लवौ यथा तथोक्ता सती शी शूलिनः शिवस्य मौलौ यच्चन्द्रस्य शकलं कलारूपं तेन कृत्वा क्षणं निरवाप सुखयति स्मेत्यर्थः ॥

प्रियानुरागव्यञ्जकचेष्टामाह—

चुम्बनादलकचूर्णदूषितं शंकरोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥ १९

चुम्बनादिति ॥ चुम्बनाद्धेतोरलकचूर्णेन केशप्रसाधनचूर्णविशेषेण दूषि वरुद्धं ललाटजं ललाटे जातम् । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । अलुको पिकत्वान्नालुक् । नयनं नेत्रम् । उच्छ्वसत्कमलगन्धये विकसत्कमलसुगन्ध पद्मिनीत्वादिति भावः । 'उपमानाच्च' इतीकारः । 'गन्धो गन्धक आ इति विश्वः । पार्वत्या वदनमेव गन्धवाही पवनस्तस्मै । 'गन्धवाहानिला इति कोशनिर्दिष्टगन्धवाहशब्दस्य गन्धं वहतीति योगालम्बनेन गन्धवा ब्देनापि वायुत्वप्रतीतिः । रूढ्यालम्बने त्वणप्रत्ययान्तस्यैव पवनत्वप्रतीतौ श मत्वादवाचकपददोषप्रसङ्ग इति बोध्यम् । ददौ । तत्राधो रजो निवर्त स्थापितवानित्यर्थः ॥

एवमिन्द्रियसुखस्य वर्त्मनः[1] सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमात्रमवसद्वृषध्वजः[2] ॥ २० ॥

एवमिति ॥ एवमिन्द्रियाणि सुखयतीति सुखः । सुखशब्दात्करोत्यर्थक न्तात्पचाद्यच् । णिज्लोपश्च । तस्य वर्त्मनः सेवनादाचरणाद्धेतोरनुग प्रसादितो मन्मथो येन । स्ववपुर्योजनादिति भावः । 'परिणेष्यति पार्वतीं वपुषा स्वेन नियोजयिष्यति' ( ४।४२ ) इति चतुर्थसर्गोक्तमनुसंधेय तथोक्तो वृषध्वजो हरः शैलराजभवने हिमालयगृह उमया पार्वत्या मासमात्रं त्रिंशद्दिनात्मकः कालो मासस्तमेवावसत् । 'कालाध्वनोः-' द्वितीया । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः ॥

सोऽनुमान्य[3] हिमवन्तमात्मभूरात्मजाविरहदुःखखेदितम्[4] ।
तत्र तत्र विजहार संपतन्[5]नप्रमेयगतिना ककुद्मता ॥ २१ ॥

१ चात्मनः. २ मासमेकम्. ३ अनुमन्त्र्य. ४ पीडितम्. ५ संचरन्

स इति ॥ स आत्मभूः शिवः । आत्मजायाः पार्वत्या विरहदुःखेन खेदितं हिमवन्तमनुमान्य तत आज्ञां गृहीत्वा । अप्रमेयवत्स्वेव स्थानेषु वर्तत इत्यपरिच्छेद्या गतिर्गमनव्यापारो यस्य तथाभूतेन ककुद्मता नन्दिना तत्र तत्र पर्वते संपतन्संचरमाणो विजहार विहारं कृतवान् । इह 'संचरन्' इति पाठोऽसाधुः । 'समस्तृतीयायुक्तात्' इति नित्यमात्मनेपदनियमाच्छतुर्दौर्लभ्यात् । अमरमार्गपदं शेषयित्वा सकर्मकत्वादप्रसङ्ग इति केचित्समर्थयन्ते ॥

**मेरुमेत्य मरुदा[1]शुगोक्षकः पार्वतीस्तनपुरस्कृतः कृती ।**
**हेमपल्लवविभङ्गसंस्त[2]रानन्वभूत्[3]सुरतमर्दनक्षमान् ॥ २२ ॥**

मेरुमिति ॥ मरुदिवाशु गच्छतीति मरुदाशुग उक्षा वृषभो यस्य सः 'शेषाद्विभाषा' इति कप् । कृती कुशलो हरः । मेरुं सुमेरुम् । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । एत्यागत्य पार्वत्याः स्तनाभ्यां पुरस्कृतान्पूजितानाश्रयत्वेन स्वीकारात् । अल्पीयसां महत्स्वीकार एव पूजात्वेन परिणमतीति भावः । महतामल्पीयःस्वीकारे को हेतुरित्याशङ्क्य विशेषयति—सुरतेषु यानि मर्दनानि तेषु क्षमान्सहिष्णून् । हेम्नः पल्लवानां विभङ्गाः खण्डास्तेषां संस्तरानास्तरणान्यन्वभूत् । तत्र सुप्त्वा विजहारेत्यर्थः । अल्पीयसामपि सहिष्णुत्वं हेम्नो विकारत्वात् । अल्पीयस्त्वं तु पदो लवः पल्लव इति श्लिष्टार्थमहिम्ना समर्थ्यते ॥

**पद्मनाभच[4]रणाङ्किताश्मसु प्राप्तवत्स्वमृतविप्रुषो नवाः ।**
**म[5]न्दरस्य कटकेषु चावसत्पार्वतीवदनपद्मषट्पदः ॥ २३ ॥**

पद्मनाभेति ॥ हरः । पद्मनाभो हरिः । 'पद्मनाभो मधुरिपुः' इत्यमरः । तस्य चरणाभ्यामङ्किताश्चिह्निता अश्मानो येषाम् । एतेन हरेरपि विहारयोग्यत्वं ध्वन्यते । तथा नवा अमृतविप्रुषोऽमृतबिन्दून् । 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः । प्राप्तवत्सु । समुद्रमन्थनसाधनत्वादस्येति भावः । मन्दरस्य च कटकेषु नितम्बेषु । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । पार्वत्या वदनरूपे पद्मे षट्पदो भ्रमरः सन् । अवसद्वासमकरोत् ॥

**रा[6]वणध्वनितभीतया तया कण्ठसक्तदृ[7]ढबाहुबन्धनः ।**
**एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥ २४ ॥**

रावणेति ॥ जगतां गुरुर्नियन्ता । उत्पत्त्यादित्रिविधकर्मणां गुणभेदेन कारकत्वादिति भावः । शिवः एकपिङ्गलस्य कुबेरस्य । 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः' इत्यमरः । गिरौ कैलासे रावणस्य प्रसिद्धराक्षसस्य ध्वनितात्सिंहनादाद्भीतया तया पार्वत्या कण्ठे सक्तं सज्जितं दृढं बाहुबन्धनं यस्य स तथोक्तः सन् विशदाः स्वच्छाः । शारदिका इति भावः । शशिनः प्रभाः कौमुदीर्निर्विवेशोपभुक्तवान् ॥

---

१ आशुवाहनः. २ संस्तराम्. ३ सुरततत्परः क्षपाम्. ४ वलय. ५ मान्दरेषु. ६ वारणस्वनित. ७ मृदु.

तस्य जातु मलयस्थलीरतेर्धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥ २

तस्येति ॥ जातु कदाचित् । तस्य तत्कर्तृके । मलयस्थलीषु रतं सुर सति । धूताः कम्पिताश्चन्दनानां चन्दनवृक्षाणां लताः शाखा येन स तथो लवङ्गानां केसरैः किञ्जल्कैः सह वर्तते तथोक्तः । दक्षिणानिलो मलयप चाटुकार इव मधुरभाषीव । प्रियायाः क्लमं खेदमाचचाम । हृतवानित्य

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
सा व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला ॥ २

हेमेति ॥ सोमा पार्वती हेम्नस्तामरसेन रक्तोत्पलेन तटोत्पन्नेन ताडितः यया सा । परिहासविधित्सयेति भावः । तथा तस्य प्रियस्य कराम्बुना हस्त जलेन विनिमीलिते ईक्षणे नेत्रे यया तथा मीनपङ्क्त्या पुनरुक्ता मेखला य यस्यास्तथोक्तासती । तरङ्गिणीं नदीं व्यगाहत विजगाहे । जलक्रीडां चकारेत्य 'तरङ्गिणी शैवलिनी' इत्यमरः ॥

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः ॥ २

तामिति ॥ अयुग्मानि विषमाणि । त्रीणीति यावत् । लोचनानि य तथोक्तः शिवो नन्दन इन्द्रोद्याने पुलोमतनया शची । 'पुलोमजा शचीन्द्र इत्यमरः । तस्या अलकेषु केशेषूचितैः पारिजातकुसुमैः कल्पवृक्षपुष्पैस्तां प प्रसाधयन्भूषयन् । तथा सुरवधूभिर्देवाङ्गनाभिः सस्पृहमीक्षितः सन् चिर दिति शेषः ॥

इत्यभौममनुभूय शंकरः पार्थिवं च दयितासखः सुखम् ।
लोहितायति कदाचिदातपे गन्धमादनवनं व्यगाहत ॥ २

इतीति ॥ शंकरः इत्येवमभौमं स्वर्गीयं तथा पार्थिवं भौमं च सुखम् । तासखः सन्ननुभूय । कदाचित्समय आतपे सूर्ये लोहितायति रक्तवर्णे जाय सति । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष् । गन्धमादनस्य गिरेर्वनं हत । तत्र क्रीडितुं जगामेत्यर्थः ॥

तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥ २

तत्रेति ॥ तत्र गन्धमादनवने स हरो भास्करं सूर्यं नेत्रगम्यं नेत्रप्रा

१ वनः. २ सतुषारशीतलः. ३ खे. ४ मेखलाम्. ५ सुरवधूभिरी सुरवधूनिरीक्षितः; सुरवधूभिरीक्षतः. ६ वनिता. ७ गिरिम्.

त्रावलोक्यमिति यावत् । अवलोक्य विचार्य । काञ्चनं सौवर्णं शिलातलमाश्रयो यस्य तथोक्तः सन् । दक्षिणेतरो भुजो वामभुजस्तत्र व्यपाश्रयः संबन्धो यस्यास्ताम् । तत्र स्थितामित्यर्थः । सहधर्मचारिणीं पत्नीं पार्वतीं व्याजहारोक्तवान् । 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥

**पद्मकान्तिमरुणत्रिभागयोः[1] संक्रमय्य[2] तव नेत्रयोरिव ।**
**संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥**

पद्मेति ॥ हे प्रिये, असौ पुरोवर्त्यहर्पतिः सूर्यः । अरुणे त्रिभागौ तृतीयांशौ ययोस्तयोस्तव नेत्रयोरिव पद्मकान्तिं कमलशोभां संक्रमय्य तुलयित्वा । कमलसंनिधित्वेन रात्रौ तव नेत्रकमल एव स्थास्यत इति विचार्येति भावः । संक्षये प्रलये प्रजेश्वरो ब्रह्मा जगदिव । अहो दिनं संहरति । स्वस्यास्तंगतत्वादिति भावः । अत्र गम्योत्प्रेक्षा ॥

**सीकरव्यतिकरं मरीचिभिर्[3]दूरयत्यवनते[4] विवस्वति ।**
**इन्द्रचापपरिवेषशून्यतां निर्झरास्तव[5] पितुर्व्रजन्त्यमी ॥ ३१ ॥**

सीकरेति ॥ हे प्रिये, अवनते नम्रीभूते । अस्तंगत इति यावत् । विवस्वति सूर्ये मरीचिभिः स्वकिरणैः सह सीकराणां जलकणानाम् । 'सीकरोऽम्बुकणाः स्मृताः' इत्यमरः । व्यतिकरं संबन्धं दूरयति दूरं कुर्वति सति । अमी पुरोवर्तिनस्तव पितुर्हिमालयस्य निर्झराः प्रवाहा इन्द्रचापेन यः परिवेषः परिधिः । 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः । तेन शून्यास्तेषां भावस्तत्ता तां व्रजन्ति । गच्छन्तीत्यर्थः । निर्झरकणपतितसायंतनकिरणैरुद्भासमानेन्द्रचापपरिधिस्तु सूर्यस्यास्तंगतत्वाद्विलीनेति भावः ॥

**दष्टतामरसकेसरस्रजोः[6] क्रन्दतोर्विपरिवृत्तकण्ठयोः[7] ।**
**निघ्नयोः[8] सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ ३२ ॥**

दष्टेति ॥ हे प्रिये, तामरससंबन्धिनां केसराणां स्रग्याभ्यां तयोः । तथा विपरिवृत्तौ परस्परपराङ्मुखीभूतौ कण्ठौ ययोः । यथा निघ्नयोः परस्पराधीनयोः । 'अधीनो निघ्न आयत्तः' इत्यमरः । अतएव क्रन्दतो रुदतोः । तथा सरसि स्थितयोश्चक्रवाकयोरल्पमन्तरं वियोगोऽनल्पतामतिशयिततां गतम् । प्राप्तमित्यर्थः ॥

**स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।**
**आविभातचरणाय[9] गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥**

स्थानमिति ॥ हे प्रिये, दन्तिनो गजाः सल्लकीविटपा वृक्षविशेषास्तेषां भङ्गैः

१ अरुणान्तभागयोः. २ संगमय्य. ३ धूनयति. ४ प्रसवितुः. ५ ते. ६ त्यजोः. ७ विरहदीनकण्ठयोः. ८ भिन्नयोः. ९ आविभाति शरणाय गच्छतः सांध्यकर्मविधयेऽनुगृह्णते.

खण्डैर्वासितं सुगन्धितमाह्निकं दैनं स्थानमपास्य त्यक्त्वा । विभातमारभ्य भातं यच्चरणमाचरणम् । सांध्यं कृत्यमिति यावत् । तस्मै तत्कर्तुम् । वा... कमलेषु बद्धाः षट्पदा भ्रमरा यत्र तादृशं वारि जलं गृह्णते । करो... इत्यर्थः । गम्योत्प्रेक्षा ॥

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे[1] विवस्वता ।
लब्धया[2] प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ ३...

पश्येति ॥ हे मितकथे मिताः परिमिताः कथा यस्यास्तत्संबोधनं हे मि...षिणि प्रिये, पश्चिमं दिगन्तं लम्बते तथोक्तेन विवस्वता सूर्येण लब्धया प्रा... प्रतिबिम्बेन कृत्वा सरःसंबन्धिनामम्भसां तापनीयं सौवर्णं सेतोर्बन्धनमिव नि...तम् । कृतमित्यर्थः । इति त्वं पश्य । तरङ्गितसरोजलेषु पतितमतएवाविर... सहस्रधा विभक्तं स्वप्रतिबिम्बमेव सूर्यनिर्मितः सेतुरिवेत्युत्प्रेक्षा । 'त... शातकुम्भम्' इत्यमरः । ततः 'तस्य विकारः' इत्यण् ॥

उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥

उत्तरन्तीति ॥ हे प्रिये, गाढः पङ्को यत्र तादृशं पल्वलमल्पसरः । 'वे... पल्वलं चाल्पसरः' इत्यमरः । विनिकीर्य । स्वाधिवासेन विक्षिप्तं कृत्वेत्यर्थः । ...वाहितोऽतिक्रान्त आतपो घर्मो यैः । तथा दंष्ट्रिणः प्रशस्तदंष्ट्रायुक्ताः । वनव...णामारण्यकशूकराणां यूथं पान्ति रक्षन्ति ते वनवराहयूथपाः । महान्तो व... इत्यर्थः । दष्टा भङ्गुरा भङ्गशीला बिसाङ्कुरा मृणालतन्तवो यैस्ते तथोक्ता ... उत्तरन्ति निःसरन्ति । अर्थात्सरस इत्यर्थः । अत्र बहिर्दृश्येषु दंष्ट्राङ्कुरेषु ...ङ्कुरत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः ॥

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः[3] ।
हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥

एष इति ॥ हे पीवरोरु, वृक्षशिखरे कृतमास्पदं स्थितिर्येन । तत्र ... इत्यर्थः । एष पुरोवर्ती बर्हिणो मयूरः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । ... जातरूपस्य सुवर्णस्य । 'चामीकरं जातरूपम्' इत्यमरः । यो रसो जलं त... पीतं मण्डलं बर्हसमूहो यस्य तादृशम् । अह्नो दिवसस्यात्ययः संध्या ... आतपं पिबतीवेत्युत्प्रेक्षा । यतो हीयमानम् । अन्यथा कथमस्य हानिः स्या... भावः ॥

पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव[4] जातमेकतः ।
खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः ॥ ३...

पूर्वेति ॥ विवस्वता हृतं शोषितमातपो जलमिव यस्य तादृशं खं व्योम । ...

१ कथमिदम्. २ दीर्घया. ३ मण्डलम्. ४ लग्नपङ्कम्.

...यास्तिमिरप्रवृत्तयस्तमःप्रसारास्ताभिः कृत्वा । एकत एकत्र भागे व्यक्तः पङ्को ... तदिव जातं सत् । किंचिच्छेषवदीषज्जलशेषपि सर इव भाति । अस्तंगच्छ-...ल्पातपे किंचिज्जलशेषोत्प्रेक्षणपूर्वक उपमालंकारः ॥

आविशद्भिरुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः ।
आश्रमाः प्रविशदग्र्यधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥

आविशद्भिरिति ॥ उटजस्य पर्णशालाया अङ्गणम् । 'पर्णशालोटजो ...याम्' इत्यमरः । आविशद्भिः प्रविशद्भिर्मृगैः । तथा मूलेषु यः सेकः सेचनं ... सरसा आर्द्रास्तथोक्तैर्वृक्षकैरल्पवृक्षैश्चोपलक्षिताः । तथा प्रविशन्त्योऽग्र्याः ...धेनवो येषु तथोदीरिता उद्दीपिताः । सायंहोमार्थमिति भावः । अग्नयो ...र्हपत्यादयो येषु तथोक्ता आश्रमा ऋषीणां वासस्थानानि । श्रियं बिभ्रति । ...भन्त इत्यर्थः ॥

बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥ ३९ ॥

बद्धेति ॥ बद्धकोशं मुकुलितमपि कुशेशयं कमलं कर्तृ । वसतिं ग्रहीष्यते ...पदाय भ्रमराय प्रीतिपूर्वमन्तरमवकाशम् । 'अन्तरमवकाशावधि' इत्यमरः । ...तुमिवेत्युत्प्रेक्षा । क्षणं सावशेषं विवरं छिद्रं यस्य तथा तिष्ठति ॥

दूरमग्रपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ ४० ॥

दूरमिति ॥ हे प्रिये, वारुणी दिक्पश्चिमदिक् । दूरमग्रे परिमेया अल्पत्वा-...रिमातुं शक्या रश्मयः किरणा यस्य तादृशेनारुणेन भानुना । केसरवता ...ञ्जल्कवता बन्धुजीवं बन्धुजीवाख्यवृक्षपुष्पं तदेव तिलकं तेन मण्डिता ...न्यकेव भाति ॥

सामभिः सहचराः सहस्रशः स्यन्दनाश्वहृदयंगमस्वनैः ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ॥ ४१ ॥

सामभिरिति ॥ किरणोष्मपायिनः किरणानामूष्माणमेव पिबन्तीति त-...क्ताः । सहस्रशः सहचरा वालखिल्यादय ऋषयः । अग्नौ परिकीर्णं निक्षिप्तं ...जो येन तं भानुं सूर्यम् । स्यन्दनस्य रथस्य संबन्धिनो येऽश्वास्तेषां हृदयं-...गमा मनोहराः स्वना येषां तैः सामभिः सामवेदैः संस्तुवन्ति । स्तुतिं कुर्व-...न्तीत्यर्थः ॥

---

१ उटजाङ्गणे. २ अग्निधेनवः. ३ उत्तरम्. ४ दूरलग्न. ५ वारुणा. ६ कुसुमेन. ७ वदनैश्च; स्यन्दनस्य. ८ स्वरैः.

**सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।**
**अस्तमेति युगभुग्नकेसरैः संनिधाय दिवसं महोदधौ ॥ ४**

**सोऽयमिति** ॥ सोऽयं सूर्यो दिवसं महोदधौ संविधाय संस्थाप्य । आ
नम्रीभूता शिरोधरा ग्रीवा येषां तैः । अतएव कर्णयोश्चामरैर्विघट्टिते मुकु
ईक्षणे येषां तैः । युगेन स्कन्धधार्यकाष्ठेन भुग्ना मृदिताः केसराः स्कन्धरो
येषां तथोक्तैर्हयैरश्वैः कृत्वा । अस्तमस्ताचलमेति गच्छति । 'अस्तस्तु
क्ष्माभृत्' इत्यमरः ॥

**खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।**
**तत्प्रकाशयति यावदुद्गतं[2] मीलनाय खलु तावतश्च्युतम्[3] ॥ ४**

**खमिति** ॥ प्रिये, खं व्योम रवौ संस्थितेऽस्तंगते सति प्रसुप्तमिव भव
युक्तमेवेत्याह—महतस्तेजस ईदृशी वक्ष्यमाणा गतिरस्ति । सा केत्याह—त
कर्तृ । उद्गतमुदितं सत् । यावत् । स्थानमित्यर्थः । प्रकाशयति ।
भ्रष्टमस्तमितं तदिति यावत् । तावतः स्थानस्य मीलनाय संकोचनाय भ
खलु । यत्र तेजस्तिष्ठति तत्प्रकाशते । यतो गच्छति तन्न प्रकाशत इति भा
उत्प्रेक्षालंकारः ॥

**संध्ययाप्यनुगतं रवेर्वपुर्वन्द्यमस्तशिखरे[4] समर्पितम्[5] ।**
**येन[6] पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ ४४**

**संध्ययेति** ॥ संध्ययापि कर्त्र्या अस्तशिखरे समर्पितं निहितं वन्द्यं
रवेर्वपुर्मण्डलं कर्म । अनुगतमन्वगामि । योग्यमेवैतदित्याह—पूर्वमुदये प्रा
समये येन पुरस्कृताग्रे कृता संमानिता च । उदये प्रागेव संध्यागम इति प्र
द्धम् । आपदि विपत्समये । अस्तमय इति यावत् । तं सूर्यं कथं नानुयास्य
अपि तु यास्यत्येवेत्यर्थः । सतीधर्म एष एवेति भावः ॥

**रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि भान्त्यमूः ।**
**द्रक्ष्यसि त्वमिति संध्ययानया[7] वर्तिकाभिरिव[8] साधुमण्डिताः[9]**

**रक्तेति** ॥ हे कुटिलकेशि प्रिये, अमूः पुरोगताः । रक्ताश्च पीताश्च कपि
तथोक्ताः । नानावर्णा इत्यर्थः । पयोमुचां कोटयोऽग्रयः । 'स्यात्कोटिरश्रौ चा
संख्याभेदप्रकर्षयोः' इति विश्वः । भान्ति । तास्त्वं द्रक्ष्यसीति हेतोरनया संध
कर्त्र्या । वर्तिकाभिश्चित्रशलाकाभिः साधु यथा तथा मण्डिता इव भूषि
किञ्चित्युत्प्रेक्षा ॥

---

१ शिरोरुहैः. २ उत्थितम्. ३ तावता. ४ पदम्. ५ घर्मम्. ६ प्र
थेयम्. ७ सांध्यवेलया. ८ वर्णिकाभिः. ९ वर्तिताः.

सिंहकेसरसटासु [1]भूभृतां पल्लवप्रसविषु द्रुमेषु च ।
पश्य [2]धातुशिखरेषु भानुना संविभक्तमिव सांध्यमातपम् ४६

सिंहेति ॥ हे प्रिये, भूभृतां पर्वतानां संबन्धिनां सिंहानां केसराः किञ्जल्का याः सटाः स्कन्धकेशास्तासु । पल्लवानां प्रसवो येषु तेषु द्रुमेषु च । तथा धातुयुक्तेषु शिखरेषु च भानुना संविभक्तं सम्यग्विभज्य दत्तमिव सांध्यमातपं पश्य । केसरादीनामात्मसदृशत्वात्सुहृद्भूततया सूर्योऽस्तगमनसमय आसन्नमृत्युः पुरुष आत्मधनमिव घनीभूतं तात्कालिकमातपं तेभ्यो दत्त्वास्तं गच्छतीति भावः ॥

[3]अद्रिराजतनये तपस्विनः पावनाम्बुविहि[4]ताञ्जलिक्रियाः ।
ब्रह्म गूढम[5]भिसंध्यमादृताः शु[6]द्धये विधिविदो गृणन्त्यमी ॥४७॥

अद्रीति ॥ हे अद्रिराजतनये, विधिविदस्तपस्विनोऽमी ब्राह्मणाः । अभिसंध्यं संध्यामभिव्याप्य । पावनं पवित्रं यदम्बु तेन विहिताञ्जलिक्रियार्घ्यदानं यैस्तथोक्ताः । भूत्वेति शेषः । शुद्धय आत्मशुद्धिं कर्तुमादृता आदरयुक्ताश्च सन्तः । गूढं रहस्यभूतं ब्रह्म गायत्रीं गृणन्ति । जपन्तीत्यर्थः ॥

तन्मुहूर्तमनुमन्तुमर्हसि प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो वल्गुवादिनि विनोदयिष्यति ४८

तदिति ॥ हे वल्गुवादिनि मिष्टभाषिणि, तत्तस्मात्कारणात्प्रस्तुताय सांध्याय नियमाय विधये नियमं कर्तुं मामपि मुहूर्तं क्षणमात्रमनुमन्तुं त्वं गच्छेत्यनुमतिं कर्तुमर्हसि । तथा त्वां विनोदे विनोदकरणे निपुणः कुशलः सखीजनो विनोदयिष्यति ॥

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयाम[7]हेतुकम् ॥ ४९ ॥

निर्विभुज्येति ॥ ततोऽनन्तरं शैलराजतनया पार्वती दशनच्छदमोष्ठं निर्विभुज्य वक्रीकृत्य भर्तुर्वाच्यवधीरणापरा तिरस्कृतिसक्ता । श्रुतमप्यश्रृण्वतीत्यर्थः । समीपगां विजयानाम्नीं सखीम् । अहेतुकं निष्कारणमाललाप । आलापं कृतवतीत्यर्थः ॥

ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनु[8]तस्थिवान्विधिम् ।
पार्वतीमवचनामसूयया [9]प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

---

१ भूभृता. २ धातुशिखरेषु चात्मनः; चास्तशिखरे विवस्वता; धातुशिखरेषु चात्मना. ३ पार्ष्णिमुक्तवसुधास्तपस्विनः. ४ रचिता. ५ अभिसांध्यम्. ६ सिद्धये. ७ सहेतुकम्. ८ अनुतिष्ठवान्. ९ सोऽभ्युपेत्य.

ईश्वर इति ॥ दिवसात्यये सायंकाल उचितं विधिं मन्त्रपूर्वं यथा त स्थितवान्कृतवानीश्वरोऽप्यसूयया मां त्यक्त्वा गत इत्यभिप्रायगर्भितयेर्ष्यया मभाषमाणाम् । 'वच परिभाषणे' कर्तरि ल्युः । पार्वतीं प्रत्युपेत्य समी पुनः सस्मितं यथा तथाहोक्तवान् ॥

मुञ्च कोपमनिमित्तकोपने संध्यया प्र[1]णमितोऽस्मि ना[2]न्यथा ।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥

मुञ्चेति ॥ हे अनिमित्तकोपनेऽकारणकोपने, कोपं क्रोधं मुञ्च । यतो संध्यया कर्त्र्या । प्रणमितो नान्यया । अहं संध्यावशं गतो नान्यवशं गतः कोपं मा कुर्वित्यर्थः । अथ च । आत्मनः सहधर्मचारिणं माम् । संध्यां गच्छन्तमिति शेषः । चक्रवाकेन समा वृत्तिर्यस्य तं किं न वेत्सि । इदानीं प्रियाविरहखिन्नत्वादिति भावः ॥

निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु पूर्वमु[3]ज्झिता ।
सेयमस्तमुदयं च से[4]वते तेन मानिनि ममात्र गौरवम् ॥ ५

निर्मितेष्विति ॥ हे सुतनु, स्वयंभुवा ब्रह्मणा निर्मितेषु कल्पितेषु तनुः सूक्ष्मा या संध्या पूर्वमुज्झिता सेयं संध्यास्तमुदयं च सेवते । तेन कार हे मानिनि, ममात्र गौरवमादरः । अस्तीत्यर्थः ॥

तामिमां तिमिरवृ[5]द्धिपीडितां शैल[6]राजतनयेऽधुना स्थिताम् ।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥ ५३

तामिति ॥ हे शैलराजतनये प्रिये, तामिमां संध्यामधुनैकतः पूर्वत्र रवृद्धिपीडितामतएव तटे तमालानां माला यस्यास्तथोक्तां धातूनां गैरिक रसस्य निम्नगां नदीमिव स्थितां पश्य । उपमालंकारः । मालिनीत्यत्र 'व्री भ्यश्च' इतीनिः ॥

सांध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।
सांपरायवसुधासशोणितं मण्डलाग्रमिव तिर्यगु[7]ज्झितम् ॥ ५

सांध्यमिति ॥ अपरा प्रतीची दिक् । अस्तमितं शेषं च सांध्यम् । रक्तलेखा पङ्क्तिर्यस्य । तथा सांपराया सांग्रामिकी या वसुधा तत्र स सरक्तमतएव तिर्यगुज्झितं त्यक्तं मण्डलस्याग्रमिव स्थितमातपं बिभर्ति ॥

यामिनीदिवससंधिसंभवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने विजृम्भते ॥ ५५

१ प्रयमितः. २ अन्यथा. ३ उत्थिता. ४ सेव्यते. ५ वृत्ति. ६ लग्नमिव संप्रति स्थिताम्; भूमिलग्नमिव संप्रतिष्ठिताम्. ७ उत्थितम्. ८ निर

यामिनीति ॥ हे दीर्घनयने प्रिये, यामिनीदिवसयोः संधौ संध्यायां संभ-
तथोक्ते सांध्ये तेजसि सुमेरुणा व्यवहितेऽन्तर्हिते सति निरङ्कुशं निरर्ग-
तत्पुरोवर्त्यन्धतमसं गाढं तमो दिक्षु विजृम्भते प्रसरति । संध्यापि विली-
यर्थः ॥

नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरौघ[1]वेष्टितो गर्भवास इव वर्तते निशि ॥५६॥

नोर्ध्वमिति ॥ निशि तिमिरौघेण वेष्टित एष लोको गर्भवास इव वर्तते ।
स्थित इव प्रतिभासमानत्वादिति भावः । यत ईक्षणानां लोकनेत्राणां गतिः
र ऊर्ध्वं न । तथाधोऽपि न । तथाभितो वामदक्षिणोऽपि न । तथा पुरतो न ।
तश्च न । गर्भस्थितवज्जनैः कुत्रापि नावलोक्यत इत्यर्थः । ततो निशावृत्तौ
वृत्तित्वोत्प्रेक्षा ॥

शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हृतान्तरम्[2] ॥ ५७ ॥

शुद्धमिति ॥ शुद्धं निर्मलमाविलं मलिनमवस्थितं स्थिरं चलं चरिष्णु वक्रं
टिलमार्जवगुणेनर्जुत्वगुणेनान्वितं सरलं च यत् तत्सर्वमेव तमसा समीकृतम् ।
मोन्याह्या पृथगभासमानत्वादिति भावः । तथाहि । असतां कादाचित्कमपि
हत्त्वं धिक् । यतो हृतान्तरं समीकृतसदसद्गुणम् । अत्र सामान्येन विशेषसमर्थ-
रूपोऽर्थान्तरन्यासः ॥

नूनमुन्नमति[3] यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पूर्वदिङ्मुखं[4] कैतकैरिव रजोभिरावृतम्[5] ॥ ५८ ॥

नूनमिति ॥ हे पुण्डरीकमुखि कमलमुखि प्रिये, नूनं यज्वनां द्विजानां
तिश्चन्द्रः शार्वरस्य शार्वरीसंबन्धिनस्तमसो निषिद्धये निवृत्तय उन्नमत्युदेति ।
तएव कैतकैः केतकसंबन्धिभी रजोभिरिवाहतं व्याप्तं पूर्वदिशो मुखम् ।
श्येति शेषः ॥

मन्दरान्तरितमूर्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठतः ॥५९॥

मन्दरेति ॥ सतारका सनक्षत्रा निशा रात्रिर्मन्दरेण गिरिणान्तरिता मूर्ति-
र्यस्य तेन शशभृता चन्द्रेण प्रियसखीभिः समागता मिलिता त्वं पृष्ठतः स्थित्वा
वचनानि श्रोष्यता मयेव लक्ष्यते । उपमालंकारः ॥

१ तिमिरोल्व. २ हतान्तरम्; अनन्तरम्. ३ उन्नयति. ४ पश्य दिङ्मुखम्; दिङ्मुखं यथा. ५ आवृतम्.

रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनु चन्द्रिकास्मितम् ।
एतदुद्गिरति [1]चन्द्रमण्डलं दिग्रहस्यमिव [2]रात्रिनोदितम् ॥

रुद्धमिति ॥ आ दिनक्षयाद्दिनक्षयं मर्यादीकृत्य रुद्धनिर्गमनं रुद्धो अथ च । पूर्वस्यां दृष्टा तनुर्यस्य । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति वदस्य पुंवद्भावः । एतच्चन्द्रमण्डलं कर्तृ । रात्र्या नोदितं कथयितुं प्रेरितं चन्द्रिकैव स्मितं यस्मिन्कर्मणि यथा तथा दिशः पूर्वस्या रहस्यमुद्गिरतीव तीव । यथा सेर्ष्या काचित्केनचिद्द्वारा सपत्नीरहस्यं कथयति तथा रात्रिरु दिग्रूपायाः स्त्रियो रहस्यं तदवयवप्रदर्शनं प्रकटयति त्वं पश्येत्यभिप्रायः । क्षालंकारः ॥

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
वि[3]प्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ६

पश्येति ॥ पक्वा या फलिनी तस्याः फलं तस्य त्विडिव त्विड् यस्य । बिम्बेन लाञ्छितं योजितं वियत्सरोम्भश्च येन । उभयत्रापि दृश्यमानेनेत हिमांशुना चन्द्रेण कर्त्रा । चक्रवाकयोर्मिथुनं तीरस्थं विडम्ब्यते प्रतार्यते । विप्रकृष्टं न जातं विवरमन्तरमुभयोस्तारतम्यं यस्य । त्वं पश्य । सरःप्रतिबिं चन्द्रमण्डलं फलिनीफलभ्रान्त्या जिघृक्षुतापूर्वकमुद्दिश्य गच्छन्मिथुनं, वस्तु तत्र फलिनीफललाभाभावाद्व्यस्तशस्त्रेण भूयत इति भावः । 'फलिन्यग्निशि च फलिन्याम्' इति मेदिनी ॥

[4]शक्यमोषधिपतेर्नवो[5]दयाः कर्णपूररचनाकृते [6]तव ।
अप्रगल्भयवसूचि[7]कोमलाश्छेत्तुमग्रनखसंपुटैः [8]कराः ॥ ६२

शक्यमिति ॥ हे प्रिये, नव उदयो येषाम् । तथाऽप्रगल्भा नूतना ये यव सूचयोऽङ्कुरास्तद्वत्कोमलाः । ओषधीनां पत्युश्चन्द्रस्य कराः किरणाः कर्ण रचनाकृते रचनायै तवाग्राणि ये नखसंपुटास्तैः । तेषामतितैक्ष्ण्यादिति भ छेत्तुं द्विधाकर्तुं शक्यम् । शक्तैर्भूयत इत्यर्थः । शक्नोतेः 'ऋहलोः–' इति ण्यत् । यवाङ्कुरवत्कोमलांश्चन्द्रकरानुत्तार्य त्वया कर्णपूरं कर्तुमुत्साहः क्रि मिति भावः ॥

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ ६

अङ्गुलीभिरिति ॥ शशी चन्द्रः । कुड्मलीकृते मीलिते सरोजे एव लो यस्य तथोक्तं रजन्या मुखं वदनम् अङ्गुलीभिरिव मरीचिभिः किरणैः केश

---

१ रात्रिचोदिता. २ चन्द्रमण्डलम्. ३ विप्रकृष्टविधुरम्; विप्रकृष्टविरहम्; कृत्तविवरम्. ४ शक्यः. ५ नवोदयः. ६ नवाः. ७ कोमलः. ८ करः.

मिव तिमिरं तमः संनिगृह्य हठाद्गृहीत्वा चुम्बतीव । अन्योऽपि कश्चिच्चुम्बकः केशसंचयं संनिगृह्णाति । चुम्बनसमये केशसंनिग्रहे यः कोऽपि रसोद्बोधः स स्वैकवेद्य इत्यर्थः । समासोक्तिरलंकारः ॥

पश्य पार्वति नवेन्दुरश्मिभिर्भिन्नसान्द्रतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितं संप्रसादमिव मानसं सरः ॥ ६४ ॥

पश्येति ॥ हे पार्वति, नवस्येन्दो रश्मिभिर्भिन्नं सान्द्रं सघनं तिमिरं यस्य नभस्तलं द्विरदभोगेन दूषितं मलिनं प्राक्पुनश्च कालान्तरेण सप्रसादं निर्मलं मानसं सर इव लक्ष्यते । त्वं पश्य । जलस्य नीलत्वादिति भावः ॥

रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥६५॥

रक्तभावमिति ॥ हे प्रिये, एष चन्द्रमा रक्तभावं रक्तिमानमपहाय मुक्त्वा परिशुद्धं विशदं मण्डलं यस्य तथोक्तो जातः । तथाहि । निर्मलप्रकृतिषु वस्तुषु कालदोषेण जाता विक्रिया विकारः स्थिर उदय उत्पत्तिर्यस्यास्तादृशी न भवति खलु । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि गुणदोषयोर्गतिः ॥६६॥

उन्नतेष्विति ॥ हे प्रिये, शशिनः प्रभा चन्द्रिकोन्नतेषु स्थलेषु स्थिता वर्तते । तथा निशातमः कर्तृ । निम्नेषु नीचेषु संश्रयो यस्य तथोक्तं वर्तते । तथाहि । गुणदोषयोर्गतिर्वेधसा विधिना । आत्मना नीचेनोच्चेन च सदृशी प्रकल्पिता रचिता हि नूनम् । नीचात्मा नीचस्थ एव भवति । उच्चात्मा उच्चस्थ इत्यर्थः ॥

चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥

चन्द्रेति ॥ गिरिर्मेखलासु नितम्बेषु ये तरवस्तेषु निद्रितान्सुप्तानमूञ्शिखण्डिनो मयूरान् चन्द्रस्य पादैर्जनिता प्रवृत्तिर्निर्गमनं येषां तैश्चन्द्रकान्तस्य ये जलबिन्दवस्तैः कृत्वाऽसमये बोधयति जागरयति । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति मेदिनी ॥

कल्पवृक्षशिखरेषु प्रति संप्रस्फुरद्भिरिव पश्य सुन्दरि ।
हारयष्टिरचनामिवांशुभिः कर्तुमागतकुतूहलः शशी ॥ ६८ ॥

१ भग्नसान्द्र; सामिभिन्न; संविभिन्न. २ संप्रसीदत्. ३ एव. ४ इह; एव. ५ इमान्. ६ अविकल्पसुन्दरि; इव शंभुसुन्दरि. ७ गणनाम्. ८ उद्यत.

कल्पेति ॥ हे सुन्दरि, संप्रति शशी चन्द्रः प्रस्फुरद्भिरंशुभिः कु यष्टिरचनां कर्तुमिवागतं कुतूहलं यस्य तथोक्तः सन् । कल्पवृक्षयुक्तेषु वर्तत इति शेषः। इव किम् । त्वं पश्य । यथा कश्चिन्नीलपट्टसूत्रेण मु विरलतया योजयति तथायं चन्द्रोऽपि वृक्षपत्रान्तरालगतस्वीयकिरणमु वृक्षपत्रच्छायरूपिणा नीलेन पट्टसूत्रेण च हारयष्टिं कर्तुमिवेहागत इति

उन्नतावनतभाव[1]वत्तया चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तह[2]स्तिनः ॥

उन्नतेति ॥ हे प्रिये, गिरेरुन्नतावनतभाववत्तया सतिमिरेयं च बहुविधाभिर्भक्तिभी रचनाभिरर्पिता मत्तहस्तिनो भूतिः संपदिव भाति मालंकारः ॥

एतदु[3]च्छ्वसितपीतमैन्दवं वोढु[4]मक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥

एतदिति ॥ उच्छ्वसितं यथा तथा पीतमैन्दवं चान्द्रं प्रभारसं वोढुमक्ष वैतत्कुमुदम् । मुक्तः षट्पदानां भ्रमराणां विरावः शब्दो येन तथो अञ्जसा झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । आ निबन्धनान्निरवशे नाद्भिद्यते । सकर्मकाणामपि कर्माविवक्षयाकर्मकत्वात्कर्मकर्तरि लट् । अ बहुलमाम्रादिरसं पिबन्भिन्नोदरो भवति तद्वत् ॥

पश्य कल्पतरुलम्बि शुद्धया ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति च[5]ण्डिके बलाद्व्यज्यते विपरिवृत्तमंशुकम् ॥

पश्येति ॥ हे चण्डिके, कल्पतरौ लम्बि लम्बायमानत्वेन वर्तमानं ज्योत्स्नया चन्द्रकान्त्या जनितो रूपस्य संशयः संदेहो यत्र । उभयोरपि त्वादिति भावः । एतादृशमंशुकं वस्त्रं मारुते चलति सति विपरिवृत्तं सद् ज्यते । व्यक्तत्वेन ज्ञायत इत्यर्थः । त्वं पश्य ॥

शक्यमङ्गुलिभिरु[6]त्थितैरधः शाखिनां पतितपुष्पपेश[7]लैः ।
पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवा[8]लकान् ॥ ७२

शक्यमिति ॥ हे प्रिये, अधः पतितपुष्पवत्पेशलैः सुन्दरैः । तथाङ्गुलि त्थितैरुत्थापितैरेभिः पुरोवर्तिभिः शाखिनां संबन्धिभिः पत्रैर्जर्जरिता ये प्रभाया लवा अंशास्तैस्तवालकानुत्कचयितुमुद्ग्रथितुं शक्यम् । शक्येन भूय त्यर्थः । काचित्तव सखी पुष्पप्रतिनिधित्वेन वृक्षाधःपतितजर्जरीभूतचन्द्र शकलैः केशानुद्ग्रथयत्विति भावः ॥

---

१ भागवत्तया. २ दन्तिनः. ३ उच्चसितपीतम्. ४ सोढुम्. ५ च चलम्; चण्डि केवलम्, ६ उद्धतैः. ७ कोमलैः. ८ अलकम्; अलकाः.

एष चारुमुखि[1] योग्यतारया[2] युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वरः ॥ ७३ ॥

एष इति ॥ हे चारुमुखि, एष शशी । वरः परिणेता नवदीक्षया नवपरिणी-
ात एव साध्वसाद्भयादुपगतः प्रकम्पो यस्यास्तया कन्ययेव । तरलबिम्बया
लमण्डलया योग्यतारया सदृशतारकया युज्यते युनक्ति । त्वं पश्य ॥

पाकभिन्नशरकाण्डगौरयोरुल्लसत्प्रकृतिजप्रसादयोः[3][4] ।
रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षि चन्द्रिका ॥७४॥

पाकेति ॥ हे प्रिये, चन्द्रबिम्बेन निहिता स्थापिता तवाक्षिण नेत्रे या
न्द्रिका सा । पाके भिन्नो यः शरकाण्डस्तृणविशेषस्तद्वद्गौरयोः । तथोल्लसन्प्रकृ-
जः स्वभावजः प्रसादः प्रसन्नता ययोस्तयोस्तव गण्डलेखयोरुपरि रोहतीव ।
रोहणं करोतीवेत्युत्प्रेक्षा ॥

लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रति स्वयम् ।
त्वामियं स्थितिमतीमुपागता[5] गन्धमादनवनाधिदेवता ॥ ७५ ॥

लोहितेति ॥ लोहिता रक्ता येऽर्कमणयस्तेषां भाजनं पात्रं तत्रार्पितं
ार्पितं कल्पवृक्षाणां मधु मकरन्दस्तद्बिभ्रतीयं गन्धमादनवनस्याधिदेवता
्थितिमतीं स्थिरां त्वामुद्दिश्य स्वयमुपागता । त्वं पश्य । तुभ्यं मदिरां दातुमा-
छतीत्यर्थः ॥

आर्द्रकेसरसुगन्धि ते मुखं मत्तरक्तनयनं[6] स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं[7] विलासिनि मदः[8] करिष्यति ७६

आर्द्रेति ॥ हे विलासिनि, अत्र लब्धा वसतिर्निवासो येन तथोक्तो मदः
कीदृशं गुणान्तरमन्यं गुणं करिष्यति । अपि तु नेत्यर्थः । यतस्ते तव मुखं
भावतः स्वभावेनैवार्द्रकेसरवत्सुगन्धि । तथा मत्ते रक्ते नयने यस्य तथोक्तं
स्ति । ये ये मदगुणास्ते ते मदात्प्रागेव वर्तन्ते । अतः किमनेन मदेन कर्तव्य-
ति भावः ॥

मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम्[9] ।
इत्युदारमभिधाय शंकरस्तामपाययत पानमम्बिकाम् ॥ ७७ ॥

मान्यभक्तिरिति ॥ हे प्रिये, अथवा मान्या भक्तिर्भावो यस्य तादृशः सखी-
नोऽनङ्गस्य कामस्य दीपनमिदं मधु सेव्यतामित्युदारमभिधाय शंकरस्तामम्बिकां
र्वतीं पानं मदिरामपाययत ॥

---

१ चन्द्रमुखि. २ पश्य तारया; योगतारया. ३ पाण्डु. ४ प्रतिकृतिप्रसन्नयोः;
ातिकृतिः प्रदीप्तयोः. ५ उपस्थिता; समागता. ६ प्रान्तरक्त; रक्तमेव; मत्तमेव.
कम्. ८ मधुः. ९ दीपकम्.

पार्वती तदु[1]पयोगसंभवां विक्रियामपि सतां मनोहराम् ।
अप्रतर्क्यविधियोगनिर्मि[2]ताम्र[3]तेव सहकारतां ययौ ॥

पार्वतीति ॥ पार्वती कर्त्री । तदुपयोगसंभवां मद्यपानजन्यां विक्रि… सतां मनोहराम् । आम्रताम्रत्वमप्रतर्क्यो दुर्ज्ञेयो यो विधियोगोऽनुष्ठानयो… निर्मितां सहकारतामतिसौरभत्वमिव ययौ । प्रापेत्यर्थः । 'आम्रश्चूतो रसा… सहकारोऽतिसौरभः' इत्यमरः । आम्रमेवानुष्ठानविशेषेण यथा सहकारं… तद्वद्विक्रियापि मनोहराभूदिति भावः ॥

त[4]त्क्षणं विप[5]रिवर्तितह्रियोर्नेष्य[6]तोः शयनमिद्धरागयोः ।
सा बभूव व[7]शवर्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥

तत्क्षणमिति । तत्क्षणं मदिरापानानन्तरसमय एव सा सुवदना… विपरिवर्तिता नष्टा ह्रीर्ययोरत एवेद्धः प्रवृद्धो रागो ययोरत एव शयनं नेष्य… सुरतार्थमिति भावः । शूलिनः शिवस्य मदस्य चेत्यनयोर्द्वयोर्वशवर्तिनी व… बभूव ॥

घूर्णमाननयनं [8]स्खलत्कथं स्वेदबिन्दु मदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ ८…

घूर्णेति ॥ घूर्णमाने नयने यत्र । तथा स्खलन्ती कथा वाग्यत्र । तथा… बिन्दवो यत्र । मदरूपिणा कारणेन स्मितं मन्दहासश्च यत्र । तदुमायाः… मुखमीश्वरः शिवस्तावत्प्रथमं चिरं चक्षुषा पपौ सादरं ददर्श । आननेन… प्रपावित्यर्थः ॥

तां विलम्बितपनीयमेखलामुद्वहञ्जघनभारदुर्वहाम् ।
ध्यान[9]संभृतविभूतिरीश्वरः प्राविशन्मणिशिलागृहं र[10]हः ॥ ८…

तामिति ॥ ध्यानेन संभृता संपादिता विभूतिरुपभोगसाधनसंप… स ईश्वरो विलम्बिनी तपनीयस्य सुवर्णस्य मेखला काञ्ची यस्यास्ताम्… जघनभारेण दुर्वहां दुःखेन वोढुं शक्याम् । वहतेः 'ईषद्दुःसुषु कृ… च्छ्रार्थेषु' इति खल् । तां पार्वतीमुद्वहन्सन् । रह एकान्ते मणिशिलानां… प्राविशत् ॥

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥ ८…

१ उपभोग. २ निर्मिता. ३ नम्रता. ४ तत्क्षणे. ५ विपरिवृत्तल…
६ वाञ्छतोः. ७ वशवर्तिका. ८ स्खलद्वचः; स्खलत्कचम्. ९ संभृतिविभूतिरी…
संभृतिविभूतिशोभितम्; संभृतिविभूतिगोचरम्. १० हरेः.

तत्रेति ॥ तत्र मणिशिलागृहं स हरो हंस इव धवल उत्तरच्छदः शयनोपरितनं वस्त्रं यस्य । तथा जाह्नवीपुलिनवच्चारु दर्शनं यस्य तच्छयनं पल्यङ्कम् । रोहिणीपतिश्चन्द्रः शारदं शरत्कालिकमभ्रं मेघमिव । प्रियासखः सन् । पार्वतीसहित इत्यर्थः । अध्यशेताशिश्रियत्– 'अधिशीङ् ।' इति कर्मत्वम् ॥

**क्लिष्टकेशमवलुप्तचन्दनं व्यत्ययार्पितनखं समत्सरम् ।**
**तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभून्न तृप्तये ॥ ८३ ॥**

क्लिष्टेति ॥ क्लिष्टा विकृष्टाः केशा यत्र । अवलुप्तं चन्दनं यत्र । व्यत्ययेनास्थानयोऽयत्वेनार्पिता नखा यत्र । तथा समत्सरं सप्रणयकलहम् । तथा छिदुरो भङ्गशीलो मेखलागुणः काञ्चीसूत्रं यत्र । एतादृशं तत्पार्वतीरतं तस्य शिवस्य तृप्तये नाभूत् । कामोत्सवस्योद्वेलत्वादिति भावः ॥

**केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।**
**तेन तत्प्रतिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥**

केवलमिति ॥ ज्योतिषां नक्षत्राणां पङ्क्तिष्ववनतासु सतीषु । रजन्यां प्रभातकल्पायां सत्यामित्यर्थः । केवलं प्रियतमायां दयालुना । न तु क्षीणशक्तिनेत्यर्थः । तेन शिवेन तया पार्वत्या प्रतिगृहीतमालिङ्गितं वक्षो यस्य तथोक्तेन सता नेत्रमीलनस्य । निद्राया इत्यभिप्रेतोऽर्थः । कुतूहलं कृतम् । निद्रामित्यर्थः ॥

**स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।**
**मूर्च्छनापरिगृहीतकैशिकैः किंनरैरुषसि गीतमङ्गलः ॥ ८५ ॥**

स इति ॥ बुधानां बुधकर्तृके स्तव उचितः स शिव उषसि प्रभाते मूर्च्छनयोच्चारणस्वरारोहावरोहेण । तदनुसारेणेत्यर्थः । परिगृहीताः कैशिका वीणाविशेषा यैस्तैः किंनरैः किंपुरुषैर्गीतं मङ्गलं यस्य तथोक्तः सन् । शातकुम्भस्य सुवर्णस्य यानि कमलानि तेषामाकराः समूहास्तैः समं सह व्यबुध्यत । जजागारेत्यर्थः । 'खनिः स्त्रियामाकरः स्यात्' इति कोशप्रामाण्यादाकरशब्दस्य खनिवाचकत्वे सत्यपि परिणतार्थपक्षपातेन समूहवाचकत्वमपि सोढव्यम् । प्रतीयमानार्थे बाधस्य वक्तुमशक्यत्वात् ॥

**तौ क्षणं शिथिलितोपगूहनौ दंपती चलितमानसोर्मयः ।**
**पद्मभेदपिशुनाः सिषेविरे गन्धमादनवनान्तमारुताः ॥ ८६ ॥**

ताविति ॥ क्षणं शिथिलितं विरामगोचरीकृतमुपगूहनमाश्लेषो याभ्यां तौ दंपती स्त्रीपुंसौ गौरीहरौ कर्मभूतौ । चलिताश्चालिता मानसस्य सरस ऊर्मय-

---

१ क्लिष्टचन्द्रमदयैः कचग्रहैः. २ व्युत्पथार्पित; उत्पथार्पित. ३ अतृप्तये. ४ परिगृहीत, ५ तया निशाक्षये. ६ वंशिकैः. ७ समुपगीत. ८ प्रशिथिला. ९ रचित. १० निपुणाः.

स्तरंगा यैः । एतेन शैत्योक्तिः । तथा पद्मानां भेदस्य प्रफुल्लतायाः सूचकाः । अनेन सौगन्ध्योक्तिः । गन्धमादनवनान्तस्य मारुताः सिषेविरे । सेवितवन्त इत्यर्थः ॥

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥ ८

ऊर्विति ॥ ऊरुमूले या नखमार्गाणां नखक्षतानां राजयः पङ्क्तयः कर्त्रीभिः हृते स्वविलोकनवशीकृते विलोचने यस्य तथोक्तो हरस्तत्क्षणं तसमये प्रकर्षेण शिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमां मवारयद्बन्धनं मा कुर्विति निवारयांचक्रे । नखक्षतविलोकनवशंवद भावः ॥

स प्रजागरकषायलोचनं गाढदन्तपरिताडिताधरम् ।
आकुलालकमरंस्त रागवान्प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८

स इति ॥ रागवान्स हरः प्रजागरेण रात्रिजागरेण कषाये म्लाने लो यत्र । तथा गाढं यथा तथा दन्तैः परिताडितोऽधरो यत्र । तथाकुला अलकाः केशा यत्र । तथा भिन्नं तिलकं यत्र । एतादृशं प्रियाया मुखं प्रेक्ष्य प्रससाद । आत्मनः कर्तृत्वादिति भावः ॥

तेन भिन्नविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम्

तेनेति ॥ निशात्यये प्रभाते निर्मलेऽपि प्रकटेऽपि सति तेन हरेण भि एव विषम उत्तरच्छद उपरितनं वस्त्रं यत्र । तथा मध्ये पिण्डिता एकत्री विसूत्रा सूत्ररहिता मेखला काञ्ची यत्र । तथा चरणरागेण यावकेन ला रक्तीकृतं च शयनं नोज्झितं न त्यक्तम् । सुखार्णवमग्नत्वादिति भावः ॥

स प्रियामुखरसं दिवानिशं हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदनात् ॥ ९०

स इति ॥ हर्षवृद्धेर्जननमुत्पादकं प्रियामुखरसं दिवानिशं सिषेविषुः तुमिच्छति तथोक्तः स शिवो विजयया पार्वतीसख्या यन्निवेदनं स्वागम तस्मात् । तद्द्वारेत्यर्थः । दर्शने प्रणयिनामभिलाषवतामप्यदृश्यतामदर्शन माजगाम प्राप । सर्वं त्यक्त्वा तल्लय एव जात इति भावः ॥

समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां साग्रमेका निशेव ।

१ पङ्क्तिभिः. २ संचयम्. ३ पदताडित. ४ अपास्तचित्रकम्. ५ भङ्गि. ६ प्रि सुखरसम्. ७ निवेदितः. ८ सार्धम्.

न तु सुरत[2]सुखेभ्यश्छिन्नतृष्णो[1] बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलौ[3]घैः ॥ ९१ ॥

समदिवसेति ॥ तत्र गन्धमादनगिरौ समाः प्रत्येकं समसंख्याका ये वसा दिनानि तेषां निशीथमर्धरात्रम् । तमभिव्याप्येत्यर्थः । सङ्गिनः वतः । न तु विषमदिन इत्यर्थः । शंभोः शिवसंबन्धि साग्रं किंचित्साधि- संख्यमृतूनां शतमेका निशेव तत्तुल्यत्वेनागमद्व्यतीतम् । तथापि सुरतसुखे- स्तु छिन्नतृष्णस्तृप्तो न बभूव । ततो न विररामेत्यर्थः । ज्वलन इव यथा द्रान्तर्गतो ज्वलनो वाडवानलस्तज्जलौघैस्तृप्तो न भवति प्रत्यहं ज्वालय- व तद्वत् । मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति क्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमा-
सुरतवर्णनं नामाष्टमः सर्गः ॥

---

## नवमः सर्गः ।

तथाविधेऽनङ्गरसप्रसङ्गे मुखारविन्दे मधुपः प्रियायाः ।
संभोगवेश्म प्रविशन्तमन्तर्ददर्श [4]पारावतमेकमीशः ॥ १ ॥

तथाविध इति ॥ प्रियायाः पार्वत्याः संबन्धिनि मुखारविन्दे वदनकमले मधुपो भ्रमरभूत ईशः शिवस्तथाविधे पूर्वोक्तप्रकारेऽनङ्गरसप्रसङ्गे कामरसावसरे संभोगस्य वेश्म गृहमन्तः प्रविशन्तमेकं पारावतं कपोतं ददर्श दृष्टवान् । सर्गे- ऽस्मिन्वृत्तमुपजातिः ॥

सुकान्तकान्तामणितानुकारं कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं मुहुर्मुहुर्न्य[5]ञ्चितचारुपुच्छम् ॥ २ ॥

सुकान्तेति ॥ कथंभूतं पारावतम् । सुकान्तमतिमनोहरं यत्कान्तामणितं रमणीरतिकूजितम् । 'मणितं रतिकूजितम्' इत्यमरः । तस्यानुकारोऽनुकरणं यत्र यस्मिन्कर्मणि तद्यथा तथा कूजन्तं शब्दायमानम् । तथा आघूर्णिते रक्तनेत्रे येन तथोक्तम् । तथा प्रस्फारितो विस्तारित उन्नम्र उच्चैस्तथा विनम्रः कण्ठो यस्य तम् । तथा मुहुर्मुहुर्वारंवारं न्यञ्चितः संकुचितश्चारुः पुच्छः पश्चाद्भागो येन तथोक्त- मित्यर्थः । 'पुच्छः पश्चात्प्रदेशे स्यात्' इति विश्वः ॥

---

१ च; स. २ सुखेषु. ३ तज्जलेभ्यः; तज्जलेषु. ४ पारापतम्. ५ नर्तित.

**विशृङ्खलं पक्षतियुग्ममीषद्दधानमानन्दगतिं[1] मदेन ।**
**शुभ्रांशुवर्णं जटिलाग्रपादमितस्ततो मण्डलकैश्चरन्तम् ॥ ३**

विशृङ्खलमिति ॥ पुनः कथंभूतम् । विशृङ्खलं विगतशृङ्खलाकम् । विशेषणेन कदाचित्कस्यापि बन्धनाभावस्य द्योतनात्स्वेच्छाविहारित्वं ध्व 'शृङ्खला पुंस्कटीवस्त्रबन्धेऽपि निगडेऽपि च' इति विश्वः । पक्षत्योः पक्ष युग्मं द्वयम् । 'पक्षात्तिः' इति तिप्रत्ययः । तथेषन्मदेन हेतुनानन्दगतिं च नम् । तथा शुभ्रांशोश्चन्द्रस्य वर्ण इव वर्णो यस्य तम् । 'विधुः सुधांशुः शु इत्यमरः । तथा जटिलौ जटायुक्तावग्रपादौ यस्य तम् । 'जटिलस्तु जटा इति विश्वः । तथा मण्डलकैर्मण्डलाकारगतिविशेषैरितस्ततश्चरन्तं भ्रममाण कपोतं ददर्शेति संबन्धः । 'मण्डलके' इति पाठे सुरतमण्डप इति व्याख्ये त्रिभिरेतद्विशेषकम् ॥

**रतिद्वितीयेन मनोभवेन ह्रदात्सुधायाः प्रविगाह्यमानात् ।**
**तं वीक्ष्य फेनस्य चयं नवोत्थमिवाभ्यनन्दत्क्षणमिन्दुमौलि**

रतीति ॥ रत्या सपत्न्या द्वितीयेन । रतिसहायेनेत्यर्थः । मनोभवेन का प्रविगाह्यमानादवलोड्यमानात्सुधाया ह्रदान्नवमुत्थमुत्पन्नं फेनस्य चयमिव तं कपोतं वीक्ष्येन्दुमौलिः शिवः क्षणमभ्यनन्ददस्तौषीत् । कपोतरूपे क धवलिमरूपधर्मेण गम्यमानेन फेनचयरूपवस्तूत्प्रेक्षालंकारः ॥

**तस्याकृतिं[2] कामपि वीक्ष्य दिव्यामन्तर्भवश्छद्मविहंगमाग्निम् ।**
**विचिन्तयन्संविविदे स देवो भ्रूभङ्गभीमश्च रुषा बभूव ॥**

तस्येति ॥ अन्तर्भवतीत्यन्तर्भवः । सर्वान्तर्व्यापीत्यर्थः । स देवो हरः दि भव्यां कामपि लोकोत्तरां तस्य पारावतस्याकृतिं वीक्ष्य छद्मना कैतवेन कपोतस्वरूपधारिणमग्निं विचिन्तयन्वितर्कयन्संविविदे विजज्ञे । निश्चयात्मक ग्निरेवायमिति बुबुध इत्यर्थः । 'संमो गम्यृच्छि-' इत्यादिनात्मनेपदम् । भ्रुवोर्भङ्गेन भीमो भयंकरश्च बभूव । असामयिकागमनकारित्वादिति भावः ।

**स्वरूपमास्थाय ततो हुताशस्त्रस[3]न्वलत्[4]कम्प[5]कृताञ्जलिः सन् ।**
**प्रवेपमानो नितरां[6] स्मरारिमिदं वचो व्यक्तमथाध्युवाच[7] ॥**

स्वरूपमिति ॥ ततोऽनन्तरं हुताशोऽग्निस्त्रसन्बिभ्यत्सन् । 'वा भ्राश-' इत्यादिना वैकल्पिकत्वान्न श्यन् । स्वरूपमाग्नेयं रूपमास्थायाश्रित्य । अथ स्व पाश्रयणानन्तरम् । वलन्नुद्भवन्कम्पो यथा तथा कृतो बद्धोऽञ्जलिर्येन । नितरां प्रवेपमानः कम्पमानश्च सन् । स्मरारिं शिवं व्यक्तं स्फुटमिदं वक्ष्य वचोऽध्युवाचोक्तवान् । 'दुह्याच्-' इत्यादिना ब्रुवो द्विकर्मकत्वम् ॥

१ आनन्दगतम्; आमन्दगतिम्. २ तदाकृतिम्. ३ त्रास, श्वास. ४ स्व
५ कम्प्र; कण्ठः. ६ अतितराम्. ७ अभ्युवाच.

असि त्वमेको जगतामधीशः स्वर्गौकसां त्वं विपदो निहंसि ।
[1]ततः सुरेन्द्रप्रमुखाः प्रभो त्वामुपासते दैत्यवरैर्विधूताः ॥ ७ ॥

असीति ॥ हे प्रभो, त्वमेको जगतामधीशोऽसि । त्वत्सदृशो जगतां यिता न कोऽप्यन्योऽस्तीत्यर्थः । अत एव स्वर्गौकसामिन्द्रादीनां विपदस्त्वं सि दूरीकरोषि । ततः कारणात्सुरेन्द्रप्रमुखा देवास्त्वामुपासते । यतो वैरैर्विधूतास्तिरस्कृताः ॥

त्वया प्रियाप्रेमवशंवदेन शतं व्यतीये सुरता[2]दृतूनाम् ।
[3]रहःस्थितेन [4]त्वदवीक्षणार्तो दैन्यं परं प्राप सुरैः सुरेन्द्रः ॥ ८ ॥

त्वयेति ॥ हे प्रभो, प्रियायाः पार्वत्याः प्रेम्णा हेतुना वशंवदेन वशीभूतेन । यवशे वदः खच्' इति खच् । 'अरुर्द्विषत्–' इत्यादिना मुम् । तेन त्वया स्थितेन सता सुरताद्धेतोर्ऋतूनां शतं व्यतीतम् । इणः कर्मणि लिट् । अथ सुरेन्द्रस्त्वदवीक्षणेन तवानवलोकनेनार्तः पीडितः सन्सुरैः सह परमत्यन्तं प्राप । त्वद्विरहासहत्वादिति भावः ॥

त्वदीयसेवावसरप्रतीक्षैरभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमहं विहंगरूपेण विद्वन्समयोचितेन ॥ ९ ॥

त्वदीयेति ॥ हे विद्वन्, त्वदीया त्वत्कर्मिका या सेवा तस्या अवसरस्य क्षा येषां तैः शक्रमुखैरिन्द्रादिभिः सुरैरभ्यर्थितोऽहं त्वामन्वेष्टुं मृगयितुं योचितेन विहंगरूपेण पारावतरूपेण । 'जिह्रेति यन्नैव कुतोऽपि तिर्यक्कश्चि-रक्षस्त्रपते न तेन' इति ( नैषधीयचरिते ३ । ४३ ) श्रीहर्षोक्तेरिति भावः । गतोऽस्मि ॥

इति प्रभो चेतसि संप्रधार्य [5]तन्नोऽपराधं भगवन्क्षमस्व ।
पराभिभूता वद किं क्षमन्ते कालातिपातं शरणार्थिनोऽमी ॥१०॥

इतीति ॥ हे प्रभो हे भगवन्, तत्तस्मात्करणात् । इति चेतसि संप्रधार्य विचार्य नोऽस्माकमपराधं क्षमस्व । असमय इन्द्रप्रेरितस्य तवापराधः कथं डव्य इति चेत्तत्राह—परेति । परैरभिभूता पराभिभूता अत एव रणार्थिनो रक्षितारं याचमानाः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अमी न्द्रादयः कालातिपातं कालविलम्बं किं कथं क्षमन्ते । आर्तैः कालविलम्बो न ह्यत इति भावः । 'प्रतीक्षते जातु न कालमार्तः' इति न्यायात् । वद । थयेत्यर्थः ॥

---

१ अतः. २ अत्रभवन्. ३ बहिःस्थितोऽपि. ४ त्वदनीक्षणेन. ५ मम.

प्रभो प्रसीदाशु सृजात्मपुत्रं यं प्राप्य सेनान्यमसौ सुरेन्द्रः।
स्वर्लोकलक्ष्मीप्रभुतामवाप्य जगत्त्रयं पाति तव प्रसादात्॥

प्रभो इति ॥ हे प्रभो, प्रसीद प्रसन्नो भव । आत्मपुत्रमाशु सृज । पुत्रं सेनान्यं प्राप्यासौ सुरेन्द्रस्तव प्रसादात्स्वर्लोकलक्ष्म्याः प्रभुतामवा[प्य] [जग]त्त्रयं पाति रक्षिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥

स शंकरस्तामिति जातवेदोविज्ञापनामर्थवतीं निशम्य।
अभूत्प्रसन्नः परितोषयन्ति गीर्भिर्गिरीशा रुचिराभिरीशम्॥

स इति ॥ स शंकर इतीत्येवंभूतामर्थवतीं सार्थकाम् । योग्यामिति [वा]। तां जातवेदसोऽग्नेर्विज्ञापनां प्रार्थनां निशम्य श्रुत्वा प्रसन्नोऽभूत् । [त]... गिरीशा वाग्मिनः पुरुषा रुचिराभिर्गीर्भिरीशं स्वामिनं परितोषयन्ति । ... यन्तीत्यर्थः ॥

प्रसन्नचेता मदनान्तकारः स तारकारेर्जयिनो भवाय।
शक्रस्य सेनाधिपतेर्जयाय व्यचिन्तयच्चेतसि भावि किंचित्॥

प्रसन्नेति ॥ प्रसन्नचेताः स मदनान्तकारो हरो जयिनो जयशील[स्य] जयाय शत्रुपराजयार्थं शक्रस्य सेनाधिपतेस्तारकारेस्तारकशत्रोः अपत्यसे[नानी]... भवाय जन्मने । तत्कर्तुमित्यर्थः । भावि भविष्यत्किंचिच्चेतसि व्यचिन्त[यत्]... विचचारेत्यर्थः ॥

युगान्तकालाग्निमिवाविषह्यं परिच्युतं मन्मथरङ्गभङ्गात्।
रतान्तरेतः स हिरण्यरेतस्यथोर्ध्वरेतास्तदमोघमाधात्॥

युगान्तेति ॥ अथ स शिवः । युगान्तकालस्याग्निमिवाविषह्यं सोढु[मशक्यं] मन्मथरङ्गस्य कामक्रीडाया भङ्गाद्धेतोः परिच्युतं भ्रष्टं तथाऽमोघं सफलं त[त्] रतान्तस्य सुरतान्तस्य रेतो वीर्यं हिरण्यरेतसि वह्नावाधान्निदधे । यत[ऊर्ध्व]रेताः । ऊर्ध्वगामिवीर्य इत्यर्थः ॥

अथोष्णबाष्पानिलदूषितान्तं विशुद्धमादर्शमिवात्मदेहम्।
बभार भूम्ना सहसा पुरारिरेतःपरिक्षेपकुवर्णमग्निः॥ १५...

अथेति ॥ अथानन्तरमग्निर्विशुद्धमात्मदेहमुष्णबाष्पानिलेन मुखनिः[श्वासेन] दूषितं म्लानीकृतमन्तर्मध्यं यस्य तमादर्शमिव सहसा भूम्ना बाहुल्येन [पुरारेः] शिवसंबन्धिनो रेतसः परिक्षेपस्तेन कुवर्णं कुत्सितवर्णं बभार धृतवान् ॥

---

१ अथ. २ सृजाशु पुत्रम्; सृजस्व पुत्रम्. ३ स्वर्गैकलक्ष्मी. ४ ... ५ मदनान्तकारी. ६ अथोष्मबाष्पानलदूषितान्तर्; अत्युष्णबाष्पानिलदूषि[तान्तं]. ७ परिक्षिप्तकुवर्णम्; परिक्षेपविवर्णम्.

त्वं सर्वभक्षो भव भीमकर्मा कुष्ठाभिभूतोऽनल धूमगर्भः ।
इत्थं शशापाद्रिसुता हुताशं रुष्टा रतानन्दसुखस्य भङ्गात् ॥ १६ ॥

त्वमिति ॥ रतानन्दः सुरतानन्दस्तत्र यत्सुखं तस्य भङ्गादन्तरायाद्धेतो द्रिसुता पार्वती । हे अनल, त्वं सर्वं मेध्यममेध्यं वा भक्षति तथोक्तः । भीमं भयानकं कर्म यस्य । तथा कुष्ठेनाभिभूतः पराभूतः । तथा धूमो गर्भे ये यस्य तथोक्तश्च भव । इत्थं हुताशमग्निं शशाप । शपति स्मेत्यर्थः । अत्र प्यमानत्वाभावात् 'श्लाघह्नुङ्स्था-' इति न संप्रदानत्वम् ॥

दक्षस्य शापेन शशी क्षयीव प्लुष्टो हिमेनेव सरोजकोशः ।
वहन्विरूपं वपुरुग्ररेतश्चयेन वह्निः किल निर्जगाम ॥ १७ ॥

दक्षस्येति ॥ वह्निरग्निर्दक्षस्य शापेन हेतुना क्षयी क्षयरोगवाञ्शशी न्द्र इव । तथा हिमेन शीतेन प्लुष्टो दग्धः । 'प्लुष दाहे' कर्मणि निष्ठा । रोजकोश इव । वपुः स्वशरीरमुग्रस्य शिवस्य । 'उग्रः कपर्दी श्रीकण्ठः' मरः । रेतश्चयेन वीर्यसंघातेन । 'शुक्रं तेजोरेतसी च' इत्यमरः । हेतु- तेन विरूपं भ्रष्टशोभमेतादृशं वहन्निर्जगाम संभोगवेश्मतो निःसृतवान् । लेति प्रसिद्धे ॥

स पावकालोकरुषा विलक्षां स्मरत्रपास्मेरविनम्रवक्त्राम् ।
विनोदयामास गिरीन्द्रपुत्रीं शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥ १८ ॥

स इति ॥ पावकस्य वह्नेरालोकेन या रुट् क्रोधस्तया हेतुना विलक्षां विरूपो कृतिमापन्नो लक्षो लक्षणं चिह्नं शरीरशोभा यस्यास्ताम् । तथा स्मरत्रपाभ्यां मलज्जाभ्यां स्मेरं सस्मितं विनम्रं नतं च वक्त्रं यस्यास्तथोक्तां गिरीन्द्रपुत्रीं र्वतीं स हरः शृङ्गारगर्भैरत एव मधुरैर्वचोभिर्विनोदयामास । प्रसादित- नित्यर्थः ॥

हरो विकीर्णं घनघर्मतोयैर्नेत्राञ्जनाङ्कं हृदयप्रियायाः ।
द्वितीयकौपीनचलाञ्चलेनाहरन्मुखेन्दोरकलङ्किनोऽस्याः ॥ १९ ॥

हर इति ॥ हरो हृदयस्य प्रियाया अस्याः पार्वत्या अकलङ्किनो मुखेन्दोः संबन्धिनं तथा घनानि यानि घर्मतोयानि प्रस्वेदजलानि तैर्विकीर्णं व्याप्तं नेत्रयोरञ्जनमेवाङ्कः कलङ्कस्तं द्वितीयं यत्कौपीनं योगिनः स्कन्धलम्बि वस्त्रम् । कौपीनं स्यादधोवस्त्रं योगिनः स्कन्धलम्बि च' इति मेदिनी । तस्य चलं यदञ्चलं प्रान्तस्तेनाहरद्धृतवान् । अकलङ्कस्य कलङ्कानौचित्यादिति भावः ॥

मन्देन खिन्नाङ्गुलिना करेण कम्प्रेण तस्या वदनारविन्दात्
परामृशन्घर्मजलं जहार हरः सहेलं व्यजनानिलेन ॥ २० ॥

१ तथा. २ क्षयाय. ३ प्लुष्टः. ४ आलोकनतः. ५ नगेन्द्र. ६ सदयं प्रियायाः. ७ हरन्. ८ अपि. ९ खिन्नाङ्गुलिना. १० कम्पेन; प्रेम्णा च.

मन्देनेति ॥ हरः शिवः । मन्देन लघुप्रचारेण । तथा खिन्ना
योगेणोदासीना अङ्गुलयो यस्य तेन । तथा कम्प्रेण कम्पशीलेन । 'नमिकम्पि-
जसकम्-' इति रः । करेण कृत्वा तस्याः पार्वत्या वदनारविन्दाद्घर्मस
रूपं वा जलं परामृशन्विश्लेषयन्सहेलं सक्रीडं यथा तथा व्यजनस
कृत्वा जहार ॥

रतिश्लथं तत्कबरीकलापमंसावसक्तं विगलत्प्रसूनम् ।
स पारिजातोद्भवपुष्पमय्या स्रजा बबन्धामृतमूर्तिमौलिः ॥

रतिश्लथमिति ॥ अमृतमूर्तिश्चन्द्रो मौलौ यस्य स हरो देवः
श्लथं शिथिलबन्धनमत एवांसयोः स्कन्धयोरवसक्तं लग्नमत एव विगल
पातुकानि प्रसूनानि यस्य तं तस्याः कबरीकलापं कचभारं पारिजा
पुष्पमय्या पारिजातोद्भवानि कल्पवृक्षजानि यानि पुष्पाणि तत्प्रचुरया
मालया बबन्ध । 'तत्प्रकृतवचने-' इति प्राचुर्ये मयट् । ततः '
इति ङीप् ॥

कपोलपाल्यां मृगनाभिचित्रपत्रावलीमिन्दुमुखः सुमुख्याः ।
स्मरस्य सिद्धस्य जगद्विमोहमन्त्राक्षरश्रेणिमिवोल्लिलेख ॥ २

कपोलपाल्यामिति ॥ इन्दुमुखो हरः सुमुख्याः पार्वत्याः संबन्धि
कपोलपाल्यां मृगनाभ्याः कस्तूर्या या चित्रा पत्रावली पत्ररचना तां
स्मरस्य कामस्य जगन्ति विमुह्यन्ति यैस्तेषां मन्त्राणां यान्यक्षराणि व
श्रेणिं पङ्क्तिमिवोल्लिलेख लिखितवान् । अत्र पत्ररचनारूपे वस्तुन्यक्षरश्रेणित्व
द्वस्तूत्प्रेक्षालंकारः ॥

रथस्य कर्णावभि[1] तन्मुखस्य ताटङ्कचक्रद्वितयं न्यधात्सः[2] ।
जगज्जिगीषुर्विषमेषुरेष ध्रुवं यमारोहति पुष्पचापः ॥ २३ ॥

रथस्येति ॥ स हरः । कर्णावभि कर्णसंमुखे तन्मुखस्य पार्वतीमुखस्य
रथस्य संबन्धि ताटङ्करूपं चक्रद्वितयं चक्रद्वयं न्यधात् । यतो विषमे
पुष्पचापः कामो जगज्जिगीषुस्त्रिभुवनविजयेच्छुः सन् यमारोहति । ध्रुवं नि
तम् । मुखरूपिणं रथमारुह्य जगन्ति विजेतुमिच्छति काम इति भावः ॥

तस्याः स कण्ठे पिहितस्तनाग्रां[3] न्यधत्त मुक्ताफलहारवल्लीम् ।
यॉ प्राप मेरुद्वितयस्य मूर्ध्नि स्थितस्य गाङ्गौघयुगस्य लक्ष्मीम् ॥ २

तस्या इति ॥ स हरस्तस्याः कण्ठे । पिहिते स्वप्रसारेणावृते स्तनाग्रे य
यया तथोक्तां मुक्ताफलहार एव वल्ली तां न्यधत्त निदधे । या मुक्ताफलहार

१ कर्णावलितं मुखस्य. २ व्यधात्. ३ अभिघनस्तनं याम्; अभिघनस्तनाग्रम्. ४

द्वितयस्य मूर्ध्नि स्थितस्य गङ्गाया ओघयोः प्रवाहयोर्युगस्य लक्ष्मीं शोभां प । तद्वच्छुशुभ इत्यर्थः । अभूतोपमा ॥

नखव्रणश्रेणि[1]वरे बबन्ध नितम्बबिम्बे रशनाकलापम् ।
चल[2]स्वचेतोमृगबन्धनाय मनोभुवः पाशमिव स्मरारिः ॥ २५ ॥

नखेति ॥ स्मरारिर्हरः नखव्रणश्रेणिभिरात्मप्रयुक्ताभिर्वरे मनोहरे तस्या तम्बबिम्बे रशनाकलापम् । चलं स्वं चेत एव मृगस्तस्य बन्धनाय मनोभुवः न्धिनं पाशमिव बबन्ध । मनोभूरस्यात्मनश्चेतोमृगस्य रशनाकलापरूपजालेन धनं करिष्यत्यतो हरः स्वयमेव तत्र तं निदधावित्यर्थः । नहि कामलुब्ध त्मनीनं गणयतीति भावः ॥

भालेक्षणाग्नौ स्वयमञ्जनं स भङ्क्त्वा[3] दृशोः साधु निवेश्य तस्याः ।
नवोत्पलाक्ष्याः पुलकोपगूढे[4] कण्ठे विनीले[5]ऽङ्गुलिमुज्जघर्ष ॥ २६ ॥

भालेक्षणेति ॥ स हरः भाले यदीक्षणं नेत्रं तदेवाग्निः । दीपकरूप र्थः । तत्राञ्जनं स्वयं भङ्क्त्वा पातयित्वा । अथ च नवोत्पलाक्ष्यास्तस्याः र्वत्या दृशोः साधु निवेश्य सम्यगञ्जयित्वा । अथ च पुलकै रोमाञ्चैरुपगूढे से विनीले श्यामले कण्ठे । स्वीय इति शेषः । अङ्गुलिमुज्जघर्ष घृष्टवान् । न्योऽपि दीपकोपर्यङ्गुल्यैव कज्जलं पातयित्वा स्वस्त्रीनेत्रयोर्निवेश्य कुत्रचि- ङ्गुलिमुद्घर्षति तद्वत् । अङ्गुलिलग्नकज्जलनिवारणार्थमिति भावः । स्वभावो- रलंकारः ॥

अलक्तकं पादसरोरुहाग्रे सरोरुहाक्ष्याः किल संनिवेश्य ।
स्वमौलिगङ्गासलिलेन हस्तारुणत्वमक्षालयदिन्दु[6]चूडः ॥ २७ ॥

अलक्तकमिति ॥ इन्दुचूडो हरः सरोरुहाक्ष्याः पार्वत्याः पादसरोरुहाग्रेऽल- कं संनिवेश्यानुलिप्य । करेणेति शेषः । स्वस्य मौलौ यद्गङ्गासलिलं तेन कृत्वा तस्यारुणत्वमक्षालयन्ममार्ज ॥

भस्मानुलिप्ते वपुषि स्वकीये सहेलमादर्शतलं विमृज्य ।
नेपथ्यलक्ष्म्याः[7] परिभावनार्थमदर्शयज्जीवितवल्लभां सः ॥ २८ ॥

भस्मेति ॥ स हरः । आदर्शतलं भस्मनानुलिप्ते स्वकीये वपुषि विमृज्य शुद्धं त्वा नेपथ्यानामाकल्पवेषाणां लक्ष्म्याः शोभायाः परिभावनार्थमवलोकनार्थं हेलं यथा तथा जीवितवल्लभां प्रियामदर्शयत् ॥

प्रियेण दत्ते मणिदर्पणे सा[8] संभोग[9]चिह्नं स्ववपुर्विभाव्य ।
त्रपावती तत्र घनानुरागं रोमाञ्चदम्भेन बहिर्बभार ॥ २९ ॥

१ श्रेणिकरे. २ चलत्. ३ न्यक्त्वा. ४ उपगूढः. ५ विनीलाङ्गुलिम्. ६ इन्दुमौलिः. ७ लक्ष्मी. ८ च. ९ संयोगचिह्नम्.

प्रियेणेति ॥ प्रियेण हरेण दत्ते मणीनां दर्पण आदर्शे संभोगस्य चि नखक्षतादीनि यत्र तथोक्तं स्वं वपुर्विभाव्यावलोक्य । भावनात्र विलो रिणता ज्ञेया । त्रपावती सलज्जा । एतानि चिह्नानि विलोक्यान्यः किं ष्यतीति विचारजनितया लज्जयान्धेत्यर्थः । सा पार्वती तत्र हरे अ रागं प्रेम रोमाञ्चानां दम्भेन कैतवेन बहिर्बहिःस्थितत्ववैशिष्ट्यपूर्वकं धृतवती । अन्तरस्था योऽनुरागोऽभूत्स एव बहौ रोमाञ्चत्वेन परिणत भावः ॥

नेपथ्यलक्ष्मीं दयितोपक्लृप्तां सस्मेरमादर्शतले विलोक्य ।
अमंस्त सौभाग्यवतीषु धुर्यामात्मानमुद्भूतविलक्षभावा[1] ॥

नेपथ्येति ॥ सा पार्वती । आदर्शतले दयितेन हरेणोपक्लृप्तां नेपथ्यलक्ष्मीमाभूषणमण्डनं सस्मेरं सस्मितम् । अत्र स्मितस्यानुरागव्यञ्जक यथा तथा विलोक्योद्भूतस्त्यक्तो विलक्षभावः पूर्वसंजातवैलक्ष्यं यया । प्रसन्न तथोक्ता सती । आत्मानं सौभाग्यवतीषु सतीषु मध्ये धुर्यामग्रगण्यां मेने । प्रियकृतनेपथ्यलक्ष्म्या अन्यदुर्लभत्वादिति भावः ॥

अन्तः प्रविश्यावसरेऽथ तत्र स्निग्धे वयस्ये विजया जया च
सुसंपदोपाचरतां[2] कलानामङ्के[3] स्थितां तां शशिखण्डमौलेः ॥

अन्तरिति ॥ अथानन्तरं तत्रावसरे समये विजया जया चेत्युभे सार्द्रचित्ते वयस्ये सख्यौ । 'आलिः सखी वयस्या च' इत्यमरः । अन्तः प्र तत्र शशिनः खण्डं मौलौ यस्य तथोक्तस्य हरस्य संबन्धिन्यङ्के स्थितां तां प कलानां भूषणकरणचातुरीविशेषाणां सुसंपदा शोभनया संपदा । शोभये उपाचरताम् । अलंचक्रतुरित्यर्थः । उपाचरतामिति लङः प्रथमपु द्विवचनम् ॥

व्यधुर्बहिर्मङ्गलगानमुच्चैर्वैतालिकाश्चित्रचरित्रचारु[4] ।
जगुश्च गन्धर्वगणाः सशङ्खस्वनं[5] प्रमोदाय पिनाकपाणेः ॥

व्यधुरिति ॥ बहिःप्रदेशे वैतालिका बन्दिनश्चित्रेण चरित्रेण चारु म मङ्गलरूपं गानम् । गीतमित्यर्थः । उच्चैरुच्चस्वरेण व्यधुश्चक्रुः । तथा गन्धर्व पिनाकपाणेर्हरस्य प्रमोदायानन्दाय । 'प्रमोदामोदसंमदाः' इत्यमरः । सशङ्ख पाञ्चजन्यशब्दसहितं यथा तथा जगुः । गायन्ति स्मेत्यर्थः ॥

ततः स्वसेवावसरे सुराणां गणांस्तदालोकनतत्पराणाम् ।
द्वारि प्रविश्य प्रणतोऽथ नन्दी निवेदयामास कृताञ्जलिः सन्

१ विलक्षतां सा; विलक्षभावम्. २ उमां तदोपाचरतां कलाभाम्; स्वस पाचरतां कलानाम्. ३ दूरे स्थिताम्, अङ्कस्थिताम्. ४ चित्रितचारु ५ ध्वनिम्.

तत इति ॥ ततोऽनन्तरं स्वस्य स्वकर्तृकायाः सेवाया अवसरे समये य हरस्य यदालोकनं तत्र तत्पराणामासक्तानां सुराणां गणान्कर्मभूतान् । दी कर्ता । प्रणतो नम्रीभूतः सन् द्वारि प्रविश्य । न त्वन्तरेवेत्यर्थः । ताञ्जलिः सन् । निवेदयामास । देवा भवदवलोकनसमुत्सुकाः सन्तीति हरं धयामासेत्यर्थः ॥

**महेश्वरो मानसराजहंसीं करे दधानस्तनयां हिमाद्रेः ।**
**संभोगलीलालयतः सहेलं हरो[1] बहिस्तानभि निर्जगाम ॥ ३४ ॥**

महेश्वर इति ॥ महानीश्वरः समर्थो हरो मानसस्य मनोरूपस्य सरसो जहंसीं हिमाद्रेस्तनयां पार्वतीं करे दधानः सन् । संभोगलीलाया आलयतो न्दिरात् । 'निकाय्यनिलयालयाः' इत्यमरः । बहिस्तान्सुरानभि सहेलं सलीलं ा तथा निर्जगाम । निश्चक्रामेत्यर्थः ॥

**क्रमान्महेन्द्रप्रमुखाः प्रणेमुः शिरोनिबद्धाञ्जलयो महेशम्[2] ।**
**प्रालेयशैलाधिपतेस्तनूजां देवीं च लोकत्रयमातरं ते[3] ॥ ३५ ॥**

क्रमादिति ॥ महेन्द्रप्रमुखास्ते देवाः शिरस्सु निबद्धा अञ्जलयो यैस्तथोक्ताः तो महेशं हरम् । तथा प्रालेयो हिमानीरूपो यः शैलाधिपतिः पर्वतराजो मालयस्तस्य तनूजां कन्यां लोकत्रयस्य मातरं जननीं देवीं पार्वतीं च क्रमात्प्र- ुः । नमश्चक्रुरित्यर्थः । 'उपसर्गादसमासेऽपि' इति णत्वम् ॥

**यथागतं तान्विबुधान्विसृज्य प्रसाद्य[4] मानक्रियया प्रतस्थे ।**
**स नन्दिना दत्तभुजोऽधिरुह्य वृषं वृषाङ्कः सह शैलपुत्र्या ॥३६॥**

यथागतमिति ॥ स वृषाङ्को हरस्तान्विबुधानिन्द्रादीन्मानक्रियया । संमान- धानेनेत्यर्थः । प्रसाद्य प्रसन्नान्कृत्वा । तथा यथागतं विसृज्य च । नन्दिना तो भुजो यस्मै तथोक्तः सन् । शैलपुत्र्या पार्वत्या सह वृषमधिरुह्यास्थाय स्थे । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'साकं सार्धं समं सह' इत्यमरः ॥

**मनोतिवेगेन ककुद्मता स प्रतिष्ठमानो गगनाध्वनोऽन्तः[5] ।**
**वैमानिकैः साञ्जलिभिर्ववन्दे विहारहेलागतिभिर्गिरीशः ॥३७॥**

मन इति ॥ मनसोऽप्यत्यन्तं वेगो गतिर्जवो यस्य तेन ककुद्मता वृषेण गनरूपिणोऽध्वनो मार्गस्यान्तर्मध्ये प्रतिष्ठते चलतीति प्रतिष्ठमानः स गिरीशो रो विहारार्थं हेलया क्रीडया गतिर्येषां तैः । यदृच्छया संचरमाणैरित्यर्थः । मानिकैर्विमानैश्चरन्तीति वैमानिकाः । 'चरति' इति ठक् । 'ठस्येकः' इतीकादेशः । किति च' इत्यादिवृद्धिः । तथोक्तैः । देवैरित्यर्थः । साञ्जलिभिः सद्भिर्ववन्दे मस्कृतः । कर्मणि लिट् ॥

---

१ हसन्. २ गिरीशम्. ३ ताम्. ४ प्रसादमानक्रियया; प्रसाद्यमानः प्रियया. ५ गगनाध्वनीनः.

स्वर्वाहिनीवारिविहारचारी रतान्तनारीश्रमशान्तिकारी।
तौ पारिजातप्रसवप्रसङ्गो मरुत्सिषेवे गिरिजागिरीशौ॥

स्वर्वाहिनीति॥ तौ गिरिजागिरीशौ गौरीहरौ। कर्मभूतावित्यर्थः। [स्वर्वा]हिन्या मन्दाकिन्याः संबन्धिनि वारिणि विहारं संचारं चरत्याचरति। [का]यावत्। मन्दाकिनीसीकरवाहीत्यर्थः। अनेन शैत्योक्तिः। तथा रता[न्त]नारीणां संबन्धी श्रमः खेदस्तस्य शान्तिं करोति। अनेन मान्द्योक्तिः। पारिजातस्य कल्पवृक्षस्य संबन्धिनां प्रसवानां पुष्पाणां प्रसङ्गः संबन्धो[।] अनेन सौगन्ध्योक्तिः। शैत्यमान्द्यसौगन्ध्यरूपगुणत्रयविशिष्टो मरुत्समी[रः] कर्तृभूत इत्यर्थः। सिषेवे। आराधयामासेत्यर्थः॥

पिनाकिनापि स्फटिकाचलेन्द्रः कैलासनामा कलिताम्बरा[न्तः]
धृतार्धसोमो[1]ऽद्भुतभोगिभोगो विभूतिधारी स्व इव प्रपेदे॥

पिनाकिनेति॥ पिनाकिनापि हरेणापि कलितः स्वमहत्त्वेनावृतो[ऽ]आकाशप्रान्तदेशो येन तथोक्तः। द्वितीयपक्षे कलिता वेष्टिता अम्बरा[]दिग्रूपा येन। दिगम्बर इत्यर्थः। तथा अर्धो यः सोमश्चन्द्रः सोऽस्यास्तीत्य[र्ध]हरः स धृतो येन। कैलासवासी हि भगवान्गिरीश इति भावः। द्वि[तीये] धृतोऽर्धः कलारूपश्चन्द्रो येन। चन्द्रशेखरो हि भगवान्गिरीश इति [भ]ावः॥ भोगिन्यश्च भोगिनश्च भोगिनः। 'पुमान्स्त्रिया' इत्येकशेषः। भोगिनः [का]इत्यर्थः। तेषां तत्कर्तृको यो भोगः संभोगः सोऽद्भुत आश्चर्यकारी[।] द्वितीयपक्षेऽद्भुता भोगिनां सर्पाणां भोगा देहा यत्र। सर्पभूषणो हि भगव[ानिति] भावः। तथा विभूतिं धरतीति विभूतिधारी। संपद्वानित्यर्थः। द्विती[ये] विभूतिं भस्म धरतीति तथा। भस्मोद्धूलनकारी हि भगवान्गिरीश इति [भावः।] तथा कैलासनामा स्फटिकानामचलेन्द्रो गिरीन्द्रः। कर्मभूत इत्यर्थः। स्व[]इमेव प्रपेदे प्राप्तः। कर्मणि लिट्। पूर्णोपमालंकारः॥

विलोक्य यत्र स्फटिकस्य भित्तौ सिद्धाङ्गनाः स्वं[2] प्रतिबिम्ब[म्]
भ्रान्त्या परस्या[3] विमुखीभवन्ति प्रियेषु मानग्रहिला नमत्सु॥

विलोक्येति॥ यत्र कैलासे स्फटिकस्य भित्तावारात्समीपम्। '[आरा]त्समीपयोः' इत्यमरः। पतितं स्वं स्वकीयं प्रतिबिम्बं विलोक्य परस्याः [स]भ्रान्त्या भ्रमेण मानग्रहिला माने प्रणयकलहे ग्रहिला आग्रहवत्यः। तुन्दि[]कृतिगणत्वाश्रयणादिलच्। सिद्धाङ्गनाः प्रियेषु नमत्स्वपि सत्सु विमुखीभ[वन्ति] पराङ्मुख्यो भवन्तीत्यर्थः॥

सुविम्बितस्य स्फटिकांशुगुप्तेश्चन्द्रस्य चिह्नप्रकरः करोति।
गौर्यार्पितस्येव रसेन यत्र कस्तूरिकायाः शकलस्य लीलाम्॥४

१ भृतभोगिभोगः. २ स्वप्रतिबिम्बम्. ३ परस्याभिमुखीभवन्ति. ४ ...
५ कस्तूरिकास्थासकुलस्य.

सुविम्बितस्येति ॥ यत्र स्फाटिकाचलेन्द्रे सुविम्बितस्य प्रतिबिम्बस्यात स्फटिकांशुभिः । शुभ्रैरित्यर्थः । गुप्तिः प्रतिबिम्बगोपनं यस्य । उभयोः शुक्लत्वात्पृथगभासमानस्येत्यर्थः । तथोक्तस्य चन्द्रस्य संबन्धी चिह्नप्रकरः कलङ्क-संचयः । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । गौर्या पार्वत्यार्पितस्य निहितस्य कस्तूरिकायाः शकलस्य खण्डस्य । संचय इवेत्युत्प्रेक्षा । लीलां क्रीडाम् । शोभामिति यावत् । करोति । निदर्शनाभेदः । स चोपमयोत्प्रेक्षया वा संकीर्यत इति संदेहसंकरोऽत्रालंकारः । यदि गौर्यार्पितं तर्ह्युपमा यदि नार्पितं तर्ह्युत्प्रेक्षेत्य-वधेयम् ॥

**यदीयभित्तौ प्रतिबिम्बिताङ्गमात्मानमालोक्य रुषा करीन्द्राः ।**
**मत्तान्य[1]कुम्भिभ्रमतोऽतिभीमदन्ताभिघातव्यसनं वहन्ति ॥ ४२ ॥**

यदीयेति ॥ करीन्द्रा आत्मानं शरीरम् । स्वीयमिति शेषः । यदीयभित्तौ प्रतिबिम्बिताङ्गं प्रतिबिम्बितावयवमालोक्य विलोक्य मत्ता येऽन्ये कुम्भिनो दन्तिनस्तेषां भ्रमतो भ्रमाजनितया रुषा क्रोधेन । 'प्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । अतिभीमा ये दन्तास्तेषां योऽभिघात आघातस्तेन यद्व्यसनं दुःखं तत्तजर्जरितत्वलक्षणं वहन्ति प्राप्नुवन्ति । भ्रमात्मकं ज्ञानं दुःखावहं भवतीति भावः ॥

**निशासु यत्र प्रतिबिम्बितानि ताराकुलानि स्फटिकालयेषु ।**
**दृष्ट्वा रतो[2]न्तच्युततारहारमुक्ताभ्रमं बिभ्रति सिद्धवध्वः ॥ ४३ ॥**

निशास्विति ॥ यत्र स्फटिकाचले स्फटिकालयेषु प्रतिबिम्बितानि तारा-कुलानि नक्षत्रकुलानि निशासु दृष्ट्वा सिद्धवध्वः किंनरनार्यो रतान्ते च्युतो भ्रष्टस्तारोऽत्युच्चैर्यो हारो मुक्ताहारः । 'तारोऽत्युच्चैस्त्रयस्त्रिषु' इत्यमरः । तस्य या मुक्ता मौक्तिकानि तासां भ्रमं बिभ्रति । स्फटिकालयप्रतिबिम्बितमुक्तासदृश-नक्षत्रकुलमभिवीक्ष्य सुरतान्तकालीनहारभ्रंशोन्मुक्ताफलभ्रान्तिमत्यः सिद्ध-वध्वो भवन्तीति भावः ॥

**नभश्चरीमण्डनदर्पणश्रीः सुधानिधिर्मूर्धनि यस्य तिष्ठन् ।**
**अनर्घ्यचूडामणितामुपैति शैला[3]धिनाथस्य शिवालयस्य ॥ ४४ ॥**

नभश्चरीति ॥ नभसि चरतीति नभश्चरी । आकाशचारिणीत्यर्थः । 'चरेष्टः' इति टप्रत्यये टित्वात् 'टिड्ढाणञ्–' इति ङीप् । तथोक्ता मण्डनस्य विलासस्य यो दर्पण आदर्शस्तस्य श्रीरिव श्रीर्यस्य तथोक्तः । अत्र श्रीशब्दस्य रूढत्वेन शोभेति संज्ञावाचकत्वात् 'संज्ञापूरण्योश्च' इति पुंवद्भावो न सुधानिधिश्चन्द्रो यस्य कैलासस्य मूर्धनि शृङ्गे तिष्ठन् । शिवालयस्य शिवाः कल्याणकारिण आलया गृहा यत्र तस्य । शैलानामधिनाथस्य पत्युर्हिमालयस्यानर्घ्यो यश्चू-

१ नाग. २ रतान्ते. ३ शैलाधिराजस्य.

डामणिस्तत्तामुपैति । हिमालयशिखरस्य कैलासशिखरात्किंचिदधिकत्वम्
कैलासमूर्धनि चन्द्रस्तदा हिमालयस्य मूर्ध्नोऽधः किंचिद्वर्तेत इति भावः ॥

**समीयिवांसो रहसि स्मरार्ता रिरंसवो यत्र सुराः प्रियाभिः ।**
**एकाकिनोऽपि प्रतिबिम्बभाजो विभान्ति भूयोभिरिवान्विताः ॥**

समीयिवांस इति ॥ यत्र सुराः स्मरार्ता अत एव रिरंसवो रन्तुमिच्छवः
रमतेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । तथोक्ताः । अत एव प्रि
सहैकाकिनोऽपि प्रत्येकमेकसंख्याका अपि रहसि समीयिवांसः प्राप्
भूयोभिः स्वैर्देहैरन्विता इव विभान्ति । यतः प्रतिबिम्बभाजः । प्रतिबिम्
शादेक एवानेकधा दृश्यत इति युक्तमेवेति भावः ॥

**देवोऽपि गौर्या सह चन्द्रमौलिर्यदृच्छया स्फाटिकशैलशृङ्गे ।**
**शृङ्गारचेष्टाभिरनारताभिर्मनोहराभिर्व्यहरच्चिराय ॥ ४६ ॥**

देवोऽपीति ॥ चन्द्रमौलिर्देवोऽपि हरोऽपि स्फाटिकशैलः कैलासस्तस्य
शिखरे । 'शृङ्गं प्रभुत्वे शिखरे' इति मेदिनी । गौर्या पार्वत्या सह यदृ
स्वेच्छया । यथाकाममित्यर्थः । मनोहराभिरत एवानारताभिर्निरन्तरं भवन्ती
शृङ्गारचेष्टाभिश्चिराय व्यहरद्विजहार ॥

**देवस्य तस्य स्मरसूदनस्य हस्तं समालिङ्ग्य[2] सुविभ्रमश्रीः ।**
**सा नन्दिना वेत्रभृतोपदिष्टमार्गा[3] पुरोगेण कलं चचाल ॥ ४**

देवस्येति ॥ सुविभ्रमश्रीः शोभना विभ्रमस्य विलासस्य श्रीर्यस्याः
पार्वती । स्मरसूदनस्य स्मरविनाशकस्य तस्य देवस्य हरस्य हस्तं समालि
अवलम्ब्येत्यर्थः । वेत्रभृता यष्टिधारकेण तथा पुरोगेणाग्रगामिना नन्दि
गणेनोपदिष्टमार्गतो गमनं विधेयमिति प्रदर्शितमार्गा सती कलं मधुरं यथा
चचाल । मन्थरां गतिमकार्षीदित्यर्थः ॥

**चलच्छिखाग्रो[4] विकटाङ्गभङ्गः सुदन्तुरः[5] शुक्लसुतीक्ष्णतुण्डः[6] ।**
**भुवोपदिष्टः स तु शंकरेण तस्या विनोदाय ननर्त भृङ्गी ॥ ४८**

चलदिति ॥ चलन्ति शिखाग्राणि चूडाग्राणि यस्य । 'शिखा शाखा
चूडालाङ्गलिक्यग्रमात्रके । चूडामात्रे शिखायां च ज्वालायां प्रपदेऽपि च
इति मेदिनी । तथा विकटाः कराला अङ्गभङ्गा नृत्यचेष्टाविशेषा यस्य । 'वि
वज्रवाराद्यां त्रिषु रुचिरकालयोः' इति मेदिनी । तथा सुदन्तुर उन्नतः । 'दन्तु
रस्तून्नते त्रिषु' इति मेदिनी । 'दन्त उन्नत उरच्' इत्युरच्प्रत्ययः । शुक्लं
सुतीक्ष्णं सुतरां तिग्मं तुण्डं मुखं यस्य । एतादृशः स प्रसिद्धो भृङ्गी

---

१ दिशः. २ समालम्ब्य. ३ उपदिष्टं मार्गम्. ४ चलद्विषाणः. ५ सदन्
६ शुष्क. ७ हि.

शेषस्तु । तस्या भवान्या विनोदायानन्दाय शंकरेण भ्रुवोपदिष्टः प्रेरितः ननर्त ॥

कण्ठस्थलीलोलकपालमाला दंष्ट्राकरालाननमभ्यनृत्यत् ।
प्रीतेन तेन प्रभुणा नियुक्ता काली कलत्रस्य मुदे प्रियस्य ॥४९॥

कण्ठस्थलीति ॥ कण्ठस्य स्थल्यां लोला कपालानां नृकपालानां माला यस्याः । तथा दंष्ट्राभिः करालं भयानकमाननं बिभ्रती काली कालिका । 'काली कालिका क्षीरकीटेपु परिकीर्तिता' इति मेदिनी । प्रियस्य कलत्रस्य पार्वत्या मुदे प्रीत्यै तेन प्रभुणा हरेण प्रीतेन सता नियुक्ता प्रेरिता सती । अभ्यनृत्यन्ननर्त । नृत्यतेर्दैवादिकात्कर्तरि लङ् ॥

भयंकरौ तौ विकटं नदन्तौ विलोक्य बाला भयविह्वलाङ्गी ।
सरागमुत्सङ्गमनङ्गशत्रोर्गाढं प्रसह्य स्वयमालिलिङ्ग ॥ ५० ॥

भयंकराविति ॥ विकटं करालं यथा तथा नदन्तौ शब्दायमानौ अत एव भयंकरौ तौ कालीभृङ्गिणौ विलोक्य भयेन विह्वलमङ्गं यस्याः सा बाला पार्वती प्रसह्य बलात्कारेण स्वयमात्मनैवानङ्गशत्रोर्हरस्योत्सङ्गं सरागं सानुरागं यथा तथा । 'सरङ्गम्' इति पाठे भावे नलोपश्छिन्त्यः । गाढमालिलिङ्ग । अन्योऽपि भीतः सन्कंचिदालिङ्गति तद्वदिति भावः ॥

उत्तुङ्गपीनस्तनपिण्डपीडं ससंभ्रमं तत्परिरम्भमीशः ।
प्रपद्य सद्यः पुलकोपगूढः स्मरेण रूढप्रमदो ममाद ॥ ५१ ॥

उत्तुङ्गेति ॥ ईशो हरो रूढोपर्यारूढा प्रमदा पार्वती यस्मात् एवोत्तुङ्गमुच्चैः पीनं पुष्टं यत्स्तनपिण्डम् । उभयोरतिस्थूलतया परस्परसंयुक्तत्वात्पिण्डीभूतमिति भावः । तेन कृत्वा पीडा यत्र । तथा ससंभ्रमं सभयं तस्यास्तत्कर्तृकं परिरम्भमाश्लेषं प्रपद्य प्राप्य स्मरेण कामेन हेतुना सद्यः सहसा पुलकैरुपगूढः सन्ममाद मत्तो बभूव ॥

इति गिरितनुजाविलासलीलाविविधविभङ्गिभिरेष तोषितः सन् ।
अमृतकरशिरोमणिर्गिरीन्द्रे कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५२ ॥

इतीति ॥ गिरीन्द्रे कैलासे कृता वसतिर्येन तथामृतकरश्चन्द्रः शिरसि मणिरिव यस्य स एप हर इत्येवंभूतैर्गिरितनुजायाः पार्वत्याः संबन्धिनी या विलासलीला सकामचेष्टाक्रीडा तस्या विविधा नानाविधा या विभङ्ग्यो रचनास्ताभिस्तोषितः प्रीतः सन् । वशिभिः स्ववशंगतैर्गणैर्नन्दिप्रभृतिभिः सह ननन्द जहर्ष । तेषां हर्षोऽनयोरलौकिकक्रीडादर्शनादिति भावोऽनुसंधेयः । पुष्पिताग्रा

१ प्रणुन्ना. २ नटन्तौ. ३ सुरंगम्. ४ पीठ. ५ सुतया.

वृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' तल्लक्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
कैलासगमनो नाम नवमः सर्गः ॥

---

## दशमः सर्गः ।

आससाद सुनासीरं सदसि त्रिदशैः सह ।
[1]एष त्रैयम्बकं तीव्रं वहन्वह्निर्महन्महः ॥ १ ॥

आससादेति ॥ एष वह्निः । तीव्रं दुःसहं महत्त्रैयम्बकं शैवम् । त्र्यम्बकशब्दात् इदमर्थकेऽणि 'न य्वाभ्याम्' इत्यैजादेशः । महो वीर्यं वहन् । त्रिदैवैः सह सदसि सभायां स्थितं सुनासीरं महेन्द्रमाससाद प्राप । 'वृद्धश्रवाः सुनासीरः' इत्यमरः ॥

सहस्रेण दृशामीशः कुत्सि[2]ताङ्गं च सादरम् ।
दुर्दर्शनं ददर्शाग्निं धूम्रधू[3]मितमण्डलम् ॥ २ ॥

सहेति ॥ कुत्सिताङ्गमत एव दुर्दर्शनं धूम्रं धूम्रवर्णं धूमितं संजातधूमं तारकादित्वादितच् । मण्डलं यस्य तमग्निमीशो महेन्द्रो दृशां सहस्रेण सादरं यथा तथा ददर्श दृष्टवान् ॥

दृष्ट्वा तथाविधं वह्निमिन्द्रः क्षु[4]ब्धेन चेतसा ।
व्यचिन्तयच्चिरं किंचित्कन्दर्पद्वेषिरोषजम् ॥ ३ ॥

दृष्ट्वेति ॥ इन्द्रो वह्निं तथाविधं दृष्ट्वा क्षुब्धेन संचलितेन चेतसा कन्दर्पद्वेषिणो हरस्य रोषाजातं किंचिदपराधलक्षणं चिरं व्यचिन्तयत् ॥

स [5]विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणं क्षणम् ।
उपाविशत्सुरेन्द्रेणादिष्टं सादरमासनम् ॥ ४ ॥

स इति ॥ सोऽग्निर्विलक्ष्यमुखैर्म्लानमुखैर्देवैः क्षणं क्षणं प्रतिक्षणं वीक्ष्यमाणो दृश्यमानः सन् । सुरेन्द्रेण सादरमादिष्टमासनमुपाविशत् ॥

हव्यवाह त्वयासादि [6]दुर्दशेयं दशा कुतः ।
इति पृष्टः सुरेन्द्रेण स निःश्वस्य वचोऽवदत् ॥ ५ ॥

---

१ तत्त्व; मत्त्वा. २ द्युसदां सोऽतिसादरम्; द्युसत्संसदि सादरम्. ३ धूमि
४ कुद्धेन. ५ सवज्जलमुखैः; सविलक्षमुखैः. ६ सुमहादुर्दशा; सुदुर्दर्शा दशा.

हव्यवाहेति ॥ सोऽग्निः । हे हव्यवाह, त्वया दुर्दशेयं दशावस्था कुतो कारासादि प्रापीति सुरेन्द्रेण पृष्टः सन्निःश्वस्य निःश्वासं कृत्वा वचो वक्ष्यमाणमवदत् ॥

अथ युग्मेनाह—

अनतिक्रमणीयात्ते शासनात्सुरनायक ।
पारावतं वपुः प्राप्य वेपमानोऽतिसाध्वसात् ॥ ६ ॥
अभिगौरि रतासक्तं जगामाहं महेश्वरम् ।
कालस्येव स्मरारातेः स्वं रूपमहमासदम् ॥ ७ ॥

अनतीति ॥ अभिगौरीति ॥ हे सुरनायक, अहं पारावतं कपोतं वपुः प्राप्यानतिक्रमणीयादनुल्लङ्घनीयात्ते तव शासनाद्धेतोरभिगौरि गौर्यामित्यभिगौरि । 'अव्ययं विभक्ति–' इत्यादिना विभक्त्यर्थेऽव्ययीभावः । रतासक्तं महेश्वरं जगाम प्राप । जगामेति लिट उत्तमपुरुषैकवचनम् । अथ चातिसाध्वसाद्वेपमानः वेपमानोऽहं कालस्येव । तद्वद्भयानकस्येत्यर्थः । स्मराराातेर्हरस्य । पुर इति शेषः । स्वं रूपमाग्नेयंस्वरूपमासदं प्रापम् । लङ उत्तमपुरुषैकवचनम् ॥

दृष्ट्वा छद्मविहङ्गं मां सुज्ञो विज्ञाय जम्भभित् ।
ज्वलज्ज्वालानले होतुं कोपनो मामन्यत ॥ ८ ॥

दृष्ट्वेति ॥ हे जम्भभिदिन्द्र, सुज्ञो हरो मां दृष्ट्वा । अथ च छद्मना विहङ्गं विज्ञाय ज्ञात्वा । दर्शनमात्रादेव तु कापट्यानवगम एव किंतु विलम्बोपस्थितज्ञया । अतो ज्ञानदर्शनयोर्भिन्नकालीनत्वात्पृथग्व्यपदेशः । अतो ल्यब्द्वयस्य मननक्रियापेक्षया पूर्वत्वेनान्वयः । कोपनः क्रोधनः सन् । 'क्रुधमण्डार्थेभ्यश्च' इति युच् । मां ज्वलति भालस्थेऽनलेऽग्नौ होतुं दग्धुममन्यत मेने । मननमत्र विचारणं तद्भवनफलकमिति । अहमेनमग्नौ धक्ष्यामीति विचचारेत्यर्थः ॥

वचोभिर्मधुरैः सार्थैर्विनम्रेण मया स्तुतः ।
प्रीतिमानभवद्देवः स्तोत्रं कस्य न तुष्टये ॥ ९ ॥

वचोभिरिति ॥ मया विनम्रेण सता सार्थैः साभिप्रायार्थैरत एव मधुरैर्मनोहरैर्वचोभिः करणैः । स्तुत ईडितो देवो हरः प्रीतिमानभवत् । मदुपरि प्रसन्न इत्यर्थः । तथाहि । स्तोत्रं स्तुतिः । 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः । कस्य तुष्टये संतोषाय न भवति । अपि तु सर्वस्यापीत्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥

शरण्यः सकलत्राता मामत्रायत शंकरः ।
क्रोधाग्नेर्ज्वलतो ग्रासात्त्रासतो दुर्निवारतः ॥ १० ॥

---

१ अतिगौरी. २ उपान्तम्. ३ ज्ञानभृत्; यज्ञभित्. ४ कोपतः. ५ अयममन्यत; मामलोकयत्. ६ सान्त्वैः. ७ ग्रासत्रासतः.

शरण्य इति ॥ शरण्यः शरणे साधुः । 'तत्र साधुः' इति यत्प्रत्यय एव सकलत्राता सर्वेषां रक्षिता । एवंभूतः शंकरो हरो ज्वलतो दीप्य दुर्निवारतो दुःखेन निवारयितुं शक्यस्य क्रोधाग्नेः क्रोधाग्निकर्तृकाद्भासा भयं तस्मान्मामत्रायत ररक्ष । 'त्रैङ् पालने' लङ् ॥

**परिहृत्य [1]परीरम्भरभसं दुहितुर्गिरेः ।**
**कामकेलिरसोत्सेकाद्व्रीडया विरराम सः ॥ ११ ॥**

परिहृत्येति ॥ स हरो गिरेर्दुहितुः पार्वत्याः संबन्धिनं परीरम्भरभ हृत्योत्सृज्य व्रीडया हेतुभूतया कामस्य केले रसस्योत्सेकान्मानसस्यासक्ते विरतोऽभूत् । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥

**रङ्गभङ्गच्युतं रेतस्तद[2]मोघं सु[3]दुर्वहम् ।**
**त्रिजगद्दाहकं सद्यो मद्विग्रहम[4]धि न्यधात् ॥ १२ ॥**

रङ्गेति ॥ तदा स हरो रङ्गस्य कामकेलेर्भङ्गादन्तरायात् । अस्य क्रोधाभिव्यञ्जकत्वे न दोषः । च्युतं पतितममोघं सफलं त्रिजगद्दाहक सुदुर्वहं सुतरां दुःखेन वोढुं शक्यं रेतः शुक्रं मद्विग्रहमधि । मम इत्यर्थः । सद्यो न्यधात् । 'अधिमद्विग्रहम्' इति वक्तव्ये मद्विग्रहम महाकविप्रयोगान्न दोषाय ॥

**दुर्विषह्येण तेनाहं तेजसा दहनात्मना ।**
**निर्दग्धमात्मनो देहं दुर्वहं वोढुमक्षमः ॥ १३ ॥**

दुर्विषह्येणेति ॥ दहनात्मनाग्निरूपेणात एव दुर्विषह्येण दुःखेन शक्येन । 'शकिसहोश्च' इति यत् । तेन तेजसा वीर्येण निर्दग्धम दुर्वहमात्मनो देहं वोढुमहमक्षमोऽस्मि । यथाहं क्षमः स्यां तथैव विधेयमिति व्यज्यते ॥

**रौद्रेण दह्यमानस्य महसातिमहीयसा ।**
**मम प्राणपरित्राणप्रगुणो भव वासव ॥ १४ ॥**

रौद्रेणेति ॥ हे वासव इन्द्र, अतिमहीयसा रौद्रेण शांभवेन महसा दह्यमानस्य मम प्राणानां परित्राणेन प्रगुणो विख्यातो भव । मम प्रा भवतो महद्यशो भविष्यतीति भावः ॥

**इति श्रुत्वा वचो वह्नेः परितापोपशान्तये ।**
**हेतुं विचिन्तयामास मनसा विबुधेश्वरः ॥ १५ ॥**

इतीति ॥ विबुधानामीश्वरो महेन्द्रो वह्नेरित्येवंभूतं वचः श्रुत्वा परि

---

१ परिरम्भं रभसात्. २ तदमोघम्. ३ सुदुर्धरम्. ४ अभिन्यधात्.

पशान्तये । अर्थात्तस्यैवेत्यर्थः । मनसा हेतुं निदानं विचिन्तयामास । केनो-
नास्य तापोपशान्तिर्भवेदिति विचारयामासेत्यर्थः ॥

तेजोदग्धानि गात्राणि पाणिनास्य परामृशन् ।
किंचित्कृपीटयोनिं तं दिवस्पतिरभाषत ॥ १६ ॥

तेज इति ॥ दिवस्पतिरिन्द्रस्तं कृपीटयोनिमग्निं कर्मभूतं तेजसा शांभवेन ा दग्धानि प्लुष्टान्यस्याग्नेर्गात्राणि पाणिना परामृशन्स्पृशन्सन् । किंचिद्वक्ष्य-मभाषतोवाच । भाषतेर्द्विकर्मकत्वं हि ब्रूञर्थनिबद्धत्वात् । 'अर्थनिबन्धनेयं' इति वार्तिकात् । 'कृपीटयोनिर्ज्वलनः' इत्यमरः । 'शतमन्युर्दिवस्पतिः' च ॥

अथेन्द्रोऽग्निं सप्तभिः स्तौति—

प्रीतः स्वाहास्वधाहन्तकारैः प्रीणयसे स्वयम् ।
देवान्पितॄन्मनुष्यांस्त्वमेकस्तेषां मुखं यतः ॥ १७ ॥

प्रीत इति ॥ भो अग्ने, त्वं प्रीतः सन् । स्वाहाकारः स्वधाकारो हन्तकार शब्दैः कृत्वा होतृभिः प्रक्षिप्तेन । हविषेति शेषः । देवानिन्द्रादीन्पितॄन्म-ांश्च स्वयं प्रीणयसे प्रसादयसि । कथमेतान्प्रसादयामीत्याह—यत एक एव तेषां देवादीनां मुखमसि ॥

त्वयि जुह्वति होतारो हवींषि ध्वस्तकल्मषाः ।
भुञ्जन्ति[1] स्वर्गमेकस्त्वं स्वर्गप्राप्तौ हि कारणम् ॥ १८ ॥

त्वयीति ॥ होतारो हवींषि त्वयि जुह्वति । अत एव ध्वस्तकल्मषाः स्वस्त-ाः सन्तः स्वर्गं भुञ्जन्ति । हि यतस्त्वमेक एव स्वर्गप्राप्तौ कारणम् । 'ज्योति-मेन स्वर्गकामो यजेत' इत्यादिश्रुत्युक्तयागफलस्वर्गप्राप्तौ यागस्य त्वदायत्ततया रणत्वोक्तेरिति भावः ॥

हवींषि मन्त्रपूतानि हुताश त्वयि जुह्वतः ।
तपस्विनस्तपःसिद्धिं यान्ति त्वं तपसां[2] प्रभुः ॥ १९ ॥

हवींषीति ॥ भो हुताश, तपस्विनो मन्त्रपूतानि हवींषि त्वयि जुह्वतः सन्तः । भ्यस्ताच्छतुः' इति नुम्निषेधः । तपःसिद्धिं यान्ति प्राप्नुवन्ति । यतस्त्वं पसां प्रभुः ॥

निधत्से[3] हुतमर्काय स पर्जन्योऽभिवर्षति ।
ततोऽन्नानि प्रजास्तेभ्य[4]स्तेनासि जगतः पिता ॥ २० ॥

निधत्स इति ॥ भो अग्ने, त्वमर्काय देवान्तःपातिने सूर्याय हुतं हविर्नि-

---

१ भुञ्जते. २ तपसः. ३ नयसे. ४ प्रजा तेभ्यः.

धत्से निधानरूपतया ददासि । अतः सोऽर्कः पर्जन्यः सन्नभिवर्षति । का
णादन्नान्युत्पद्यन्ते । तेभ्योऽन्नेभ्यः प्रजा जायन्ते । तेन कारणेन जगतः पि
पातीति पितेति व्युत्पत्त्या साधारणरक्षकस्यापि पितृत्वम्, न केवलं जनक
भावः । अत एवोक्तं नीतौ—'अन्नदाता भयत्राता यश्च कन्यां प्रय
जनिता चोपनेता च पञ्चैते पितरः स्मृताः ॥' इति ॥

अन्तश्चरो[1]ऽसि भूतानां तानि त्वत्तो[2] भवन्ति च ।
ततो[3] जीवित[4]भूतस्त्वं जगतः प्राणदोऽसि च[5] ॥ २१ ॥

**अन्तरिति** ॥ भो अग्ने, त्वं भूतानां प्राणिनामन्तश्चरोऽन्तर्व्याप्यसि ।
भूतानि च त्वत्तो भवन्त्युत्पद्यन्ते । तत उभयकारणतस्त्वं जीवितानि प्रा
भूतानि येन तथोक्तो जगतः प्राणदश्चासि । अग्नेरन्तराधेयतयैव प्र
जीवनमतो जीवितभूतत्वम् । अग्नेरेव जगदुत्पादकतया प्राणदत्वं चार्थात्
उत्तरवाक्यद्वयस्य पूर्ववाक्यद्वयान्तर्गतत्वात्पृथक्त्वेन ग्रहणं व्यर्थमिति ।
अन्तर्व्यापित्वजीवितभूतत्वयोः साहचर्यप्रयुक्तं न सामानाधिकरण्यम् ।
यत्र यत्रान्तर्भावित्वं तस्य तत्र तत्र जीवितभूतत्वमिति नियमाभावात् ।
वह्निसंबन्धावच्छिन्नत्वेन तयोः सामानाधिकरण्यमिति वाच्यम् । वह्निसंब
च्छिन्नत्वमन्तर्व्याप्ते तप्तायःपिण्डे, न तत्र जीवितभूतत्वम् । अतो वह्निसं
वच्छिन्नत्वेनापि समानाधिकरणतानियमः कर्तुं न शक्यते । उत्पादकत्व
त्वयोः साहचर्यनियमाभावात् । कुलालस्य सत्यप्युत्पादकत्वे प्राणदत्वं न
घटमुत्पादयतोऽपि कुलालस्य न जीवनदातृत्वशक्तिरित्यलं विवादेन । अ
नोऽयं विवादः । 'जगतः' इति षष्ठी प्राणान्वयान्नतु दानान्वयात् । अ
'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी प्रसज्ज्येतेति
जगत इत्यस्य प्राणान्वये केवलसंबन्धवाचकत्वेन तस्य नित्यसंप्रदातविवक्ष
निरास्यते । एवं च संप्रादानान्तरं मृग्यं स्यात् । अथवा जगत्संबन्धिनां प्र
दानं जगत्संप्रदानकमेवेत्यर्थात्संप्रदानसिद्धिः ॥

जगतः सकलस्यास्य त्वमेकोऽस्युपकारकृत् ।
कार्योपपादने तत्र त्वत्तोऽन्यः कः प्रगल्भते ॥ २२ ॥

**जगत इति** ॥ भो अग्ने, त्वमेक एवास्य सकलस्य जगत उपकारकृद्धितकृ
अत एवास्माकं तत्र कार्योपपादने त्वत्तोऽन्यः । 'अन्यारात्–' इति पञ्
कः प्रगल्भते समर्थो भवेत् । न कोऽपीत्यर्थः ॥

अमीषां सुर[6]संघानां त्वमेकोऽर्थसमर्थने ।
विप[7]त्तिरपि संश्लाघ्योपकारव्रतिनोऽनल ॥ २३ ॥

१ अन्तश्चरसि. २ त्वद्भवन्ति. ३ त्वत्तः. ४ जीवितभूयः. ५ विपदोऽ
६ सुरसैन्यानाम्. ७ विपदोऽपि पदं श्लाघ्योपकारयति नो हि सः; विपदोऽपि
श्लाघोपकारव्रतिनो हि सा.

अमीषामिति ॥ भो अनल, अमीषां सुरसंघानां देवसमूहानामस्मदादीनामर्थसमर्थने कार्यसाधने विषये त्वमेक एव समर्थोऽसि। एवंविधोऽप्यहं विपन्नः करोमीत्याह—विपत्तिरिति । उपकारेषु परहितेषु व्रतिनो नियमवतः पुरुषस्य विपत्तिरपि सम्यक्श्लाघ्या भवति। अतो विपन्नोऽपि स्तूयस इति भावः ॥

संप्रत्युपायमुपदिशति—

देवी भागीरथी पूर्वं भक्त्यास्माभिः प्रतोषिता ।
निमज्जतस्तवोदीर्णं तापं निर्वापयिष्यति ॥ २४ ॥

देवीति ॥ पूर्वमस्माभिर्भक्त्या प्रतोषिता भागीरथी देवी निमज्जतः स्नानं कुर्वतस्तवोदीर्णमत्युल्बणं तापं निर्वापयिष्यति। प्रशामयिष्यतीत्यर्थः ॥

गङ्गां तद्गच्छ मा कार्षीर्विलम्बं[1] हव्यवाहन ।
कार्येष्ववश्यकार्येषु[2] सिद्धये क्षिप्रकारिता ॥ २५ ॥

गङ्गामिति ॥ भो हव्यवाहन, तत्तस्माद्गङ्गां देवीं गच्छ याहि। विलम्बं मा कार्षीर्मा कुरु। 'न माङ्योगे' इत्यडागमनिषेधः। तथाहि। अवश्यकार्येष्ववश्यकर्तव्येषु कार्येषु सिद्धये क्षिप्रकारितानलसत्वम्। उचितेति शेषः। तस्मात्त्वया शीघ्रमेव गन्तव्यमिति भावः ॥

ननु शक्तेनापि मया दुर्वाह्यं शैवं तेजो गङ्गा कथं धरिष्यतीत्याशङ्क्याह—

शंभोरम्भोमयी मूर्तिः सैव देवी सुरापगा ।
त्वत्तः[3] स्मरद्विषो बीजं दुर्धरं धारयिष्यति ॥ २६ ॥

शंभोरिति ॥ भो अग्ने, शंभोरम्भोमयी जलमयी मूर्तिर्देवी सा सुरापगैव सैव दुर्धरं स्मरद्विषो हरस्य बीजं तेजस्त्वत्त आदाय धारयिष्यति। धरिष्यतीत्यर्थः। 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः ॥

इत्युदीर्य सुनासीरो विरराम स चानलः ।
तद्विसृष्टस्तमापृच्छ्यै[4]व प्रतस्थे स्वर्धुनीमभि ॥ २७ ॥

इतीति ॥ इत्येवंभूतमुदीर्योक्त्वा सुनासीर इन्द्रो विरराम। तूष्णीं तस्थावित्यर्थः। विररामेति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। 'वृद्धश्रवाः सुनासीरः' इत्यमरः। सोऽनलश्चाग्निस्तु तद्विसृष्टस्तेन सुनासीरेण विसृष्टस्त्यक्तः। तेनानुमनुमत इत्यर्थः। तादृशः सन्। तमिन्द्रमापृच्छ्याहं गच्छामीत्याज्ञामादाय स्वर्धुनीं गङ्गामभि प्रतस्थे प्रस्थितवान् ॥

---

१ विषादम्. २ अर्थेष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता. ३ तत्र गत्वा च तद्बीजममोघं मुञ्च सुस्थिरम्. ४ आमन्त्र्य.

**हिरण्यरेतसा तेन देवी स्वर्गतरङ्गिणी ।**
**तीर्णाध्वना प्रपेदे सा निःशेषक्लेशनाशिनी[1] ॥ २८ ॥**

**हिरण्येति** ॥ तेन प्रस्थितेन तीर्णाध्वनावगाहितमार्गेण हिरण्यरेतसा निःशेषक्लेशनाशिनी निःशेषा ये क्लेशाः पञ्च क्लेशास्तेषां नाशिनी । मुक्तिदायिनीत्यर्थः । सा प्रसिद्धा स्वर्गतरङ्गिणी स्वर्णदी देवी प्रपेदे प्राप्ता । कर्मणि

अथ त्रिभिस्तामेव विशिनष्टि—

**स्वर्गा[2]रोहणनिःश्रेणिर्मोक्षमार्गाधिदेवता ।**
**उदारदुरितोद्गारहारिणी दुर्गतारिणी ॥ २९ ॥**

**स्वर्गेति** ॥ स्वर्गे यदारोहणं तस्य निःश्रेणिः सोपानपङ्क्तिः । अस्यां स्नानेनैव स्वर्गमारोहन्तीत्यर्थः । पुनश्च मोक्षमार्गस्य मुक्तिपथस्याधिदेवता प्रसाद्य मुक्तिमाप्नुवन्तीत्यर्थः । पुनश्चोदाराणामुच्चैस्तराणां दुरितानां पापानामुद्गारस्य समूहस्य हारिणी । विनाशिनीत्यर्थः । पुनश्च तरन्त्यनया सा तारिणी । दुर्गस्य संसाररूपस्य तारिणी । संसारार्णवमनया तरन्तीत्यर्थः । तारिणीति णिजन्तात्तरतेः 'करणाधिकरणयोश्च' इति करणे ल्युट् । ततः 'टिड्ढा–' इति ङीप् । 'तारिणी' इति पाठे तारयति लोकान्सा तारिणी । दुर्गात्तारिणी । अत्र कृते 'ऋन्नेभ्यः–' इति ङीप् ॥

**महेश्वरजटाजूटवासिनी पापनाशिनी ।**
**स[3]रागान्वयनिर्वाणकारिणी धर्मधारिणी ॥ ३० ॥**

**महेश्वरेति** ॥ पुनश्च महेश्वरस्य जटाजूटे वासिनी वासवती पुनश्च पापनाशिनी । अत्रापि तारिणीवत्प्रत्ययव्यवस्था । पुनश्च सरागस्य विषयलीप्सोरन्वयस्य वंशस्यापि निर्वाणकारिणी मोक्षकारिणी । किं पुनर्विमुक्तानामित्यर्थः । धर्मं धारयतीति धर्मधारिणी । आत्मसंबन्धेन जन्तून्धर्मवतः कुर्वन्तीत्यर्थः ॥

**विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता ।**
**त्रिभिः स्रोतोभिरश्रान्तं पु[4]नाना भुवनत्रयम् ॥ ३१ ॥**

**विष्ण्वति** ॥ पुनश्च विष्णुपादोदकादुद्भूतोत्पन्ना । विष्णुपादोदकं जन्महेतुरित्यर्थः । विष्णुपादोदकमेवोद्भूतं प्रादुर्भूतं रूपं यस्याः सेति वा । ब्रह्मलोकादुपागतेहागता । पुनश्च त्रिभिः स्रोतोभिः प्रवाहैर्भुवनत्रयं स्वर्गमर्त्यपाताललक्षणमश्रान्तं निष्परिश्रमं यथा भवति तथा पुनाना । पवित्रीकुर्वाणेत्यर्थः । अत एव त्रिस्रोता इति नाम दधतीत्यर्थः । 'पूञ् पवने' । शानच्प्रत्ययश्च ॥

१ अघविनाशिनी. २ स्वर्ग. ३ सागरान्वय. ४ पुनाति.

जातवेदसमायान्तमूर्मिहस्तैः समुत्थितैः[1] ।
आजुहावार्थसिद्ध्यै तं सुप्रसादधरेव सा[2] ॥ ३२ ॥

जातवेदसमिति ॥ सुतरामतिशयितो यः प्रसादस्तस्य धरा धारिणी सा गङ्गा आयान्तमागच्छन्तं तं जातवेदसमग्निमर्थसिद्ध्या अर्थसिद्धिं कर्तुं समुत्थितैरुच्चलितैरूर्मय एव हस्तास्तैः कृत्वा, आजुहावेव । अन्योऽपि हस्तसंकेतेन चिदाह्वयति । पुनः पुनरूर्मिसमुत्थानं तत्कर्तृकमाह्वानमिवेत्युत्प्रेक्षा । आङ्पूर्वाद्ध्वयतेः कर्तरि लिट् ॥

संमिलद्भिर्मरालैः सा कलं कूजद्भिरुन्मदैः ।
ददे श्रेयांसि दुःखानि निहन्मीति तमभ्यधात् ॥ ३३ ॥

संमिलद्भिरिति ॥ संमिलद्भिः सम्यग्मिलन्त्येकीभवन्तीति तथोक्तैः । तथोन्मदैरुन्मत्तैरत एव कलं मधुरं यथा भवति तथा कूजद्भिः शब्दायमानैर्मरालैर्हंसैर्युक्ता सा देवी गङ्गा तमग्निमित्यभ्यधादुवाच । किमिति तत् । भो अग्ने, त्वं श्रेयांसि ददे । दुःखानि निहन्मि । आत्मशक्त्याभिधाने जलरूपतयाऽशक्तापि स्वकीयतीरगतहंसनिनादेन वदति सेति भावः ॥

कल्लोलैरुद्गतैरर्वाचीनं तटमभिद्रुतैः[3] ।
प्रीतेव[4] तमभीयाय स्वर्धुनी जातवेदसम् ॥ ३४ ॥

कल्लोलैरिति ॥ स्वर्धुनी गङ्गा प्रीता सती । उद्गतैरानन्दादुद्वेलैरत एवार्वाचीनमर्वाग्भवं तटमभिद्रुतैः पलायितैः कल्लोलैः कृत्वा तं जातवेदसमभीयायेव सुखीबभूवेव ॥

अथाभ्युपेतस्तापार्तो[5] निममज्जानलः किल ।
विपदा परिभूताः[6] किं व्यवस्यन्ति[7] विलम्बितुम् ॥ ३५ ॥

अथेति ॥ अथानन्तरं तापेन हरतेजोजन्मनार्तः पीडितोऽत एवाभ्युपेतः सुखमुपगतोऽनलोऽग्निः । किलेति प्रसिद्धौ । निममज्ज निमग्नोऽभूत् । ननु त्वरित्येव किं मग्न इत्यर्थान्तरं न्यस्यति—विपदापदा परिभूता जिताः पुरुषा विलम्बितुमापत्प्रतीकारविलम्बभविष्णुतां सोढुं किं व्यवस्यन्त्युद्युञ्जते । अपि तु नेत्यर्थः । 'प्रतीक्षते जातु न कालमार्तिः' इति न्यायादिति भावः ॥

गङ्गावारिणि कल्याणकारिणि श्रमहारिणि ।
स मग्नो निर्वृतिं प्राप पुण्यभारिणि[8] तारिणि ॥ ३६ ॥

गङ्गेति ॥ सोऽग्निः कल्याणकारिण्यनेकमङ्गलविधायिनि श्रमहारिणि परिश्रमहारके । पुण्यं भारयति जनैः संग्राहयति तस्मिन्पुण्यभारिणि । येन जनाः

१ समुच्छ्रितैः. २ आजुहावास्य संसिद्ध्यै सुप्रसादादरेव सा. ३ उपागतैः. ४ प्रीत्येव. ५ अभ्युपेत्य. ६ परिभूतः. ७ व्यवस्यति. ८ पुण्यतारिणि.

पुण्यभारवन्तो भवन्तीति भावः । तारिणि भवार्णवतारिणि गङ्गावारिणि ग
जले मग्नः स्नातः सन् निर्वृतिं सुखं प्राप । तापार्तानां वारिणि मज्जनमेव
हेतुरिति भावः ॥

तत्र माहेश्वरं धाम संचक्राम हविर्भुजः ।
गङ्गायामुत्तरंगायामन्तस्तापविपद्धृति ॥ ३७ ॥

तत्रेति ॥ माहेश्वरं शैवं धाम तेजो हविर्भुजोऽग्नेः सकाशात्तत्र
संचक्राम संक्रान्तम् । लग्नमिति यावत् । अत एव किंभूतायां गङ्गा
अन्तर्मध्ये ताप एव विपत्तां धरति तथोक्तायामत एवोल्ललिता अतिवेला
कल्लोला यस्यास्तथोक्तायाम् । विशेषणद्वयार्थस्य पूर्ववाक्यानन्तरभा
पृथग्वाक्यत्वेन व्यपदेशे कर्तव्ये विशेषणतया वाक्यात्पूर्वोपमादानं यत्तत्पू
व्यवस्थितम् । न तु चित्तपरितोषाय । धामसंक्रमणात्प्राग्विपद्धरणासंभ
'धृता' इति पञ्चम्यन्तपाठे हविर्भुजो विशेषणम् । उत्तरंगत्वं च जलप्रकृति
सितं च स्वीकर्तव्यम् ॥

कृशानुरेतसो रेतस्यादृते सरिता तया ।
निश्चक्राम ततः सौख्यं हव्यवाहो वहन्बहु ॥ ३८ ॥

कृशान्विति ॥ तया सरिता गङ्गया कृशानुरेतसो हरस्य रेतसि धा
'कृशानुरेताः सर्वज्ञः' इत्यमरः । आदृते । आदरपूर्वकं गृहीते सति
हव्यवाहोऽग्निः । णिजन्तात्पचाद्यच् । बहु सौख्यं वहन्सन् । ततो
निश्चक्राम बहिर्निःसृतः ॥

सुधासारैरिवाम्भोभिरभिषिक्तो हुताशनः ।
यथागतं जगामाथ परां निर्वृतिमादधत् ॥ ३९ ॥

सुधासारैरिति ॥ अथानन्तरम् । सुधासारैरिवामृतमयैरिवाम्भोभि
भिषिक्तः स्नातोऽत एव परामत्युत्कटां निर्वृतिं सुखमादधद्बिभ्रद्धुताशनो
यथागतमागतमनतिक्रम्य जगाम गतवान् ॥

सा सुदुर्विषहं गङ्गा धाम कामजितो महत् ।
आदधाना परीतापमवाप व्योमवाहिनी ॥ ४० ॥

सेति ॥ व्योम्नि वाहः प्रवाहोऽस्ति यस्यास्तथोक्ता सा गङ्गा काम
महेश्वरस्य महत्सुदुर्विषहम् । 'ईषद्दुःसुषु–' इति कृच्छ्रार्थे खल् । धाम
आदधाना सती परीतापं संतापम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्'
दीर्घः । अवाप । प्राप्तवतीत्यर्थः ॥

---

१ इद्धभङ्गायाम्. २ अन्तस्तापविपद्धृतः; अन्तस्तापभिदाभृति. ३ आ
४ उदारैः. ५ परिषिक्तः. ६ कामम्.

बहिरार्ता युगान्ताग्नेस्तप्तानीव शिखाशतैः ।
हित्वोष्णानि जलान्यस्या निर्जग्मुर्जलजन्तवः ॥ ४१ ॥

बहिरिति ॥ जलजन्तवो यादांस्यार्ताः सन्तो युगान्ताग्नेः प्रलयकालीनान-स्य शिखाशतैः प्रकरणाच्छिवधाम्न एव तप्तान्यत एवोष्णान्यस्या गङ्गाया जलानि हित्वा परित्यज्य बहिर्निर्जग्मुः । निर्गतवन्त इत्यर्थः । यानि महेश्वरधाम-शिखाशतानि तान्यत्युग्रसंतापरूपसाधारणधर्मेण गम्यमानेन प्रलयकालानलसं-बन्धीनीवेत्युत्प्रेक्षा । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । हित्वेति 'ओहाक् त्यागे' इत्यस्य ॥

तेजसा तेन रौद्रेण तप्तानि सलिलान्यपि ।
समुदश्चन्ति चण्डानि दुर्धराणि बभार सा ॥ ४२ ॥

तेजसेति ॥ सा गङ्गा । रौद्रेण तेन तेजसा तप्तान्यत एव समुदश्चन्ति । प्रतितापवशादुत्प्लुत्य बहिर्निःसरन्तीत्यर्थः । अत एव चण्डानि प्रचण्डस्वरूपा-ण्यत एव दुर्धराण्यपि सलिलानि बभार धृतवती । तेजसो रुद्रसंबन्धित्वादिति भावः ॥

जगच्चक्षुषि चण्डांशौ किंचिदभ्युदयोन्मुखे ।
जग्मुः षट् कृत्तिका माघे मासि स्नातुं सुरापगाम् ॥ ४३ ॥

जगदिति ॥ माघे माघसंज्ञके मासि । 'पद्दन्–' इति मासशब्दस्य हलन्तमासादेशः । जगच्चक्षुषि जगन्नेत्रभूते चण्डांशौ सूर्ये किंचिदभ्युदयोन्मुखे । शैलान्तर्हितेन तेजसा दिशः किंचित्प्रकाशयतीत्यर्थः । षट् कृत्तिकाः स्नातुं सुरा-पगां मन्दाकिनीं जग्मुः प्रापुः ॥

अथ चतुर्भिः सुरापगां विशिनष्टि—

शुभ्रैरभ्रंकषैरूर्मिशतैः स्वर्गनिवासिनाम् ।
कथयन्तीमिवालोकावगाहाचमनादिकम् ॥ ४४ ॥

शुभ्रैरिति ॥ आलोको दर्शनमवगाहः स्नानमाचमनं चेत्यादीनि यस्य तादृशं कर्म कुर्वतां स्वर्गनिवासिनामभ्रंकषैरुत्प्लुत्याकाशस्पृग्भिः शुभ्रैरूर्मिशतैस्तरङ्गशतै-रात्मदुःखं कथयन्तीमिवेत्युत्प्रेक्षा । अस्मिञ्श्लोके पदद्वयाध्याहारदोषः स्फुट एव । क्रियाकारकयोः परस्परनित्यसंबन्धादाक्षेपलक्षणन्यायेन केचित्समादधते । उत्प्लु-तानि यानि तरङ्गशतानि तानि कथनसंज्ञानानीवेति भावः । यथान्योऽप्यात्म-व्याधिहेतुकं कंचिददनीयं पदार्थं कंचिदपि पुरुषं दर्शयित्वास्वाद्य च तत्पदार्थ-दोषं कथयति तथेयमपीति बोद्धव्यम् । अभ्रंकषैरिति 'सर्वकूलाभ्रकरीषेषु–' इत्यभ्रोपपदकात्कषेः खश् ॥

१ पयांसि. २ दुर्भराणि. ३ स्वर्गमनं सताम्. ४ आचमनादिना.

सुस्नातानां मुनीन्द्राणां बलिकर्मोचितैरलम् ।
बर्हिः पुष्पोत्करैः कीर्णतीरां दूर्वाक्षतान्वितैः ॥ ४५ ॥

सुस्नातानामिति ॥ सुस्नातानां मुनीन्द्राणां सप्तर्षीणां बलिकर्मणि धावुचितानि योग्यानि तैः । यथा दूर्वाभिरक्षतैश्चान्वितैर्युक्तैः पुष्पोत्करैः समूहैर्बर्हिः कीर्णतीरां व्याप्तसैकताम् । 'लाजाः पुं भूम्नि चाक्षताः' इत्य अलंशब्दोऽत्रात्यर्थवाचकः । स च कीर्णतीरामित्यतः प्रागन्वयितव्यः ॥

[1]ब्रह्मध्यानपरैर्यो[2]गपरैर्ब्रह्मा[3]सनस्थितैः ।
योगनिद्रागतैर्योगपट्ट[4]बन्धैरुपाश्रिताम् ॥ ४६ ॥

ब्रह्मेति ॥ ब्रह्मासने स्थितैः । तथा ब्रह्मणो ध्याने परैः सक्तैः । तथा योग निद्रां तां गतैः तथा योगपट्टस्य बन्धो बन्धनं येषां तैः । योगपट्टं बध्नद्भिरित्य एवंविधैर्योगपरैर्योगिभिरुपाश्रितां सेविताम् । उभौ जानू ऊर्ध्वतमौ सकक्ष वाससा । बद्धौ च कृत्वा सततं ध्यायेत्परमनन्यधीः ॥' इति योगलक्षणम् ।

पादाङ्गुष्ठाग्र[5]भूमिस्थैः सूर्यसं[6]बद्धदृष्टिभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपसेविताम् ॥ ४७ ॥

पादेति ॥ पादसंबन्धिनोऽङ्गुष्ठस्याग्रेणैव । न समग्रपादेनेत्यर्थः । भूमिस्थैः पृथिव्यां स्थितैरित्यर्थः । तथा सूर्ये संबद्धदृष्टिभिरन्वितविलोचनैः । तथा परं ब्र गृणद्भिर्जपद्भिर्ब्रह्मर्षिभिः सप्तर्षिभिरुपसेवितामुपाश्रिताम् ॥

अथ दि[7]व्यां नदीं देवीमभ्यनन्दन्विलोक्य ताः ।
कं नाभिनन्दयत्येषा [8]दृष्टा पीयूषवाहिनी ॥ ४८ ॥

अथेति ॥ अथानन्तरं ताः कृत्तिकाः दिव्यां स्वर्गीयां नदीं देवीं गङ्गां वि क्याभ्यनन्दन् । आनन्दिता बभूवुरित्यर्थः । एतद्युक्तमेवेत्याह—एषा पीयूष हिनी गङ्गा दृष्टा दर्शनगोचरीभूता सती कं पुरुषं नाभिनन्दयति । अपि तु स मेवेत्यर्थः । 'किम्' इति पाठे किं कुतः कारणान्नाभिनन्दयति मोदयति । अ तु मोदयत्येवेत्यर्थः । अत एतदालोकन आनन्दो युक्त इति भावः ॥

चन्द्रचूडामणिर्देवो यामुद्वहति मूर्धनि ।
[9]यस्या विलोकनं पुण्यं श्रद्दधुस्ता मुदा हृदि ॥ ४९ ॥

चन्द्रेति ॥ चन्द्रश्चूडामणिभूतो यस्य स देवो हरो मूर्धनि यामुद्वहति यस्या विलोकनं पुण्यं पुण्यकारि तां गङ्गां हृदि मनसि मुदा प्रीत्या श्रद्द श्रद्धितां चक्रुरित्यर्थः । गुणवत्सु श्रद्धाया औचित्यादिति भावः ॥

---

१ ब्रह्मा. २ योगिवरैः. ३ पद्मासनः. ४ भोगिभोगवद्धैः; भोगिभोगयुक्तैः ५ भूमिष्ठैः; भूयिष्ठैः. ६ संविष्ट. ७ देवीं धुनीम्; दिव्यनदीम्. ८ दे ९ तस्या विलोकनम्; तस्यावलोकनम्.

दि[1]व्यां विष्णुपदीं देवीं निर्वाणपददे[2]शिनीम् ।
नीर्धू[3]तकल्मषां मू[4]र्ध्ना सुप्रह्वास्ता[5] ववन्दिरे ॥ ५० ॥

दिव्यामिति ॥ निर्वाणपदस्य मोक्षपदस्य देशिनीं दात्रीम् । तथा निर्धूतकल्मषां दूरीकृतजनकिल्बिषां दिव्यां स्वर्गीयाम् । 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत् । विष्णोः पदीं चरणसंबन्धिनीम् । 'गङ्गा विष्णुपदी' इत्यमरः । देवीं गङ्गां ताः कृत्तिकाः सुतरां प्रह्वा नताः सत्यो मूर्ध्ना ववन्दिरे प्रणेमुः ॥

सौ[6]भाग्यैः खलु सुप्रा[7]पां मोक्षप्रतिभुवं स[8]तीम् ।
भक्त्यात्र तुष्टुवु[9]स्तां[10] ताः श्रद्दधाना दिवो[11]धुनीम् ॥ ५१ ॥

सौभाग्यैरिति ॥ अत्र ताः कृत्तिकाः श्रद्दधानाः सत्यः सौभाग्यैः शोभनभाग्यैः सुखेन प्राप्तुं शक्यां मोक्षस्य प्रतिभुवं लग्नकां सतीं पतिव्रतां तां दिवोधुनीं गङ्गां भक्त्या निमित्तेन तुष्टुवुः । भक्तिनिमित्तं स्तवनमित्यर्थः ॥

मुक्तिस्त्रीसङ्गदू[12]त्यज्ञैस्तत्र ता[13] विमलैर्जलैः ।
प्रक्षालितमलाः सस्नुः सुस्नातास्त[14]पसान्विताः ॥ ५२ ॥

मुक्तिरिति ॥ ताः कृत्तिकाः विमलैर्विगतमलैः तथा मुक्तिर्मोक्षः सैव स्त्री तस्याः सङ्गः संबन्धः । प्राप्तिरिति यावत् । तत्र यद्दूत्यं दूतीभावः । कर्म वा । तस्य ज्ञैः । ज्ञातृभिरित्यर्थः । येषां स्पर्शमात्रेण मुक्तिर्भवतीति भावः । तथाभूतैर्जलैः कृत्वा प्रक्षालितमला निवर्तितकल्मषाः सत्यस्तत्र गङ्गायां सस्नुः । स्नानं चक्रुरित्यर्थः । मलापकर्षस्नानानन्तरं शुद्धस्नानं क्रियत इति भावः । किंभूताः । सुस्नाताः शोभनं विध्युक्तप्रकारकं स्नातं स्नानं यासां ताः । भावे निष्ठा । विध्युक्तप्रकारेण स्नानकर्त्र्य इत्यर्थः । पुनः किंभूताः । तपसान्विताः । तपस्विन्य इत्यर्थः । 'ष्णा शौचे' कर्तरि लिट् ॥

स्नात्वा तत्र सु[15]लभ्यायां भाग्यैः परिपचेलिमैः ।
चरितार्थं स्वमात्मानं ब[16]हु ता मेनिरे मुदा ॥ ५३ ॥

स्नात्वेति ॥ परिपचेलिमैः परिपक्वैः । 'तव्यत्तव्यानीयरः' इत्यत्र केलिमर उपसंख्यानात्पचतेः केलिमर् । भाग्यैर्दिष्टैर्निमित्तभूतैः सुलभ्यायां सुखेन लब्धुं शक्यायाम् । 'पोरदुपधात्' इति यत् । तथाभूतायां तत्र गङ्गायां स्नात्वा ताः कृत्तिकाः स्वं स्वकीयमात्मानं मुदा प्रीत्या बहु यथा तथा चरितार्थं पुरुषार्थकारिणं मेनिरेऽमन्यन्त । 'मनु अवबोधने' कर्तरि लिट् ॥

१ दिष्ट्या. २ दर्शिनीम्. ३ निर्धूतकल्मषाः. ४ भूत्वा. ५ ताम्. ६ स्वभाग्यैः. ७ संप्राप्ताम्. ८ सताम्. ९ प्रतुष्टुवुः. १० तास्तम्. ११ सिषेविरे. १२ दौत्यज्ञैः. १३ भाविमलैः. १४ तापसान्विताः. १५ सुरम्यायाम्. १६ बहुलाः.

कृशानुरेतसो रेतस्तासामभिकलेवरम् ।
अमोघं संचचाराथ सद्यो गङ्गावगाहनात् ॥ ५४ ॥

कृशानुरेतस इति ॥ अथानन्तरं गङ्गावगाहनाद्धेतोरमोघं सफलं कृ
रेतसो हरस्य रेतो वीर्यं सद्यस्तत्कालं तासां कृत्तिकानामभिकलेवरं कलेवरे
इत्यभिकलेवरम् । शरीरमध्य इत्यर्थः । संचचार संचक्राम । लग्नमिति य
अत्र तृतीयायोगाभावात्समः परतोऽपि चरतेर्नात्मनेपदम् । 'समस्तृतीयायु
इति सौत्रनियमात् ॥

रौद्रं सुदुर्धरं धाम दधाना दहनात्मकम् ।
परितापमवापुस्ता मग्ना इव विषाम्बुधौ ॥ ५५ ॥

रौद्रमिति ॥ दहनात्मकमग्निरूपमत एव सुतरां दुर्धरं दुःखेन धर्तुं
रौद्रं शैवं धाम तेजो दधानास्ताः कृत्तिका विषाम्बुधौ मग्ना इवेत्युत्प्रे
परितापमवापुः । विषाम्बुधिमग्नत्वे यादृशः परितापो भवति तादृशो रौद्र
धारणे जात इति भावः ॥

अक्षमा दुर्वहं वोढुमम्बुनो बहिरातुराः ।
अग्निं ज्वलन्तमन्तस्ता दधाना इव निर्ययुः ॥ ५६ ॥

अक्षमा इति ॥ दुर्वहं दुर्धरं तद्धाम वोढुमक्षमा अत एवातुरा व्याकुला
कृत्तिकाः । अन्तर्मध्ये ज्वलन्तमग्निमिव दधानाः सत्योऽम्बुनो जलाद्बहिर्निर्य
निर्जग्मुरित्यर्थः । अत्र धामन्यग्नित्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥

अमोघं शांभवं बीजं सद्यो नद्योज्झितं महत् ।
तासामभ्युदरं दीप्तं स्थितं गर्भत्वमागमत् ॥ ५७ ॥

अमोघमिति ॥ नद्या गङ्गया सद्य उज्झितमत एव तासां कृत्तिकाना
भ्युदरं दीप्तं सत्स्थितममोघं सफलं महच्छांभवं बीजं गर्भत्वमागमत् । गर्भ
तमित्यर्थः ॥

सुज्ञा विज्ञाय ता गर्भभूतं तद्वोढुमक्षमाः ।
विषादमदधुः सद्यो गाढं भर्तृभिया ह्रिया ॥ ५८ ॥

सुज्ञा इति ॥ सुज्ञाश्चतुरा अत एव गर्भभूतं तद्वीर्यं विज्ञायापि वोढुम

---

५८-५९ श्लोकयोर्मध्ये श्लोको दृश्यते—
अकाममरणं जातमकाण्डं भाविनोऽर्थतः ।
संभूयान्योन्यमात्मान शुशुचुस्तास्तदाविलम् ॥ (१ अकाण्डे. २ शुशु

१ दुर्धरम्. २ अग्निं ज्वलन्तमन्तःस्थं दधाना इव निर्ययुः; निर्ययुः सहि
शीघ्रं कृत्तिका विस्मयान्विताः. ३ नद्यां स्थितम्. ४ तीव्रम्. ५ गर्भी
६ आगमम्. ७ भर्तृभयात्.

समर्थाः । तस्यातिशयप्रज्वलितत्वादिति भावः । ताः कृत्तिका भर्तुर्भिया शापभयेन । यदि न धारिष्यामस्तदानुचितं नो चेच्छरीरदाह इति भयेनेत्यर्थः । ह्रिया लज्जया । एवंविधा इमाः । याभिर्भर्तृवीर्यमपि न धृतमिति लोकप्रवादजन्मनेत्यर्थः । सद्यो गाढं विषादं खेदमदधुर्धृतवत्यः ॥

ततः शरवणे सार्धं भयेन व्रीडया च ताः ।
तद्गर्भजातमुत्सृज्य स्वान्गृहानभिनिर्ययुः ॥ ५९ ॥

तत इति ॥ ततोऽनन्तरं ताः कृत्तिकास्तद्गर्भजातं गर्भसामान्यम् । 'जातिर्जातं च सामान्यम्' इत्यमरः । भयेन व्रीडया च सार्धं सह शरवणे । 'प्रनिरन्तः-शरेक्षु-' इत्यादिना शरशब्दात्परवननकारस्य णत्वम् । 'शरः स्तुते जने बाणे' इति मेदिनी । उत्सृज्य परित्यज्य स्वान्गृहानभिनिर्ययुर्गतवत्यः । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः ॥

ताभिस्तत्रामृतकरकलाकोमलं भासमानं
तद्विक्षिप्तं क्षणमभिनभोगर्भमभ्युज्जिहानैः ।
स्वैस्तेजोभिर्दिनपतिशतस्पर्धमानैरमानै-
र्वक्त्रैः षड्भिः सरहरगुरुस्पर्धयेवाजनीव ॥ ६० ॥

ताभिरिति ॥ ताभिः कृत्तिकाभिस्तत्र शरवणे विक्षिप्तं त्यक्तम् । तथामृतककलावच्चन्द्रकलेव कोमलं मृदु यथा तथा क्षणं भासमानं तद्गर्भजातं कर्तृ । अभिनभोगर्भं नभोगर्भं आकाशमध्य इत्यभिनभोगर्भम् । 'गर्भो भ्रूणेऽर्भके कुक्षौ' इति मेदिनी । अभ्युज्जिहानैरभ्युज्जिहते संमुखमुदयन्ते तानि तैः । 'ओहाङ् गतौ' इत्यतः शानच् । तथा दिनपतिशतं सूर्यशतं स्पर्धन्ते तानि तैः । ततोऽप्यधिकैरित्यर्थः । तथाऽमानैरसंख्यैः स्वैस्तेजोभिः तथा षड्भिर्वक्त्रैश्च युक्तं सरहरगुरोर्ब्रह्मणः स्पर्धयेर्ष्ययेव । तव चत्वारि मम षडित्यतस्त्वत्तोऽहमधिकोऽस्मीत्येवंभूतवाग्वादावसरफलकयेत्यर्थः । अजनि । परिप्राप्तमभूदित्यर्थः । 'दीपजन-' इत्यादिना च्लेश्चिण् । 'जनिवध्योश्च' इति वृद्धिनिषेधः । अत्र तेजसां वर्णां वक्त्राणां चोत्पादने ब्रह्मस्पर्धाया अहेतुत्वेऽपि तद्धेतुत्वेन कल्पनाद्धेतूत्प्रेक्षालंकारः । मन्दाक्रान्ता वृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति लक्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कुमा-
रोत्पत्तिर्नाम दशमः सर्गः ॥

---

१ शापभयेन. २ सह. ३ ताः. ४ अभितो ययुः; अभि ता ययुः. ५ निक्षिप्तम्. ६ तैः. ७ दिनकर. ८ वक्त्रम्. ९ स्मरहरशिरःस्पर्धयेव प्रपेदे.

## एकादशः सर्गः ।

अभ्यर्थ्यमाना विबुधैः समग्रैः ग्रहैः सुरेन्द्रप्रमुखैरुपेत्य ।
तं पाययामास सुधातिपूर्णं सुरापगा स्वं स्तनमाशु मूर्ता ॥ १ ॥

अभ्यर्थ्येति ॥ सुरेन्द्रप्रमुखैरिन्द्रादिभिः समग्रैः समस्तैर्विबुधैर्देवैरुपेत्य उपमागत्य ग्रहैर्नम्रैः सद्भिरभ्यर्थ्यमाना याच्यमाना सुरापगा मन्दाकिनी शीघ्रं मूर्ता मूर्तिमती सती । तं कुमारं सुधया दुग्धामृतेनातिपूर्णं स्वमात्मीयं स्तनं पाययामास पानं कारितवती । सर्गेऽस्मिन्वृत्तमुपजातिः ॥

पिबन्स तस्याः स्तनयोः सुधौघं क्षणंक्षणं साधु समेधमानः ।
प्रापाकृतिं कामपि षड्भिरेत्य निषेव्यमाणः खलु कृत्तिकाभिः ॥

पिबन्निति ॥ स कुमारस्तस्या मन्दाकिन्याः स्तनयोः संबन्धिनं दुग्धामृतसमूहं पिबन् अत एव क्षणंक्षणं प्रतिक्षणं साधु यथा स्यात्तथा समेधमानः सम्यग्वर्धमानः षड्भिः कृत्तिकाभिरेत्य निषेव्यमाणः श्रियमाणश्च कामपि लोकोत्तरामाकृतिं प्राप्तवान् । खलु वाक्यालंकारे । 'खलु स्यात् भूषायाम्' इति विश्वः ॥

भागीरथीपावककृत्तिकानामानन्दबाष्पाकुललोचनानाम् ।
तं नन्दनं दिव्यमुपात्तुमासीत्परस्परं प्रौढतरो विवादः ॥ ३ ॥

भागीरथीति ॥ आनन्दबाष्पैराकुललोचनानां व्याप्तनेत्राणाम् । पावकः कृत्तिकाश्च पावककृत्तिकाः । भागीरथ्या गङ्गया सहिता याः पावककृत्तिकास्तासां संबन्धि दिव्यं लोकोत्तरस्वरूपं तं नन्दनं पुत्रमुपात्तुं गृहीतुं परस्परमन्योन्यं प्रौढतरोऽतिशयितो विवादः कलह आसीत् । ममायं ममायमिति प्रवादरूपः कलिर्बभूवेत्यर्थः ॥

अत्रान्तरे पर्वतराजपुत्र्या समं शिवः स्वैरविहारहेतोः ।
नभो विमानेन विगाहमानो मनोतिवेगेन जगाम तत्र ॥ ४ ॥

अत्रान्तर इति ॥ अत्रान्तरे कलहावसरे शिवः पर्वतराजपुत्र्या पार्वत्या समं सह स्वैरविहारो यथेच्छविहारस्तस्माद्धेतोः कारणान्मनोतिवेगेन चेतसोऽप्यतिशयजवेन विमानेन नभोऽन्तरिक्षं विगाहमानोऽवलोडयंस्तत्र कलहस्थाने जगाम प्राप ॥

निसर्गवात्सल्यवशाद्विवृद्धचेतःप्रमोदौ गलदश्रुनेत्रौ ।
अपश्यतां तं गिरिजागिरीशौ षडाननं षड्दिनजातमात्रम् ॥ ५ ॥

---

१ अभ्यर्थमाना. २ सुधाभिपूर्णम्. ३ स्वर्गापगा. ४ स्वस्तनम्. ५ ... ६ एषः. ७ निसर्गवात्सल्यरसाद्विवृद्धचेतःप्रमोदौ; निसर्गवात्सल्यविवृद्धचेतःप्रथुप्र... ८ तौ. ९ तद्दिन.

निसर्गेति ॥ गिरिजागिरीशौ निसर्गेण स्वभावेन यद्वात्सल्यं दयावत्त्वं तस्य द्धेतोर्विवृद्धः प्रवृद्धश्चेतसः प्रमोदो हर्षो ययोस्तथाभूतौ । अत एव गलद-णी प्रवहद्बाष्पे नेत्रे ययोस्तथाभूतौ सन्तौ । षड्दिनानि । जन्मदिनादारभ्ये-र्थः । जातानि व्यतीतानि यस्य स षड्दिनजातः स एव षड्दिनजातमात्रस्तं ाननं षण्मुखं तं कुमारमपश्यतां दृष्टवन्तौ ॥

थाह देवी शशिखण्डमौलिं कोऽयं[1] शिशुर्दिव्यवपुः पुरस्तात् ।
याथवा धन्यतमस्य पुंसो मातास्य[2] का भाग्यवतीषु धुर्या ॥ ६ ॥

अथेति ॥ अथ दर्शनानन्तरं देवी भवानी । पुरस्तादयं कः । अथवा कस्य न्यतमस्य पुंसो दिव्यवपुरादितेयसदृशविग्रहः शिशुर्बालः । पुत्र इति यावत् । स्य शिशोर्माता जननी का या भाग्यवतीषु धुर्याग्रगण्या । 'धुरो यड्ढकौ' इति त् । एतन्मातृत्वादिति भावः । इत्येवं प्रश्नभूतं वचः शशिखण्डमौलिं हरमा-क्तवती । आहेति विभक्तप्रतिरूपकमव्ययम् । तथा चोक्तम्—'अव्ययानामन-न्त्वाद्गणनाय न शक्यते । महाकविप्रयोगेषु यदि सिद्धात्परं च तत् ॥' इति ॥

र्गापगासावनलोऽयमेताः षट् कृत्तिकाः किं कलहायमानाः ।
त्रो ममायं न तवायमित्थं मिथ्येति[3] वैलक्ष्यमुदाहरन्ति[4] ॥ ७ ॥

स्वर्गापगेति ॥ किं च । असौ स्वर्गापगा गङ्गा । अयमनलोऽग्निः । एताः ट् कृत्तिकाः कलहायमानाः कलहं कुर्वाणाः सत्यः । 'शब्दवैरकलह—' इत्या-दिना करोत्यर्थे क्यङ् । अयं पुत्रो मम मत्संबन्धी इति गङ्गावाक्यम् । अयं तव न किंतु मम इत्यग्निवाक्यम् । इत्थं मिथ्योभयोर्युवयोर्मध्ये न कस्यापि किं त्वस्माकमिति सत्यम् । इति कृत्तिकावाक्यम् । इति परस्परं वैलक्ष्यं विलक्षणं यथा तथा किं किमर्थमुदाहरन्ति विवदन्ते ॥

एतेषु कस्येदमपत्यमीशाखिलत्रिलोकीतिलकायमानम् ।
अन्यस्य कस्याप्यथ देवदैत्यगन्धर्वसिद्धोरगराक्षसेषु ॥ ८ ॥

एतेष्विति ॥ हे ईश, एतेषु स्वर्गापगादिषु मध्ये कस्येदमपत्यं पुत्रः । किंभू-तम् । अखिला या त्रिलोकी तत्र तिलकायमानं तिलक इवाचरत् । 'कर्तुः क्यङ् सलोपश्च' इत्याचारार्थे क्यङ् । तत आत्मनेपदित्वाच्छानच् । अथाथवा । सिद्धा देवविशेषाः । उरगाः सर्पाः । राक्षसा निशाचराः । देवदैत्यगन्धर्वसहिता ये सिद्धोरगराक्षसास्तेषु मध्येऽन्यतमस्य कस्यापीति वदेत्यर्थः ॥

श्रुत्वेति वाक्यं[5] हृदयप्रियायाः कौतूहलिन्या विमलस्मितश्रीः ।
सान्द्रप्रमोदोदयसौख्यहेतुभूतं वचोऽवोचत चन्द्रचूडः ॥ ९ ॥

श्रुत्वेतीति ॥ चन्द्रचूडो हरः कौतूहलिन्याः श्रवणे कौतुकवत्या हृदयप्रियायाः

१ असौ. २ च. ३ मिथः. ४ उदाहरन्ते. ५ वाचम्.

पार्वत्या इति पूर्वोक्तं वाक्यं वचः। 'वच परिभाषणे' 'ऋहलोर्ण्यत्'। श्रुत्वा विमला सितश्रीर्यस्य। किंचिद्विहस्येत्यर्थः। सान्द्रः बहुरिति यावत्। यः प्रमोदो हर्षः। 'प्रमोदामोदसंमदाः' इत्यमरः। उदय उत्पत्तिस्तेन यत्सौख्यं तस्य हेतुभूतम्। तज्जनकमित्यर्थः। वचो वचताक्तवान्॥

**जगत्र्रयीनन्दन एष वीरः प्रवीरमातुस्तव नन्दनोऽस्ति।**
**कल्याणि कल्याणकरः सुराणां त्वत्तोऽपरस्याः कथमेष सर्गः॥**

जगत्रयीति॥ हे प्रिये, जगत्रय्या नन्दन आनन्दकारकः। नन्द्यतीति 'नन्दिग्रहि–' इति ल्युः। वीरः पराक्रम्येष पुरोवर्ती शिशुः प्रवीरमातुः वीरजनन्यास्तव नन्दनः पुत्रोऽस्ति। ममैवायं नन्दन इत्यत्र किं मानमित्याह–हे कल्याणि, सुराणामिन्द्रादीनां कल्याणकरः शर्मकार्येषु पुरोवर्ती सृष्टिः। पुत्र इति यावत्। त्वत्तोऽपरस्यास्त्वदन्यस्याः स्त्रियाः कथं केन प्रकारेण स्यात्। तारकविनाशजनितकल्याणकरत्वे त्वज्जनितस्यैव शक्तिः। अतस्तव पुत्र इति भावः॥

**देवी त्वमेवास्य निदानमास्से सर्गे जगन्मङ्गलगानहेतोः।**
**सत्यं त्वमेवेति विचारयस्व रत्नाकरे युज्यत एव रत्नम्॥ ११**

देवीति॥ हे देवि प्रिये, जगतां मङ्गलानि मङ्गलकर्माणि गानानि गीतानि मङ्गलप्रबन्धरूपाणीति यावत्। तेषां हेतोः कारणस्यास्य शिशोः सर्गे उत्पत्ताविति यावत्। त्वमेव निदानमादिकारणमास्स उपविशसि। असीत्यर्थः। 'निदानं त्वादिकारणम्' इत्यमरः। 'आस उपवेशने'। लटो मध्यमपुरुषैकवचनम्। नन्वहमेव कारणमित्यत्र किं मानमिति दृष्टान्तेन दर्शयति–त्वमेवेति सत्यम्। विचारयस्व। किमिति तत्। रत्नं रत्नाकरे समुद्र एव। रत्नखनावेव युज्यते युक्तं भवति। 'खनिः स्त्रियामाकरः स्यात्' इति, 'रत्नाकरो जलनिधिः' इति चामरः॥

अथ युग्मेनाह—

**अतः शृणुष्वावहितेन वृत्तं बीजं यदग्नौ निहितं मया तत्।**
**संक्रान्तमन्तस्त्रिदशापगायां ततोऽवगाहे सति कृत्तिकासु॥ १२**
**गर्भत्वमाप्तं तदमोघमेतत्ताभिः शरस्तम्बमधि न्यधायि।**
**बभूव तत्रायमभूतपूर्वो महोत्सवोऽशेषचराचरस्य॥ १३॥**

अत इति। गर्भत्वमिति॥ हे प्रिये, अतःकारणात्। अवहितेनावधानेन

---

१ जगत्रयानन्दन. २ मातः. ३ अयम्. ४ परस्याः. ५ आर्ये. ६ स्वर्गे. ७ अत्र. ८ त्रिदिवापगायाम्. ९ विगाहे. १० यत्.

सावधानतयेति यावत् । भावे निष्ठा । वृत्तं वृत्तान्तं शृणुष्व शृणु । तथाहि । मया तद्बीजं वीर्यमग्नौ निहितं स्थापितं तद्बीजं त्रिदशापगायां गङ्गायामन्तर्मध्ये संक्रान्तं लग्नम् । अवगाहे स्नाने सति ततो गङ्गातः कृत्तिकासु च संक्रान्तं गर्भत्वमाप्तं गर्भीभूतम् । अथ च ताभिः कृत्तिकाभिरमोघं तदेतच्छरस्तम्बम-ध्यधिशरस्तम्बम् । अधेर्व्यत्ययः प्रामादिक एव । न्यधायि निहितम् । धाञः कर्मणि लुङ् । तत्र शरस्तम्बेऽशेषचराचरस्य समस्तस्थावरजङ्गमस्य जगतोऽभूत-पूर्वः पूर्वं भूतो भूतपूर्वस्तादृङ्न भवतीत्यभूतपूर्वो महोत्सवो महानुत्सवोऽयं शिशु-र्बभूव । जन्यजनकयोरभेदविवक्षयायुर्घृतमितिवन्महोत्सवोयमिति प्रयोगः ॥

अशेषविश्वप्रियदर्शनेन धुर्या त्वमेतेन सुपुत्रिणीनाम् ।
अलं विलम्ब्याचलराजपुत्रि स्वपुत्र[1]मुत्सङ्गतले[2] निधेहि[3] ॥ १४ ॥

अशेषेति ॥ हे प्रिये, अशेषविश्वस्य समस्तजगतः प्रियं प्रीतिकारकम् । 'इगुपध–' इत्यादिना कः । तथाभूतं दर्शनं यस्य तथोक्तेनैतेन । अत्रान्वादेश एतच्छब्दस्य नित्यमेनादेशनियमात्कथमेनाभावः साधुः । सत्यम् । अत्रान्वादेश एव नास्ति । तत्र किंचिद्विधानोद्युक्त्याश्रयीभूतस्य पुनरुपादानाश्रयीभूतस्य च भेदाभाववत्त्वेन विवक्षितत्वात् । प्रकृते तु तदन्यथात्वादन्वादेशाभावेनैनादे-शाभावसिद्धिरित्यलम् । त्वं सुपुत्रिणीनां शोभनपुत्रवतीनां धुर्याग्रगण्या । श्रेष्ठ-तमेति यावत् । असीति शेषः । हे अचलराजपुत्रि, विलम्ब्य विलम्बं कृत्वालम् । विलम्बो न कर्तव्य इत्यर्थः । किंतु स्वपुत्रमात्मतनूजमुत्सङ्गतलेऽङ्कतले निधेहि स्थापय ॥

अथ युग्मेनाह—

अथेति वादिन्यमृतांशुमौलौ शैलेन्द्रपुत्री रभसेन सद्यः ।
सान्द्रप्रमोदेन सुपीनगात्री धात्री समस्तस्य चराचरस्य ॥ १५ ॥
किरीटबद्धाञ्जलिभिर्नभःस्थैर्नमस्कृता सत्वरनाकि[4]लोकैः[5] ।
विमानतोऽवातरदात्मजं तं ग्रहीतुमुत्कण्ठितमानसाभूत् ॥ १६ ॥

अथेति ॥ किरीटेति ॥ अथामृतांशुश्चन्द्रो मौलौ यस्य तथाभूते हरे इति पूर्वोक्तप्रकारेण वादिनि भाषमाणे सति । समस्तस्य सकलस्य चराचरस्य जगतो धात्री परिपोषिका । 'ऋन्नेभ्यः–' इति ङीप् । तथा सान्द्रः सघनो यः प्रमोद आनन्दस्तेन सुतरां पीनं प्रफुल्लत्वात्पुष्टं गात्रं यस्यास्तथाभूता शैलेन्द्रस्य हिमा-लयस्य पुत्री कन्या पार्वती नभःस्थैः । तत्काल आकाशमाश्रयद्भिरित्यर्थः । तथा सत्वरैश्च नाकिलोकैरिन्द्रादिलोकैः किरीटेषु बद्धा अञ्जलयो यैस्तथाभूतैः सद्भि-र्नमस्कृता वन्दिता सती सद्यो रभसेन वेगेन विमानतो विमानात् । पञ्चम्यास्त-

१ सुपूर्णम्. २ तलम्. ३ विदेहि. ४ तथा. ५ नाक.

सिल । अवातरदुत्ततार । अथ च तमात्मजं कुमारं ग्रहीतुमुत्कण्ठितम
चाभूत् । अहमेनं गृह्णामीति मनस्यैच्छदित्यर्थः ॥

**स्वर्गापगापावककृत्तिकादीन्कृताञ्जलीनानमतोऽपि भूयः ।**
**हित्वो[2]त्सुका तं सुतमाससाद पुत्रोत्सवे माद्यति का[3] न हर्षात् ॥१**

स्वर्गेति ॥ पुत्रोत्सव उत्सुकोत्कण्ठिता पार्वती । स्वर्गापगा गङ्गा तया स याः पावककृत्तिकास्ता आदयो येषां तान् । अत्रादिशब्देनेन्द्रादयो ग्राह्य स्वर्गापगा च पावकश्च कृत्तिकाश्चेति द्वन्द्वसमासेऽल्पाच्तरत्वात्पावकशब्दस्य निपातः प्रसज्येतेति पूर्वरीतिरादृता । तान् कृताञ्जलीनत एव भूयोऽतिशय नमतो नमस्कुर्वतोऽपि हित्वा परित्यज्य तं सुतमाससाद प्राप । तथाहि । दानन्दवशात्का न माद्यत्युन्मत्ता न भवति । पुत्रोत्सवेन सर्वासामुन्मत्तत्वं तीति भावः ॥

**प्रमोदबाष्पाकुललोचना सा न तं ददर्श क्षणमग्रतोऽपि ।**
**परिस्पृशन्ती [4]करकुड्मलेन सुखान्तरं प्राप किमप्यपूर्वम् ॥ १८**

प्रमोदेति ॥ सा पार्वती । अग्रतः स्थितमपि तं पुत्रं क्षणं न ददर्श । प्रमोदबाष्पैरानन्दाश्रुभिराकुले व्याप्तत्वाद्दर्शनाशक्ते लोचने यस्याः । आन श्रुभिरन्धीभूतेत्यर्थः । अथ च कर एव कुड्मलं कलिका तेन परिस्पृशन्ती किमपि लोकोत्तरमपूर्वं । अभूतपूर्वमित्यर्थः । शाकपार्थिवादीनामुत्तरपदलो सुखान्तरम् । अन्यत्सुखमित्यर्थः । अन्तरशब्दोऽत्रोपमानाभावद्योतकः । प्राप्तवती ॥

**[5]सुविस्मयानन्दविकस्वरायाः शिशुर्गलद्बाष्पतरंगितायाः ।**
**विवृद्धवात्सल्यरसोत्तराया देव्या [6]दृशोर्गोचरतां जगाम ॥ १९**

सुविस्मयेति ॥ शिशुः कर्ता । सुतरां यौ विस्मयानन्दावाश्चर्यहर्षौ ता विकस्वरायाः प्रफुल्लीभूतायाः तथा गलद्बाष्पैस्तरंगितायाः संजाततरंगाया तारकादित्वादितच् । वपुषि गलद्भिर्बाष्पजलैरुद्भूतप्रवाहकल्लोलकलिताया इत्य तथा विवृद्धं यद्वात्सल्यं दयावत्त्वम् । पुत्रत्वादिति भावः । तत्र यो रसः प्री स उत्तरः प्रधानं यस्यास्तथाभूताया देव्याः पार्वत्याः संबन्धिनोर्दृशोर्विलोच योर्गोचरतां विषयतां जगाम प्राप । बाष्पनिर्मुक्ताभ्यां लोचनाभ्यां देवी त श्यदित्यर्थः ॥

**तमीक्षमाणा क्षणमीक्षणानां सहस्रमाप्तुं विनिमेषमैच्छत् ।**
**[7]सा नन्दनालोकनमङ्गलेषु क्षणंक्षणं [8]तृप्यति कस्य चेतः ॥ २० ॥**

---

१ भूम्ना; मूर्धा. २ सुकान्तम्. ३ कः. ४ करकुड्मलाभ्याम्. ५ संवि
६ दृशः. ७ न नन्दनालोकनमङ्गलेषु; सुनन्दनालोकनकौतुकेन. ८ हृष्यति.

तमिति ॥ तं बालं क्षणमीक्षमाणावलोकमाना सा देवी विनिमेषं निर्गत-मेषमीक्षणानां नेत्राणां सहस्रमाप्तुं मम सहस्रं नेत्राणि भवन्त्वित्यैच्छदियेष । भ्यां विलोचनाभ्यामाकण्ठदर्शनजननाभावादिति भावः । तथाहि । नन्दनस्या-कनान्येव मङ्गलानि तेषु विषये क्षणंक्षणम् । प्रतिक्षणमित्यर्थः । 'नित्यवी-प्सयोः' इति वीप्सायां द्विर्भावः । कस्य चेतस्तृप्यति तृप्तिं प्राप्नोति । अपि तु कस्यापीत्यर्थः ॥

विनम्रदेवासुरपृष्ठगाभ्यामादाय तं पाणिसरोरुहाभ्याम् ।
नवोदयं[1] पार्वणचन्द्रचारुं गौरी स्व[2]मुत्सङ्गतलं निनाय ॥ २१ ॥

विनम्रेति ॥ गौरी पार्वती । 'षिद्गौरादिभ्यश्च' इति ङीष् । नवोदयं नूतनो-दयम् । तत्कालजातमित्यर्थः । अत एव पार्वणः पर्वणि भवः । 'तत्र भवः' इत्यण् । चासौ चन्द्रश्च तद्वच्चारु मनोहरम् । चन्द्रोऽपि नवोदय इति ज्ञेयम् । तथाभूतं तनूजं पुत्रम् । कर्मभूतमित्यर्थः । आदाननयने उभे अपि प्रत्ययस्य कर्मत्वं विवेचनीयम् । विनम्राः पादप्रणता ये देवासुरास्तेषां पृष्ठेषु गच्छतः संचरतस्ता-भ्याम् । अनेन तेभ्योऽभयदानमुद्रा कृतेति व्यज्यते । पाणिसरोरुहाभ्यां करक-मलाभ्यामादाय गृहीत्वा स्वमात्मीयमुत्सङ्गतलं निनाय प्रापयामास । हस्ताभ्या-मुत्थाप्य स्वाङ्क आरोपितवतीत्यर्थः ॥

स्वमङ्कमारोप्य सुधानिधानमिवात्मनो नन्दनमिन्दुवक्त्रा ।
त[3]मेकमेषा जगदेक[4]वीरं बभूव पूज्या धुरि पुत्रिणीनाम् ॥ २२ ॥

स्वमिति ॥ इन्दुवक्त्रा चन्द्रमुख्येषा पार्वती । एकमद्वितीयं जगदेकवीरं जगत्स्वेकवीरं तमात्मनो नन्दनं पुत्रं सुधानिधानममृतपात्रमिव स्वमात्मीय-मङ्कमारोप्य संस्थाप्य पुत्रिणीनां पुत्रवतीनां धुर्यग्रभागे पूज्या पूजयितुं योग्या बभूव । एतत्पुत्रस्य सर्वासामपि पुत्रेभ्योऽधिकत्वादग्रपूज्यत्वमुचितमेवेति भावः ॥

निसर्गवात्सल्यरसौघसिक्ता सान्द्रप्रमोदामृतपूरपूर्णा ।
तमेकपुत्रं जगदेकमाता[5]भ्युत्सङ्गिनं प्रस्नविणी बभूव ॥ २३ ॥

निसर्गेति ॥ निसर्गेण स्वभावेन । न तूपाधिनेत्यर्थः । यो वात्सल्यरसो यावत्त्वरसस्तस्यौघेन सिक्ता प्लाविता । तत्रातिवात्सल्यवतीत्यर्थः । तथा सान्द्र-प्रमोदोऽतिशयहर्षः । स एवामृतं पीयूषं तस्य पूरेण प्रवाहेण पूर्णा भृता जगता-मेकाऽद्वितीया माता परिपोषिका देव्युत्सङ्गिनमधिश्रितोत्सङ्गं तमेकपुत्रमभि संमुखं प्रस्नविणी दुग्धस्राववती बभूव । पुत्रं दृष्ट्वा मातुः स्तनाभ्यां पयः पत-तीति युक्तमिति भावः ॥

---

1 नवोदयात्; महोदयात्. 2 तम्. 3 एकमेवम्; एकदेवम्. 4 एकदेवी.
5 सोत्सङ्गिनम्; अभ्युत्सङ्गितम्.

**अशेषलोकत्रयमातुरस्याः षाण्मातुरः स्तन्यसुधामधासीत् ।**
**सुरस्रवन्त्याः किल कृत्तिकाभिर्मुहुर्मुहुः सस्पृहमीक्ष्यमाणः ॥**

**अशेषेति** ॥ षाण्मातुरः षण्णां मातृणामपत्यं षाण्मातुरः कार्तिकेयः । षण्मातृशब्दात् 'मातुरुत्संख्या–'इत्यादिनाण् मातृशब्दस्योदादेशश्च । 'षाण्... शक्तिधरः कुमारः क्रौञ्चदारणः' इत्यमरः । सुरस्रवन्त्या देवनद्याः । ... इत्यर्थः । 'स्रवन्ती निम्नगापगा' इत्यमरः । तथा कृत्तिकाभिश्च सस्पृहं यथा तथा । 'इच्छा काङ्क्षा स्पृहेहा तृट्' इत्यमरः । अस्मदीयपयोधरस्त... पातायमिदानीमेतदीयस्तनपयः पिबन्पुनरप्यस्मदीयपयोधरपयोऽपि स्मरेदि... च्छासहितमित्यर्थः । मुहुर्मुहुरनुवेलमीक्ष्यमाणोऽवलोक्यमानः सन्नशेषं यल्लोकत्रयं तस्य मातुः पोषिण्या अस्या देव्याः स्तन्या स्तने भवा । 'शरीरा... वाद्यत्' इति यत् । सा चासौ सुधा च तामधासीत्पपौ । 'धेट् पाने' ... लुङ् । 'विभाषा घ्राधेट्–' इति सिज्लुङ्न ॥

**सुखाश्रुपूर्णेन[1] मृगाङ्कमौलेः कलत्रमेकेन मुखाम्बुजेन ।**
**तस्यैकनालोद्गत[2]पञ्चपद्मलक्ष्मीं क्रमात्षड्वदनीं चुचुम्ब[3] ॥ २५ ॥**

**सुखेति** ॥ मृगाङ्कमौलेर्हरस्य कलत्रं भार्या । 'कलत्रं श्रोणिभार्ययोः' ... मरः । एकनाल एककाण्ड उद्गतान्युदितानि यानि पञ्चपद्मानि तेषां लक्ष्मीः शोभेव लक्ष्मीः शोभा यस्यास्तथाभूतां तस्य कुमारस्य षण्णां वदनानां सम... षड्वदनीम् । 'द्विगोः' इति ङीप् । इह संख्यासादृश्यमन्तरा न विरोधः । सु... श्रुपूर्णेनानन्दाश्रुजलपरिपूरितेनैकेन मुखाम्बुजेन वदनकमलेन क्रमाद्यथा... चुचुम्ब स्पृष्टवती । अतिशयप्रेमवशादिति भावः ॥

**हैमी[4] फलं हेमगिरेर्लतेव विकस्वरं नाकनदीव पद्मम् ।**
**पूर्वेव दिङ्नूतनमिन्दुमाभात्तं पार्वती नन्दनमादधाना ॥ २६ ॥**

**हैमीति** ॥ तं नन्दनं तनयमादधाना सा पार्वती । फलं दधाना हेमगि... सुमेरोः संबन्धिनी । तदुत्पन्नेत्यर्थः । हैमी हेमविकारा । विकारार्थकेऽणि 'टिड्ढा...' इति ङीप् । लतेव । विकस्वरं प्रफुल्लं पद्मं कमलं दधाना नाकनदीव गङ्गे... नूतनं नवोदयमिन्दुं दधाना पूर्वा पूर्वसंज्ञिका दिगिव । आभाच्छुशुभे । मालोपमालंकारः ॥

**प्रीतात्मना सा प्रयतेन[5] दत्तहस्तावलम्बा शशिशेखरेण ।**
**कुमारमुत्सङ्गतले दधाना विमानमभ्रंलिहमारुरोह ॥ २७ ॥**

**प्रीतेति** ॥ कुमारं पुत्रमुत्सङ्गतले दधाना बिभ्रती सा देवी प्रीतात्मना प्रस... भूतमनसा प्रयतेन सावधानेन । न तु संभ्रमितेन । 'नयवर्त्मगाः प्रभवतां...

१ सुखास्रपूर्णेन. २ उद्गम. ३ चुचुम्बे. ४ हैमम्. ५ सुप्रयतेन.

यः' इति न्यायादिति भावः । तथाभूतेन शशिशेखरेण शिवेन दत्तहस्तावल-
सती । अत्यतिप्रेमभरादिति भावः । अभ्रंलिहमाकाशस्पृक् । 'वहाभ्रे लिहः'
खश् । विमानमारुरोहारूढा ॥

**श्वरोऽपि प्रमदप्ररूढरोमोद्गमो भूधरनन्दनायाः ।**
**ङ्कादुपादत्त तदङ्कतः[2] सा[3] तस्यास्तु सो[4]ऽप्यात्मजवत्सलत्वात् ॥ २८ ॥**

महेश्वर इति ॥ प्रमदेनानन्देन प्ररूढा रोमोद्गमा यस्य तथाभूतो महेश्वरो-
त्मजे पुत्रे वत्सलत्वाद्दयावत्त्वाद्धेतोर्भूधरनन्दनायाः पार्वत्या अङ्कादुत्सङ्गतस्तं
उपादत्ताग्रहीत् । अथ च तदङ्कतो हरोत्सङ्गात्सा देव्युपादत्त । अथ च सोऽपि
ऽपि तस्या देव्या अङ्कादुपादत्त । इत्यनुवेलमन्योन्यग्रहणं चक्रतुरित्यर्थः ॥

**नया नेत्रसुधै[6]कसत्रं पुत्रं पवित्रं सुतया तयाद्रेः ।**
**श्लिष्यमाणः शशिखण्डधारी विमानवेगेन गृहा[9]ञ्जगाम ॥ २९ ॥**

धानेति ॥ शशिखण्डधारी महेश्वरः । सुधाया अमृतस्यैकं केवलं सत्रं सदा-
म् । 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । नेत्रयोः संबन्धि
कसत्रं येन । नेत्रयोरमृतवत्सुखदातारमित्यर्थः । तथा पवित्रं पूतम् । 'पुवः
याम्' इति त्रचप्रत्ययः । तथाभूतं पुत्रं सुतं दधानया बिभ्रत्या तयाद्रेर्हिमा-
स्य सुतया कन्यया पार्वत्या कर्त्र्या । संश्लिष्यमाणः स्नेहवशादालिङ्ग्यमानः
विमानस्य वेगेन गृहाञ्जगाम प्रययौ । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः ॥

**धिष्ठितः स्फाटिकशैलशृङ्गे तुङ्गे निजं[11] धाम[12] निकामरम्यम् ।**
**त्सवाय प्र[13]मथप्रमुख्यान्पृ[14]थून्गणाञ्शंभुरथादिदेश ॥ ३० ॥**

अधिष्ठित इति ॥ अथानन्तरं शंभुर्महेश्वरस्तुङ्गे उन्नते स्फटिकमयः स्फटिको
शैलः कैलासस्तस्य शृङ्गं शिखरे । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । निका-
म्यमतिमनोहरं निजं स्वीयम् । 'स्वके नित्ये निजं त्रिषु' इत्यमरः । अधिष्ठितः
। 'अधिशीङ्—' इत्यादिनाधारस्य कर्मसंज्ञा । महोत्सवाय महोत्सवं कर्तुम् ।
र्थाच' इति चतुर्थी । पृथून्महतः प्रमथप्रमुख्यान्प्रमथादीन्गणानादिदेशाज्ञा-
मास ॥

**प्रमोदः प्र[16]गुणो गणानां गणः समग्रो वृषवाहनस्य ।**
**रीन्द्रपुत्र्यास्तनयस्य जन्मन्यथोत्सवं संववृते विधातुम् ॥ ३१ ॥**

पृथ्विति ॥ अथानन्तरं पृथुर्महान्प्रमोदो हर्षो यस्य । तथा प्रकृष्टा गुणा

---

१ अकाण्डमादत्त. २ तमङ्कतः. ३ सः. ४ सौम्यात्मज. ५ दत्त्वानया. ६ पात्रम्. ७ तथा. ८ मौलिः; वाही. ९ गृहम्. १० अधिष्ठित. ११ निजे. १२ धामनि कालरम्ये; धाम्नि निकामरम्ये. १३ प्रमथान्स नाथः. १४ महिम्ना ...दा; प्रथिम्नां पृथक्. १५ प्रमोद. १६ प्रगुणे.

यस्यैवंविधः समग्रः संपूर्णो गणानां गणः प्रमथादीनां समूहो वृषवाहन... श्वरस्य गिरीन्द्रपुत्र्याः पार्वत्याश्च तनयस्य जन्मन्युत्सवं विधातुं कर्तुं ... संवृत्तः। उद्युक्त इति यावत् ॥

इतः परं सप्तभिरुत्सवानेवाह—

**स्फुरन्मरीचिच्छुरिताम्बराणि संतानशाखिप्रसवाञ्चितानि।**
**उच्चिक्षिपुः[1] काञ्चनतोरणानि गणा वराणि[2] स्फटिकालयेषु॥**

**स्फुरदिति॥** गणाः प्रमथाः स्फटिकालयेषु स्फटिकगृहेषु स्फुरन्तो... माना या मरीचयः किरणास्ताभिश्छुरितं मिश्रीकृतमम्बरं यैस्तानि। सं... खिनां देववृक्षाणां प्रसवानि पत्राणि तैरञ्चितानि निर्मितानि वराणि श्रेष्ठानि... काञ्चनस्य विकारः काञ्चनं स्वर्णसूत्रं तदाधेयीभूतानि तोरणानि मालानि... च्चिक्षिपुरुच्चैश्चिक्षिपुः। बबन्धुरित्यर्थः॥

**दिक्षु प्रसर्पंस्तदधीश्वराणामथामराणामिव मध्यलोके[3]।**
**महोत्सवं शंसितुमाहतोऽन्यैर्दध्वान धीरः[4] पटहः पटीयान्॥**

**दिक्ष्विति॥** अथ तोरणोत्क्षेपानन्तरम्। दिक्षु दशसु दिशासु प्र... सिद्धो भवन्। आत्मनिनादेनेति शेषः। गम्यमानार्थत्वादप्रयोगः। तासा... मधीश्वराणां दिक्पालानाममराणां देवानामिन्द्रादीनां संबन्धि पटीयान्स... घोरनिनाद इति शेषः। धीरो गम्भीरः पटहोऽन्यैर्भृत्यभूतैरमरैराहतः... सन् मध्यश्चासौ लोकश्च मध्यलोकः। भूलोक इत्यर्थः। तस्मिन्। महोत्... अत्रापि भवत्पुत्रजन्मनास्माकं महानुत्सवो जात इति शंसितुमिव कथयितु... दध्वान ध्वनिं चकार। ध्वनिकरणे महोत्सवज्ञापनस्य फलत्वाभावेऽपि ... कल्पनात्फलोत्प्रेक्षा॥

**महोत्सवे तत्र समागतानां गन्धर्वविद्याधरसुन्दरीणाम्।**
**संभावितानां गिरिराजपुत्र्या गृहेऽभवन्मङ्गलगीतकानि॥ ३४**

**महेति॥** तत्र महोत्सवे समागतानां प्राप्तानामत एव गृहे गिरिरा... भवान्या संभावितानां पूजितानाम्। सत्कृतानामित्यर्थः। गन्धर्वा विद्या... देवविशेषास्तेषां सुन्दरीणां स्त्रीणां स्त्रीकर्तृकाणि मङ्गलगीतकानि मङ्गलप्र... गीतान्यभवन्। जातानीत्यर्थः॥

**सुमङ्गलोपायनपात्रहस्तास्तं मातरो मातृवदभ्युपेताः[5]।**
**विधाय दूर्वाक्षतकानि मूर्ध्नि निन्युः स्वमङ्कं गिरिजातनूजम्॥**

—**सुमङ्गलेति॥** सुमङ्गलानि यान्युपायनान्युपदासामग्र्यस्तेषां पात्र... हिता हस्ता यासामेवंभूताः सत्योऽभ्युपेताः। प्राप्ता मातरो ब्राह्म्याद्याः... शेषः। 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च त...

१ विच्चिक्षिपुः. २ चलानि. ३ नाकिलोके. ४ धीरम्. ५ पूर्ण. ६ अ...

ण्डा सप्त मातरः ॥' इत्यमरः । मूर्ध्नि शिरसि दूर्वाक्षतकानि निधाय प्य तं गिरिजातनूजं कुमारं मातृवत्पार्वतीवत्तत्तुल्यं तथा यथा स्वं स्वीयमङ्कं मुः। स्वाङ्के स्थापयामासुरित्यर्थः । मातृवदित्यनेन तासामप्यत्र महत्प्रेमा- ति दर्शितम् ॥

त्सु तूर्येषु सुमन्द्रमङ्क्यालिङ्ग्योर्ध्वकेष्वप्सरसो रसेन ।
धिबन्धं ननृतुः सुवृत्तगीतानुगं भावरसानुविद्धम् ॥ ३६ ॥

वनत्स्विति ॥ अङ्क्यालिङ्ग्योर्ध्वकेष्वेतत्संज्ञकेषु तूर्येषु वाद्येषु सुतरां मन्द्रं रं यथा तथा । 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः । ध्वनत्सु शब्दायमानेषु । अप्सरसो रम्भादिका रसेन स्नेहेन शोभना मधुराः संधयः स्वरसंध्या- येषु तथाभूता बन्धाः गीतप्रबन्धा यत्र यस्मिन्कर्मणि । सुवृत्तानि नच्छन्दांसि गीतानुगानि यत्र यस्मिन्कर्मणि । भावा रत्यादयो रसाः रादयस्तैरनुविद्धं व्याप्तं यत्र यस्मिन्कर्मणि यथा तथा ननृतुर्गात्राणि क्षिपुः ॥

ा ववुः सौख्यकराः प्रसेदुराशा विधूमो हुतभुग्दिदीपे ।
ान्यभूवन्विमलानि तत्रोत्सवेऽन्तरिक्षं प्रससाद सद्यः ॥ ३७ ॥

ाता इति ॥ तत्रोत्सवे । वाताः पवनाः सौख्यकरा ववुश्चेलुः । आशा ः प्रसेदुर्निर्मला बभूवुः । हुतभुगग्निर्विधूमो निर्धूमः सन्दिदीपे ज्वलति स्म । पी दीप्तौ' इति लिट् । जलानि विमलान्यभूवन् । अन्तरिक्षं व्योम सद्यः साद स्वच्छमभूत् । 'भवो हि लोकाभ्युदयाय तादृशाम्' इति न्यायादिति वः ॥

भीरशङ्खध्वनिमिश्रमुच्चैर्गृहोद्भवा दुन्दुभयः प्रणेदुः ।
ौकसां व्योम्नि विमानसंघा विमुच्य पुष्पप्रचयान्प्रसस्नुः ॥ ३८ ॥

गम्भीरेति ॥ गृहोद्भवा महेश्वरनिकेतनीया दुन्दुभयो गम्भीरो मन्द्रो यः ध्वनिः पाञ्चजन्यशब्दस्तेन मिश्रं यथा स्यात्तथोच्चैः प्रणेदुः । 'उपसर्गादस- सेऽपि' इति णत्वम् । अथ च दिवौकसां देवानां विमानसंघा व्योम्नि पुष्पप्र- ान्विमुच्य विकीर्य प्रसस्नुः । प्रतस्थिर इत्यर्थः ॥

ं महेशाद्रिसुतासुतस्य जन्मोत्सवे संमदयांचकार ।
राचरं विश्वमशेषमेतत्परं चकम्पे किल तारकश्रीः ॥ ३९ ॥

इत्थमिति ॥ महेशो हरः । अद्रिसुता पार्वती तस्याः सुतस्य पुत्रस्येत्थमेवं- ति जन्मोत्सवेऽशेषं समस्तं चराचरं स्थावरजंगममेतद्विश्वं जगत्संमदयांचकारो-

१ सुगन्धि. २ सुतन्त्रि; सवृत्ति. ३ शब्द. ४ विमुञ्चतां पुष्पचयान्; मुच्यते पुष्पचयान्. ५ जन्मोत्सवः.

न्मत्तीचकार । उन्मादसाधनैरिति शेषः । परं केवलं तारकस्य तारक श्रीर्लक्ष्मीश्चकम्पे । बिभायेत्यर्थः ॥

ततः कुमारः समुदां निदानैः स बाललीलाचरितैर्विचित्रैः ।
गिरीशगौर्योर्हृदयं जहार मुदे न हृद्या किमु बालकेलिः ॥ ४

तत इति ॥ ततोऽनन्तरं स कुमारो विचित्रैरनेकरूपैरत एव समुदां प्रीतीनां निदानैरादिकारणैः । 'निदानं त्वादिकारणम्' इत्यमरः । बाल चरितैः शिशुक्रीडाचरितैर्गिरीशगौर्योः शिवपार्वत्योः । अभ्यर्हितत्वाद्गि पूर्वनिपातः । हृदयं मनो जहार । प्रसादयामासेत्यर्थः । हृद्या मनोहरा लिर्मुदे न किमु भवति । किं तु भवत्येवेत्यर्थः ॥

महेश्वरः शैलसुता च हर्षात्सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि मुखानि सूनोर्मनोहराणि क्रमतश्चुचुम्ब ॥ ४१

महेश्वर इति ॥ महेश्वरो हरः शैलसुता पार्वती च हर्षाद्धेतोः सतृष्णं यथा तथाऽजातदन्तान्यनुद्भूतदशनानि मनोहराणि सूनोः कु मुखान्येकेन मुखेन गाढं दृढं यथा तथा क्रमतो यथाक्रमं चुचुम्ब पस्पर्श कर्तृद्वयस्य पार्थक्येन क्रियान्वयो विधेयः । अन्यथा द्विवचनापत्तिरिति चनीयम् ॥

क्वचित्स्खलद्भिः क्वचिदस्खलद्भिः क्वचित्प्रकम्पैः क्वचिदप्रकम्पैः
बालः स लीलाचलनप्रयोगैस्तयोर्मुदं वर्धयति स्म पित्रोः ॥ ४

क्वचिदिति ॥ स बालः कुमारः क्वचित्प्रदेशे स्खलद्भिः पतद्भिः क्वचि ऽस्खलद्भिः क्वचित्प्रदेशे प्रकम्पैः प्रकृष्टकम्पैः क्वचित्प्रदेशेऽप्रकम्पैर्लीलया ये प्रयोगास्तैर्निमित्तभूतैस्तयोः पित्रोर्जननीजनकयोः माता च पिता च पितरौ पित्रोः । 'पिता मात्रा' इत्येकशेषः । मुदं प्रीतिं वर्धयति स्म । 'कन्दलयां इत्यपि पाठः । अर्थः स एव ॥

अहेतुहासच्छुरिताननेन्दुर्गृहाङ्गणक्रीडनधूलिधूम्रः ।
मुहुर्वदन्किंचिदलक्षितार्थं मुदं तयोरङ्कगतस्ततान ॥ ४३ ॥

अहेत्विति ॥ गृहाङ्गणे यत्क्रीडनं तेन निमित्तेन धूलिभी रजोभि धूसरः सन्नङ्कगत उत्सङ्गं प्राप्तः कुमारः । अहेतुरकारणो यो हासो हसि च्छुरितो मिश्रित आननेन्दुर्मुखचन्द्रो यस्य । अलक्षितार्थमव्यक्तार्थं मुहु द्वदंस्तयोर्मुदं प्रीतिं ततान चकार ॥

गृह्णन्विषाणे हरवाहनस्य स्पृशन्नुमाकेसरिणं सलीलम् ।
स भृङ्गिणः सूक्ष्मतरं शिखाग्रं कर्षन्बभूव प्रमदाय पित्रोः ॥ ४

---

१ समुदः. २ स्ववाललीलाललितैः. ३ अपि. ४ सहर्षम्. ५ ६ क्रमशः. ७ चुचुम्बे. ८ सलीलम्. ९ गेहाङ्गण. १० केसरिणः

गृह्णन्निति ॥ स कुमारः । हरवाहनस्य वृषस्य विषाणे शृङ्गे गृह्णन् । करा-मिति शेषः । तथोमाकेसरिणं पार्वतीसिंहं सलीलमप्रयासं यथा तथा न् । तथा भृङ्गिणो गणस्य सूक्ष्मतरं शिखाग्रं कर्षन् । पित्रोर्जननीजनकयोः य हर्षाय बभूव । क्रियाग्रहणात्संप्रदानत्वम् ॥

नव द्वौ दश पञ्च सप्तेत्यजीगणन्नात्ममुखं प्रसार्य ।
कण्ठोरगदन्तपङ्क्तिं तदङ्कगः[2] शैशवमौग्ध्यमैशिः[3] ॥ ४५ ॥

क इति ॥ तस्य पितुरङ्कग उत्सङ्गगत ऐशिः । ईशस्यापत्यमित्यर्थः । 'अत इत्यपत्यार्थ इञ् । आत्ममुखं प्रसार्य महेशस्य ये कण्ठोरगाः सर्पास्तेषां पङ्क्तिम् । एको नव द्वौ दश पञ्च सप्तेत्यजीगणत्संख्यातवान् । यतः शैश-ग्ध्यं बालत्वनिमित्तमूढतां दधानः । अजीगणदिति गणयतेर्लुङ् । 'ई च ' इत्यभ्यासाकारस्येकारः ॥

र्दिकण्ठान्तकपालदाम्नोऽङ्गुलिं प्रवेश्याननकोटरेषु ।
तानुपात्तुं रभसी बभूव मुक्ताफलभ्रान्तिकरः[4] कुमारः ॥ ४६ ॥

कपर्दीति ॥ कुमारः कार्तिकेयः कपर्दिकण्ठान्ते शिवकण्ठमध्ये स्थितस्य लदाम्नो नृकरोटीस्रज आननकोटरेषु वदनकूपेषु । 'कोटरो नागरे कूपे रिण्युच्चवाटके' इति मेदिनी । अङ्गुलिं प्रवेश्य दन्तानुपात्तुं ग्रहीतुं रभसी सो वेगोऽस्यास्तीति तथोक्तः । 'रभसो वेगहर्षयोः' इति मेदिनी । बभूव । वेगेन गृह्णामीत्यैच्छदित्यर्थः । यतो मुक्ताफलभ्रान्तिकरो मौक्तिकभ्र-री ॥

ः शिरोऽन्तः सरितस्तरंगान्विगाह्य गाढं शिशिरात्रसेन ।
जातजाड्यं निजपाणिपद्ममतापयद्भालविलोचनाग्नौ ॥ ४७ ॥

शंभोरिति ॥ स कुमारः । शिशिराच्छीतलाच्छंभोः संबन्धिनः शिरसोऽन्त-ये स्थितायाः सरितो गङ्गायास्तरंगान्रसेन स्वादेन । स्वादोऽत्र त्वगिन्द्रियग्रा-ह्येन विवक्षितः । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तक्रादौ द्रव्य-रागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान्' इति मेदिनी । गाढं दृढम् । गाढबाढदृढानि च' इत्यमरः । विगाह्यावगाह्य । अत एव जातजाड्यं जातशी-तजडत्वं निजपाणिपद्मं स्वीयकरकमलं भाले यद्विलोचनं तत्र योऽग्निस्तत्राता-पयत् । अन्योऽपि शीतजडं हस्तमग्नौ तापयति तद्वदिति भावः ॥

कंचित्कलं भङ्गुरकंधरस्य[6] नमज्जटाजूटधरस्य शंभोः ।
लम्बमानं किल कौतुकेन चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥ ४८ ॥

---

१ मञ्जु. २ तदङ्गगः. ३ सुन्नभीतिः; मुग्धमैशिः. ४ करान्; धरः. ५ संजातजाड्यः. ६ भङ्गुरकण्ठरम्य.

किंचिदिति ॥ किंचिद्भङ्गुरा पतनशीला । 'भञ्जभासमिदो घु[रच्]' घुरच् 'चजोः' इति कुत्वम् । कंधरा ग्रीवा यस्य । बालत्वात् । स कुमा[रः] टाजूटस्य धरस्तस्य शंभोर्हरस्य प्रलम्बमानमाश्रयमाणं कलं मधुरं मुकु[ट] मुकुटचन्द्रशकलम् । 'भित्तं शकलखण्डे वा' इत्यमरः । कौतुकेनानन्दे[न] बहुकालं चुचुम्बे । पस्पर्शेत्यर्थः ॥

इत्थं शिशोः शैशव[1]केलिवृत्तैर्मनोभिरामैर्गिरिजागिरीशौ ।
मनो[2]विनोदैकरसप्रसक्तौ दिवानिशं नाविदतां कदाचित् ॥

इत्थमिति ॥ गिरिजागिरीशौ मनोभिरामैर्मनोरमैरित्थमेवंभूतैः कुमारस्य शैशवस्य बालस्य याः केलयस्तासां वृत्तैश्चरित्रैः । 'वृत्तं पद्ये त्रिष्वतीते दृढनिस्तले' इत्यमरः । मनसो विनोदस्तत्र य एको रसः प्री[तिः] प्रसक्तावासक्तौ सन्तौ कदाचिदपि दिवानिशमहर्निशं नाविदतां नावबुध्ये[ताम्] अगाधपुत्रोत्सवार्णवमग्नत्वादिति भावः ॥

इति बहुविधं बालक्रीडाविचित्रविचेष्टितं
ललितललितं सान्द्रानन्दं मनोहरमाचरन् ।
अलभत परां बुद्धिं[3] षष्ठे दिने नवयौवनं
स किल सकलं शास्त्रं शस्त्रं विवेद विभुर्यया[4] ॥

इतीति ॥ इत्येवंभूतं बहुविधं नानाप्रकारकं ललितललितं ललितप्रका[रम्] सुन्दरं सान्द्र आनन्दो येन । मनोहरं बालक्रीडाया विचित्रं विचेष्टितं चे[ष्टितं] चरित्रमिति यावत् । आचरन्विदधद्विभुः स कुमारः षष्ठे दिने परा[म्] बुद्धिं धिषणां नवयौवनं तारुण्यं चालभत प्राप । यया बुद्ध्या सकलं [शस्त्रं] शस्त्रम् । सकलानि शस्त्राणीत्यर्थः । शास्त्रम् । शास्त्राणीत्यर्थः । उभ[यत्र] जातावेकवचनम् । विवेद ज्ञातवान् । किलेति प्रसिद्धौ । प्राचीनसत्संस्का[रस्य] किमिवाशक्यमिति भावः । हरिणीच्छन्दः—'रसयुगहयैन्सौ म्रौ लो गो हरिणी तदा' इति लक्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
कुमारोत्पत्तिर्नामैकादशः सर्गः ॥

---

१ कैतव. २ मुदा. ३ वृद्धिम्. ४ विभोरपि.

# द्वादशः सर्गः ।

अथ प्रपेदे त्रिदशैरशेषैः क्रूरासुरोपप्लवदुःखितात्मा ।
पुलोमपुत्रीदयितोऽन्धकारिं पत्रीव तृष्णातुरितः पयोदम् ॥ १ ॥

अथेति ॥ अथानन्तरं क्रूरस्तीव्रो योऽसुरस्तारकसंज्ञकस्तस्य तत्कर्तृको य उप- उपद्रवः स्वस्थानोच्चाटनादिकस्तेन दुःखितः क्लिष्ट आत्मा यस्य तथाभूतः मपुत्र्याः शच्या दयितः प्रिय इन्द्रोऽशेषैः समस्तैस्त्रिदशैरात्मभृत्यभूतवृन्दा- सह तृष्णातुरितस्तृष्णया तृषया कर्त्र्या आतुरित आतुरीकृतः । 'तत्क- –' इति णिचि कृते 'णाविष्ठवत्–' इति टिलोपः । ततः कर्तरि क्तः । पत्री कः पयोदमिव । अन्धकारिं हरं प्रपेदे प्राप । अत्र पूर्णोपमालंकारः । सर्ग- न्यवृत्तमुपजातिः ॥

दृप्तारिसंत्रासखिलीकृतात्स कथंचिदम्भोदविहारमार्गात् ।
अवाततारभिगिरिं गिरीशगौरीपदन्यासविशुद्धमिन्द्रः ॥ २ ॥

दृप्तेति ॥ स इन्द्रः । दृप्तोऽभिमानी योऽरिस्तारकस्तस्माद्यः संत्रासो भयं तेन लीकृतादुरवगाह्यमानीकृतादम्भोदानां मेघानां विहारो यत्र स चासौ मार्गश्च । काशमित्यर्थः । तस्मात् गिरीशसहिता या गौरी भवानी तस्याः पदे चरणे न्यासो निधानं तेन विशुद्धं पवित्रं गिरिं कैलासमभि संमुखं कथंचित्केनापि रेण । कष्टेनेत्यर्थः । अवाततारोत्ततार । गिरीशगौरीति गिरीशस्याभ्यर्हित- द्वचोऽपि पूर्वनिपात इति वा ॥

संक्रन्दनः स्यन्दनतोऽवतीर्य मेघात्मनो मातलिदत्तहस्तः ।
पिनाकिनोऽथालयमुच्चचाल शुचौ पिपासाकुलितो यथाम्भः ३

संक्रन्दन इति ॥ अथानन्तरं संक्रन्दन इन्द्रः । 'संक्रन्दनो दुश्च्यवनः' मरः । मातलिना सारथिना दत्त आश्रयीकरणार्थमग्रेकृतो हस्तो यस्मै सः । लम्बितमातलिहस्तः सन्नित्यर्थः । मेघात्मनो मेघस्वरूपधारिणः । मेघरूपा- र्थः । स्यन्दनतो रथात् । पञ्चम्यास्तसिल् । अवतीर्योत्तीर्य । शुचौ ग्रीष्मे पासया तृष्णया तृषयेति यावत् । आकुलित आतुरः पुरुषोऽम्भो यथा मिव पिनाकिनो हरस्यालयं निलयमुच्चचाल । उद्दिश्य चलति स्मेत्यर्थः । काय्यनिलयालयाः' इत्यमरः । पिपासेति 'अ प्रत्ययात्' इत्यकारप्रत्यये प् । अत्रापि पूर्णोपमालंक्कारः । सामान्यधर्मस्त्वाकुलितत्वमित्याकुलितत्वे निमि- भूतौ पिपासोपप्लवौ । अनयोर्बिम्बप्रतिबिम्बभावेन सादृश्यम् ॥

---

१ उपद्रव. २ पक्षीव तृष्णाव्यथितः; तृष्णातुरश्चातकवत्. ३ दृप्तासुरत्रास. ४ गिरी- म्. ५ पिनाकिरम्यालयम्. ६ पिपासाकुलवज्जलौघम्.

इतस्ततोऽथ[1] प्रतिबिम्बभाजं विलोकमानः स्फटिकाद्रिभूमौ ।
आत्मानमप्येकमनेकधा स व्रजन्विभोरास्पदमाससाद ॥

इतस्तत इति ॥ अथानन्तरं व्रजन्गच्छन्स इन्द्रः स्फटिकाद्रिः कैलास भूमौ पृथिव्यामितस्ततो यत्र तत्र प्रतिबिम्बभाजं प्रतिबिम्बितमेकमप्य शरीरमनेकसंख्यं विलोकमानः पश्यन्सन् । विभोर्महेश्वरस्यास्पदं माससाद प्राप ॥

विचित्रचञ्चन्मणिभङ्गिसङ्गं[2] सौवर्णदण्डं दधतातिचण्डम् ।
स नन्दिनाधिष्ठितमध्यतिष्ठत्सौधाङ्गणद्वारमनङ्गशत्रोः ॥ ५

विचित्रमिति ॥ स इन्द्रः विचित्रा अनेकवर्णाश्चञ्चन्तो दीव्यमाना ये रत्नानि तेषां तत्कर्मिका या भङ्ग्यो रचनाविशेषास्तेषां सङ्गः संबन्धो अनेकवर्णमणिखचितमित्यर्थः । तथातिचण्डमतिभीषणं सौवर्णदण्डं सुवर्ण दधता बिभ्रता नन्दिना गणेनाधिष्ठितं द्वारपालतयाधिश्रितमनङ्गशत्रोः सौधस्य राजसदनसंबन्धिनोऽङ्गणस्याजिरस्य । 'अङ्गणं चत्वराजिरे' इत्य द्वारं प्रतीहारम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । अध्यतिष्ठदधित 'अधिशीङ्स्थासाम्-' इति कर्मत्वम् । अन्तः प्रवेशे भगवदाज्ञानुपालन न्द्वार एव तस्थावित्यर्थः ॥

ततः स[3] कक्षाहितहेमदण्डो नन्दी सुरेन्द्रं प्रतिपद्य सद्यः ।
प्रतोषयामास सु[4]गौरवेण गत्वा शशंस स्वयमीश्वरस्य ॥ ६

तत इति ॥ ततोऽनन्तरं स नन्दी गणः सुरेन्द्रमिन्द्रं सद्य आशु प्र समीपं प्राप्य सुतरां गौरवेणादरेण स्वागतादिना प्रतोषयामास संतोषित अथ च स्वयं गत्वा कक्षायां हर्म्यप्रकोष्ठे । 'कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां भवन्वने' इत्यमरः । आहितः स्थापितो हेमदण्डः सुवर्णवेत्रं येन त सन् । ईश्वरस्य । ईश्वरमित्यर्थः । संबन्धविवक्षायां षष्ठी । शशंस कथया ससुरो महेन्द्र आगत इति निवेदितवानित्यर्थः ॥

भ्रूसंज्ञयानेन[6] कृताभ्यनुज्ञः सुरेश्वरं तं जगदीश्वरेण ।
प्रवेशयामास सुरैः पुरोगः समं स नन्दी सदनं [5]सदस्य ॥

भ्रूसंज्ञयेति ॥ अनेन जगतामीश्वरेण महेश्वरेण भ्रूसंज्ञया । भ्रुकुटीचम संकेतेनेत्यर्थः । कृताभ्यनुज्ञः सुरेन्द्रागमनार्थं कृतानुशासनः स नन्दी पुरोगोऽग्रगामी सन् । तं सुरेश्वरमिन्द्रं सच्छोभनमस्य महेश्वरस्य सदनं सुरैः समं प्रवेशयामास । प्रवेशितवानित्यर्थः ॥

---

१ अपि. २ सङ्गि. ३ स्वकक्षा. ४ स गौरवेण. ५ सदोमण्डलम्. ६ तेन. ७

स चण्डिभृङ्गिप्रमुखैर्गरिष्ठैर्गणैरनेकैर्विविधस्वरूपैः ।
अधिष्ठितं संसदि रत्नमय्यां सहस्रनेत्रः शिवमालुलोके ॥ ८ ॥

स इति ॥ स सहस्रनेत्र इन्द्रो गरिष्ठैरतिशयेन गुरुभिः । 'प्रियस्थिर–'इत्या- दिना गुरुशब्दस्य गरादेशः । अनेकैर्बहुभिर्विविधस्वरूपैर्नानाकृतिभिश्चण्डिभृङ्गि- प्रमुखैर्गणै रत्नमय्यां रत्नप्रचुरायाम् । प्राचुर्ये मयट् । 'टिड्ढा–' इति ङीप् । संसदि सभायामधिष्ठितमुपविष्टं शिवमालुलोके ददर्श । इह 'अधिशीङ्–' इत्याधारस्य कर्मत्वप्रसङ्गो दुर्निवारः । अतएव रत्नमयीं सभां तामिति प्रतिष्ठितमिति वा पठनीयम् । यथास्थितविन्यासे दूषणोद्धारं सुधियो विभावयन्त्विति ॥

अथ त्रयोदशभिर्महेश्वरं विशिनष्टि—कपर्देत्यादिभिः ॥

कपर्दमुद्वद्धमहीनमूर्धरत्नांशुभिर्भासुरमुल्लसद्भिः ।
दधानमुच्चैस्तरमिद्धधातोः सुमेरुशृङ्गस्य समत्वमाप्तम् ॥ ९ ॥

तत्र कपर्दमिति ॥ किंभूतं शिवम् । उद्बद्धं भुजंगरज्जुभिर्दृढीकृतमुल्लसद्भिः समानैरत एवाहीनामिनाः स्वामिनस्तेषां वासुकिप्रभृतिमहासर्पाणां मूर्धसु शिरःसु यानि रत्नानि मणयस्तेषामंशुभिर्मयूखैर्भासुरं दीप्यमानम् । 'भञ्जभास–' इति घुरच् । उच्चैस्तरं महान्तं कपर्दं जटाजूटं दधानं बिभ्रतम् । 'कपर्दोऽस्य जटाजूटः' इत्यमरः । अत एव पुनः किंभूतम् । इद्धा प्रवृद्धा धातवो गैरिकादयो यत्र तथाभूतं यत्सुमेरोः स्वर्णाद्रेः शृङ्गं तस्य समत्वं सादृश्यमाप्तं प्राप्तम् ॥

बिभ्राणमुत्तुङ्गतरङ्गमालां गङ्गां जटाजूटतटं भजन्तीम् ।
गौरीं तदुत्सङ्गजुषं हसन्तीमिव स्वफेनैः शरदभ्रशुभ्रैः ॥ १० ॥

बिभ्राणमिति ॥ पुनः किंभूतम् । उत्तुङ्गोन्नतगामिनी । उत्प्लवनरीतिगामि- त्यर्थः । तथाभूता तरङ्गमाला कल्लोलपङ्क्तिर्यस्यास्तां जटाजूटस्य कपर्दस्य तटं समीपभागं भजन्तीम् । तत्र स्थितामित्यर्थः । तथा शरदभ्रवच्छरत्कालिकमेघ- वच्छुभ्रैर्विशदैः स्वफेनैस्तस्य हरस्योत्सङ्गं जुषते सेवते ताम् । हराङ्कस्थितामित्यर्थः । गौरीं पार्वतीं हसन्तीमिवोपहास्यं कुर्वतीमिव । सापत्न्यप्रयुक्तमनःसंतापं हासेन प्रकटीकुर्वाणामिवेत्युत्प्रेक्षा । गङ्गां बिभ्राणं दधानम् ॥

गङ्गातरङ्गप्रतिबिम्बितैः स्वैर्बहूभवन्तं शिरसा सुधांशुम् ।
चलन्मरीचिप्रचयैस्तुषारगौरैर्हिमद्योतितमुद्वहन्तम् ॥ ११ ॥

गङ्गेति ॥ पुनः किंभूतम् । गङ्गातरङ्गेषु जाह्नवीकल्लोलेषु प्रतिबिम्बितैः स्वैरात्मभिः । शरीरैरिति यावत् । बहूभवन्तमनेकीभवन्तं सुधांशुं चन्द्रं शिरसा

---

१ अधिष्ठितायां यदि. २ रत्नवत्याम्. ३ सहस्रलोकः. ४ कंदर्पम्. ५ ऊर्ध्वस्थम- हाहि; उद्बन्धमहाहि. ६ कपाल. ७ तलम्. ८ तरङ्गैः. ९ तैः. १० बभ्रूभवन्तम्. ११ तुषारगौरैर्दिग्द्योतितम्.

मूर्ध्नोद्वहन्तं दधानम् । अत एव पुनः किंभूतम् । तुषारवत्तुहिनवद्गौरैः 'गौरोऽरुणे सिते पीते' इति विश्वः । चलन्तः प्रसरन्तो ये मरीचिप्रचयाः संघातास्तैर्हिमद्योतितम् । द्योतते शोभते इति स द्योती । शोभावानित्यर्थः भावो द्योतिता । द्युतिरित्यर्थः । हिमवद्धिमसंघातवद्द्योतिता द्युतिर्यस्य पूर्वं धवलाङ्गमप्यनेकचन्द्रशोभाभिरधिकधवलीभूतमित्यर्थः ॥

भालस्थले लोचनमेधमानधामाधरीभूतरवीन्दुनेत्रम् ।
युगान्तकालोचितहव्यवाहं मीनध्वजप्लोषणमादधानम् ॥

भालस्थल इति ॥ भालस्थले ललाटदेश एधमानं वर्धमानं यद्धाम तेन निमित्तेनाधरीभूते परिभावमुपागते रवीन्दू एव नेत्रे यस्मात् । मधिकतेजस्कमित्यर्थः । यद्वा । एधमानधाम अधरीभूतं चेति पदद्वयम् । व्याख्येयम् । एधमानं वर्धमानं धाम तेजो यस्य । वर्धिष्णुतेजस्कमि तथोन्नतानतस्थानभेदेनाधरीभूते भालस्थनेत्रापेक्षया नीचैर्भूते रवीन्दू एव यस्य । तथा युगान्तकाले प्रलयकाल उचितं परिचितं हव्यवाहमग्नि प्रलयकालिकानलरूपमित्यर्थः । अत एव मीनध्वजस्य कामस्य प्लोषणं दाह 'प्लुष दाहे' 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । एवंभूतं लोचनम नम् । बिभ्राणमित्यर्थः ॥

महार्हरत्नाञ्चितयोरुदारं स्फुरत्प्रभामण्डलयोः समन्तात् ।
कर्णस्थिताभ्यां शशिभास्कराभ्यामुपासितं कुण्डलयोश्छलेन ॥

महेति ॥ पुनः किंभूतम् । महार्हाणि बहुमूल्यानि यानि रत्नानि मणि ञ्चितयोः खचितयोरत एव समन्तात्सर्वत उदारमधिकं यथा स्यात्तथा स्फुर रत्प्रभामण्डलं कान्तिवितानं ययोस्तथाभूतयोः कुण्डलयोः कर्णभूषणयोः कैतवेन कर्णयोः श्रवणयोः स्थिताभ्यामुपविष्टाभ्यां शशिभास्कराभ्यां चन्द्र भ्यामुपासितं सेवितम् । कुण्डलविषये कैतवात्सूर्याचन्द्रमसोरारोप्यमाण द्रूप्यरूपकं कैतवापह्नुतिश्चेत्युभयोः संसृष्टिः ॥

स्वबद्धया कण्ठिकयेव नीलमाणिक्यमय्या कुतुकेन गौर्याः ।
नीलस्य कण्ठस्य परिस्फुरन्त्या कान्त्या महत्या सुविराजमानम् ॥

स्वबद्धयेति ॥ पुनः किंभूतम् । परिस्फुरन्त्या परितः प्रसरन्त्या नी श्यामस्य कण्ठस्यात्मगलस्य महत्या कान्त्या प्रभया सुतरां विराजमानं शोभ नम् । कयेवेत्युत्प्रेक्षते—कुतुकेन कौतुकेन स्वस्मिन्नात्मीयकण्ठे बद्धया नि नीलमाणिक्यमय्या नीलरत्नविशेषप्रचुरया गौर्याः कण्ठिकयेव कण्ठभूष 'कण्ठिका कण्ठभूषणम्' इति मेदिनी ॥

---

१ एधमानम्. २ उदार. ३ सुबुद्धया. ४ गौर्या. ५ च विराज

कालार्दितानां त्रिदशासुराणां चितारजोभिः परिपाण्डुराङ्गम्[1] ।
महन्महेभाजिनमुद्गता[2]भ्रप्रालेयशैलश्रियमुद्वहन्तम् ॥ १५ ॥

कालेति ॥ पुनः किंभूतम् । कालेनावसानकालिकमृत्युनार्दितानां पीडिता-
म् । मृतानामिति यावत् । त्रिदशासुराणां देवदैत्यानां चिताया मृतमण्डपस्य
ोभिर्भस्मभिः परितः पाण्डुरं शुभ्रमङ्गं यस्य । विहितमृतमण्डपभस्मोद्धूलन-
त्यर्थः । इह देवानाममरत्वाभावो दुर्घटः । तत्र ज्ञानाभावेन निहितपदस्य
ः प्रसाद इत्याहुः । केचित्पुनः 'मनुजासुराणाम्' इति पाठान्तरं कल्पयन्ति ।
यद्यपि कालार्दितानामिति विशेषणमुभयविशेष्यान्वयित्वेन द्वितीयविशेष्ये
क्षितमप्यकालार्दितत्वविशेषणस्य व्यभिचारनियमने नियमनान्निषिद्धं भवति,
ापि प्रथमविशेष्ये लोकोपकारकतापक्षेऽपि व्यभिचरितार्थसंभवेन विशेषणानु-
ोगात्संभवप्रयुक्तप्रधानभूतद्वितीयविशेष्यसंबन्धेन प्रथमविशेष्यान्वयित्वनि-
ः । एवं चोपकार्यमनुजसहचरितत्वेन लोकोपकारकतापक्षावलम्बेन च
क्षितार्थस्याविवक्षितत्वात् । संहारकतापक्षे तु प्रायो गतिरन्वेषणीयेत्यलम् ।
ा महत्परिणाहि महेभस्य महतो गजस्याजिनं चर्म परिदधानमिति पूर्वेण
न्धः । अत एवोद्गतमुदितमभ्रं मेघो यत्र स चासौ प्रालेयशैलो हिमवांस्तस्य
यं शोभामुद्वहन्तं दधानम् । निदर्शनालंकारः ॥

पाणिस्थितब्रह्मकपालपात्रं वैकुण्ठ[3]भाजापि निषेव्यमाणम् ।
नरास्थिखण्डाभरणं[4] रणान्तमूलं त्रिशूलं कलयन्तमुच्चैः ॥ १६ ॥

पाणीति ॥ पुनः किंभूतम् । पाणौ स्थितं ब्रह्मकपालमेव पात्रं यस्य ।
णिना ब्रह्मकरोटीपात्रं बिभ्राणमित्यर्थः । पुनः किंभूतम् । वैकुण्ठभाजापि
णापि निषेव्यमाणम् । सेवनमत्र कादाचित्कं नत्विदानींतनमेव त्रयाणामभे-
ेष्टार्थकरत्वात् । एकैव मूर्तिरिति सप्तमसर्गोक्तेरिति भावः । हरापेक्षया
रपि लघुत्वसंभावनया संभवत्येव कदाचित्सेवनम् । तथा नराणामस्थिखण्डा-
वाभरणानि यस्य । हिंसाकालसंलग्नस्वशूलत्रितयास्थिकमित्यर्थः । तथा रणे
ऽन्तो रिपूणामवसानं तस्य । 'मूलं कारणमूल्ययोः' इति मेदिनी । उच्चैर्महत्त्रि-
लमायुधविशेषं कलयन्तं दधानम् ॥

पुरातनीं ब्रह्मकपालमालां कण्ठे वहन्तं पुनराश्वसन्तीम् ।
उद्गीतवेदां[5] मुकुटेन्दुवर्षत्सुधाभरौघा[6]प्लवलब्धसंज्ञाम् ॥ १७ ॥

पुरातनीमिति ॥ पुनः किंभूतम् । मुकुटे य इन्दुश्चन्द्रस्तस्माद्वर्षन्गलन्यः
धाभरौघोऽमृतसमूहप्रवाहस्तत्र य आप्लवः स्नानं तेन निमित्तेन लब्धसंज्ञां
ासचेतनामत एवाश्वसन्तीमुज्जीवन्तीम् । अत एव पुनर्भूयोऽप्युद्गीतवेदां

---

१ परिपाण्डुरागम्. २ उन्नत. ३ वैकुण्ठकङ्कालकरालकायम्. ४ सुरास्थिकण्ठाभर-
णः; सुरास्थिखण्डाभरणम्. ५ उद्गीर्णवेदाम्; उदीर्णवेदाम्. ६ सुधौघसंप्लावन.

पठितश्रुतिकाम् । ब्रह्मत्वादिति भावः । पुरातनीं प्राक्तनीम् । 'सायं इत्यादिना पुराव्ययाट्ट्युतुटौ । टित्वान्ङीप् । ब्रह्मकपालानां मालां स्र गले वहन्तम् । दधानमित्यर्थः ॥

सलीलमङ्कस्थितया गिरीन्द्रपुत्र्या नवाष्टापदवल्लिभासा ।
विराजमानं शरदभ्रखण्डं परिस्फुरन्त्याचिररोचिषेव ॥ १

सलीलमिति ॥ पुनः किंभूतम् । नवं यदष्टापदं हेम । 'हेमन्यष्टाप इति मेदिनी । तस्य वल्ली लता । 'वल्ली तु व्रततिर्लता' इत्यमरः । प्रकृ वल्लीशब्दस्य ह्रस्वत्वमेव । 'कृदिकारादक्तिनः' इति दीर्घत्वम् । तस्या भ भा यस्याः । तद्वच्छोभमानयेत्यर्थः । तथा सलीलं सक्रीडमङ्कस्थितयाङ्कमा गिरीन्द्रपुत्र्या हिमालयकन्यया परितः स्फुरन्त्या प्रसरन्त्याचिररोचिषा चञ्च विद्युता शरदभ्रस्य शरत्कालिकमेघस्य खण्डं शकलमिव विराजमानं शो नम् । महेश्वरस्य शुभ्रत्वं भस्मोद्धूलनादिति विवेचनीयम् । खण्डोप शुभ्रत्वमात्रतात्पर्येण न विरुध्यते ॥

दृप्तान्धकप्राणहरं पिनाकं महासुरस्त्रीविधवत्वहेतुम् ।
करेण गृह्णन्तमगृह्यमन्यैः पुरा स्मरप्लोषणकेलिकारम् ॥ १

दृप्तेति ॥ दृप्तोऽभिमानी योऽन्धकोऽन्धकासुरस्तस्य प्राणानां हरमपहार तद्धननसाधनमित्यर्थः । तथा महासुरास्त्रिपुरादयस्तेषां याः स्त्रियस्तासां वि वैधव्यम् । मृतभर्तृकत्वमिति यावत् । तस्य हेतुं कारणम् । महासुरवि मित्यर्थः । तथा पुरा पूर्वं स्मरस्य कामस्य प्लोषणं दाहं केल्यानायासेन का तथा । अन्यैः शिवातिरिक्तैरगृह्यं ग्रहीतुमशक्यं पिनाकं धनुः करेण पा गृह्णन्तं दधानम् ॥

भद्रासनं काञ्चनपादपीठं महार्हमाणिक्यविभङ्गिचित्रम् ।
अधिष्ठितं चन्द्रमरीचिगौरैरुद्वीज्यमानं चमरैर्गणाभ्याम् ॥

भद्रासनमिति ॥ महार्हाणां बहुमूल्यानां माणिक्यानां विभङ्गिभी र भिश्चित्रं विचित्रम् । भद्रं शुभमासनं पट्टादिनिर्मितं यत्र तादृशम् । बध्न पदमध्याहार्यम् । भद्रासनमासनविशेषमिति केचिद्व्याचक्षते, तत्त्वध्याहार द्योगाभ्याससमयाभावेन तदसंभवाच्चोपेक्षणीयमिति । काञ्चनपादपीठं सौ सिंहासनमधिष्ठितम् । तत्रोपविष्टमित्यर्थः । 'अधिशीङ्स्थासाम्-' इति कर्मत्व पुनश्च । चन्द्रमरीचिवद्गौरैर्विशदैश्चमरैः कृत्वा गणाभ्यां कर्तृभ्यामुद्वीज प्रेङ्ख्यमानम् । कर्तृद्वित्वे चमरबहुत्वं प्रतिक्षणनूतनग्रहणात्संगमनीयम् ॥

---

१ तुल्यभासा. २ गजासुर. ३ विधवात्वहेतुम्. ४ असह्यशूलम्. ५ सुर. ६ मह

शस्त्रास्त्रविद्याभ्यसनै[1]कसक्ते सविस्मयैरेत्य गणैः सुदृष्टे[2] ।
नीराज्यमाने[3] स्फटिकाचलेन[4] सानन्दनिर्दिष्टदृशं कुमारे ॥२१॥

शस्त्रास्त्रेति ॥ शस्त्राणि धनुरादीनि अस्त्राणि मोहनादीनि तान्येव द्यास्तासामभ्यसन एवैकं केवलं सक्तेऽनुरक्ते । तथा गणैः प्रमथप्रभृतिभिरेत्य समीपं प्राप्य सविस्मयैः साश्चर्यैः सद्भिः सुतरां दृष्टे । साभिलाषमवलोकित र्थः । तथा स्फटिकाचलेन कैलासेन । जङ्गमात्मकेन सतेति शेषः । नीराज्य-ने । आर्तिक्येनेति शेषः । एवंभूते कुमारे पुत्रे सानन्दं सामोदं निर्दिष्टा हिता दृग्दृष्टिर्येन तम् । सानन्दतया कुमारमवलोकयन्तमित्यर्थः ॥

तथाविधं शैलसुताधिनाथं पुलोमपुत्रीदयितो निरीक्ष्य ।
आसीत्क्षणं क्षोभपरो नु[5] कस्य मनो न हि क्षुभ्यति धामधाम्नि २२

तथाविधमिति ॥ पुलोमपुत्री पुलोमजा शचीति यावत् । 'पुलोमजा शची-द्राणी' इत्यमरः । तस्या दयितः प्रियः पुरंदरः तथाविधं पूर्वोक्तविशेषणविशिष्टं लसुतायाः पार्वत्या अधिनाथं महेश्वरं निरीक्ष्य क्षणं मुहूर्तं क्षोभे चित्तसंचलने र आसक्तः संचलनेन व्याकुल आसीत् । ननु महेश्वरदर्शनेन कथं व्याकुल सीदित्यर्थान्तरं न्यस्यति—हि यतः धामधाम्नि तेजोराशौ कस्य मनश्चेतो न भ्यति क्षोभं प्राप्नोति । अपि तु सर्वस्यापीत्यर्थः ॥

विकस्वराम्भोजवनश्रिया तं दृशां सहस्रेण निरीक्षमाणः[6] ।
रोमालिभिः[7] स्वर्गपतिर्बभासे पुष्पोत्कराकीर्ण इवाम्रशाखी[8] २३

विकस्वरेति ॥ स्वर्गपतिर्महेन्द्रः । विकस्वराणां प्रफुल्लानामम्भोजानां कम-लानां वनस्य श्रीरिव श्रीः शोभा यस्य तथाभूतेन दृशां नेत्राणां सहस्रेण तं हेश्वरं निरीक्षमाणो विलोकमानः सन् । रोम्णामालिभिः समूहैर्निमित्तैः ष्पाणामुत्करेण समूहेनाकीर्ण आसमन्ताद्व्याप्त आम्रशाख्याम्रवृक्ष इव बभासे शुभे । उपमालंकारः ॥

दृष्ट्वा सहस्रेण दृशां महेशमभूत्कृतार्थोऽतितरां[9] महेन्द्रः ।
सर्वाङ्गजातं[10] तदथो विरूप[11]मिव[12] प्रिया[13]कोपकरं विवेद ॥ २४ ॥

दृष्ट्वेति ॥ दृशां सहस्रेण महेशं शिवं दृष्ट्वा महेन्द्र इन्द्रोऽतितरामतिशयं कृतार्थः कृतकृत्योऽभूत् । अथोऽनन्तरं तत्सर्वाङ्गजातं सर्वेष्वङ्गेषु भूतं विरूपं

---

१ अवसक्ते; एकसक्तैः. २ सुदृष्टम्. ३ संवीज्यमाने. ४ अम्बिकयाञ्चलेन. ५ अथ कस्य; अत्र कस्य; अन्तकस्य. ६ निरीक्ष्यमाणः. ७ सर्वाङ्गनेत्रो द्युपतिः; सर्वाङ्गजेन द्युपतिः. ८ अग्रशाखी. ९ खलु तेन शक्रः. १० सर्वाङ्गजातं विकलम्; सर्वाङ्गजानेत्रदलम्. ११ विपूरम्. १२ पुरा. १३ प्रियाल्लोकपरम्; प्रियाकोपपरः.

रोमाञ्चजनितवैरूप्यं प्रियायाः शच्याः कोपकरं क्रोधविधायीव विवेर
सपत्नीसंबन्धजनितत्वशङ्काकुलत्वादिति भावः ॥

ततः कुमारं कनकाद्रिसारं पुरंदरः प्रेक्ष्य धृतास्त्रशस्त्रम् ।
महेश्वरोपान्तिकवर्तमानं शत्रोर्जयाशां मनसा बबन्ध ॥ २५

तत इति ॥ ततोऽनन्तरम् । पुरंदर इन्द्रः कनकाद्रेः सुमेरोः सार इव वीर्यं यस्य तम् । महाबलीयांसमित्यर्थः । अत एव धृतान्यस्त्राणि शस्त्रा येन तथा महेश्वरस्य पितुरुपान्तिके समीपे वर्तमानं तिष्ठन्तं कुमारं प्रेक्ष्य क्य शत्रोस्तारकस्य जय आशां मनसा बबन्ध धृतवान् । एवंभूतोऽयं मच्छत्रूञ्जेष्यत्येवेति पुरंदरस्य प्रतीतिरभूदित्यर्थः ॥

अथ युग्मेनाह—

श्रीनीलकण्ठ द्युपतिः पुरोऽस्ति त्वयि[1] प्रणामावसरं प्रतीच्छ[2]
सहस्रनेत्रे[3]ऽत्र भव त्रिनेत्र दृष्ट्या[4] प्रसादप्रगुणो[5] महेश[6] ॥ २
इति प्रबद्धाञ्जलिरेत्य नन्दी निधाय कक्षामभि हेमवेत्रम्[7] ।
प्रसादपात्रं पुरतो [8]भविष्णुरथ स्मराराति[9]मुवाच वाचम् ॥ २

श्रीति । इतीति ॥ अथ नन्दी गणः पुरतः सर्वेभ्योऽग्रगामितयेन्द्र ष्ठितकक्षामारभ्य महेश्वराधिश्रितमन्दिरपर्यन्तमहंपूर्विकया बहुविधग गणावृते मध्यगतदेशेऽहंपूर्विकावलम्बनेनेति तात्पर्यार्थः । प्रसादस्येन्द्राग चेदनामुदन्धेनान्धकारिणा दत्तपारितोषिकरूपस्य पात्रं योग्यो भविष्णुर्भ मिच्छुः सन्नेत्य । अन्तरिति शेषः । तथा कक्षां द्वारमभि संमुखं हेमवेत्रं र्णयष्टिकां निधाय संस्थाप्य । इयं वेत्रधारिणो रीतिर्वर्णिता । प्रबद्धाञ सन्स्मराराातिं महेश्वरम् । भो श्रीयुक्तनीलकण्ठ सपार्वतीक महेश्वर । द्युपति न्द्रस्त्वयि भवति प्रणामावसरं प्रणतिसमयं प्रतीच्छन्प्रतीक्षमाणः पुरोऽग्रे विद्यते । महेश्वरप्रणिनंसुः सन्बहिरास्त इत्यर्थः । अतो हे त्रिनेत्र भो म अत्र पुरोवर्तिनि सहस्रनेत्र इन्द्रे दृष्ट्या दर्शनेन प्रसादप्रगुणः प्रसादविधा कूलो भव । आत्मीयदर्शनरूपं प्रसादं तदुपरि कुर्वित्यर्थः । इत्येवंभूतां वा वाचोक्तवान् ॥

पुरा[1] सुरेन्द्रं[10] सुरसङ्घसेव्यं त्रिलोक[11]सेव्यस्त्रिपुरासुरारिः ।
प्रीत्या सुधा[12]सारनिधारिणेव ततोऽनुजग्राह विलोकनेन ॥ २८

---

१ तव. २ च पृच्छन्. ३ सहस्रनेत्रोऽत्र भव त्रिनेत्र; सहस्रनेत्रं प्र त्रिनेत्र. ४ दृष्ट्वा. ५ प्रवणः. ६ महेशः. ७ हेमदण्डम्. ८ भविष्णुमध्यन्धकारादि भविष्णुरधिस्मराराातिम्. ९ मुदा. १० असुरारिम्. ११ त्रैलोक्यसेव्यः; त्रैलोकसे
१२ सुधासारविसारिणा; सुधासारविधारिणा.

पुरेति ॥ ततोऽनन्तरं निवेदनानन्तरं त्रिलोकसेव्यस्त्रैलोक्यपूजनीयस्त्रिपुरास्यारिः शत्रुर्महेश्वरः सुरसङ्घेन देवसमूहेन सेव्यं पूज्यं सुरेन्द्रमिन्द्रं पुरा प्रथमं प्रीत्या निमित्तेन सुधासारम्। अमृततुल्यमित्यर्थः। निधारयति नितरां धारां धारारूपं करोति । 'तत्करोति–' इति करोत्यर्थे णिच्। सुधासारधारां करोतीत्यर्थः । एवंभूतेनेव विलोकनेव दर्शनेनानुजग्राह । तदुपर्यनुग्रहमकार्षीदित्यर्थः । स्वामिनां प्रसादपूर्वकमवलोकनमेव भृत्यानामुपरि महाननुग्रह इति भावः ॥

**किरीटकोटिच्युतपारिजातपुष्पो[1]त्करेणानमितेन मूर्ध्ना ।**
**स्वर्गै[2]कवन्द्यो जगदे[3]कवन्द्यं तं देवदेवं प्रणनाम देवः ॥ २९ ॥**

किरीटेति ॥ स्वर्ग एवैकं केवलं वन्द्यो नमस्करणीयो देव इन्द्र। आनमितेनात एव किरीटकोट्याश्च्युतोऽधःपतितः पारिजातपुष्पाणां मन्दारकुसुमानामुत्करः समूहो यस्मात्तथाभूतेन मूर्ध्ना शिरसा जगतामेकमेव वन्द्यं नमस्करणीयम्। एतत्सदृशो जगतां वन्द्यतयान्यो न विद्यत इत्यर्थः। तं देवदेवं महेश्वरं प्रणनाम नमश्चक्रे ॥

**अनेकलोकैकनमस्क्रियार्हं महेश्वरं तं त्रिदशे[4]श्वरः सः ।**
**भक्त्या नमस्कृत्य कृतार्थतायाः पात्रं पवित्रं परमं बभूव ॥३०॥**

अनेकेति ॥ स त्रिदशेश्वर इन्द्रो भक्त्या। भक्तिपूर्वकमित्यर्थः। अनेन त्रयो लोकास्तेषामेक एव नमस्क्रियायामर्ह उचितस्तथोक्तं तं महेश्वरं नमस्कृत्य 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तेर्द्वितीया। परममत्यन्तं पवित्रं विशदं कृतार्थतायाः कृतकृत्यत्वस्य पात्रं स्थानं बभूव। महेन्द्रो महेश्वरं प्रणम्य कृतकृत्योऽभूदित्यर्थः ॥

**सुभक्तिभाजामधि पाद[5]पीठं प्रान्तक्षितिं नम्रतरैः शिरोभिः ।**
**ततः प्रणेमुः पुरतो गणा[6]नां गणाः सुरा[7]णां क्रमतः पुरारिम् ३१**

सुभक्तीति ॥ ततोऽनन्तरम्। सुभक्तिं भजन्ति तेषाम्। 'भजो ण्विः' इति ण्विः। सुराणामिन्द्रातिरिक्तानां सुराणां गणाः। गणानां प्रथमप्रभृतीनां पुरतोऽग्रे । अनेन मर्यादातिरिक्तकरणस्य दुर्विधेयत्वमुक्तम्। पादपीठस्य चरणाधारपीठविशेषस्य प्रान्तक्षितिः समीपभूमिस्तामध्यधिकृत्य। आधारभूतां कृत्वेत्यर्थः। अत्राधिशब्देनाधिकरणमाधारः। स चौपश्लेषिकः। अव्ययानामाकृतिगणत्वादधिशब्दोऽत्राधिकरणपर्यायोऽव्ययम् । अन्यथामन्तत्वमन्वेषणीयम्। नम्रतरैः शिरोभिः पुरारिं महेश्वरं क्रमतः क्रमेण प्रणेमुर्नमश्चक्रुः।

---

१ पुष्पेण भक्त्या. २ स्वर्गौकवन्द्यः. ३ जगदेकदेवं ननाम देवः स सहस्रनेत्रः. ४ त्रिदिवेश्वरः. ५ पादपीठं प्रीताक्षिभिः; पादपीठं प्रान्तीकृतैः. ६ सुराणाम्. ७ सशक्राः क्रमत स्सरारिम्; सुरेन्द्रक्रमतः पुरारिम्.

गणोपनीते प्रभुणोप[1]दिष्टः शु[2]भासने हेममये पुरस्तात्।
प्रापोपविश्य प्र[3]मुदं सुरेन्द्रः प्र[4]भुप्रसादो हि मुदे न कस्य॥

गणेति ॥ सुरेन्द्रः गणेन केनचिदुपनीते। प्रभुशासनेनेति शेषः। हेममये सुवर्णमये शुभासने प्रभुणा हरेणोपदिष्ट आरोढुमाज्ञप्तः सन्। त्वप्रभोरग्रत एवोपविश्य स्थित्वा प्रकृष्टां मुदं हर्षं प्राप। तथा हि। प्रभु प्रभुकर्तृकोऽनुग्रहः कस्यानुगस्य मुदे प्रीत्यै न भवति। अपि तु सर्वस्य काक्वा व्याख्येयम् ॥

क्रमेण चा[5]न्येऽपि विलोकनेन संभाविताः सस्मितमीश्वरेण।
उ[6]पाविशंस्तोषविशेषमाप्ता दृग्गोचरे तस्य सुरा[7]ः समग्राः॥

क्रमेणेति ॥ ईश्वरेण महेश्वरेण क्रमेणानुक्रमतोऽन्येऽपि च समग्राः सस्मितं सप्रसादव्यञ्जकहासं यथा तथा विलोकनेन संभाविता आदृता एव तोषविशेषं संतोषाधिक्यमाप्ताः प्राप्ताः सन्तस्तस्य प्रभोर्दृग्गोचरे विषय उपाविशंस्तस्थुः। यथा युगपदेव भगवान्सर्वानवलोकयेत्तथैव तस्थुरित्यर्थः ॥

अथाह देवो बलवैरिमुख्यान्गीर्वा[8]णवर्गान्करुणार्द्रचेताः।
कृताञ्जलीकानसुरा[9]भिभूतान्ध्वस्त[10]श्रियः श्रा[11]न्तमुखानवेक्ष्य॥

अथेति ॥ अथ देवो हरो बलवैरीन्द्रः स मुख्यो येषु तथाभूतान्गीर्वाणवर्गान्देवसमूहान्। असुरेण तारकेणाभिभूताञ्जितानत एव ध्वस्तश्रियो नष्टलक्ष्मीकानत एव श्रान्तं खिन्नं मुखं येषाम्। नष्टमुखतेजस इत्यर्थः। अत एव कष्टनिवृत्त्यर्थं कृतोऽञ्जलिर्यैस्तानवेक्ष्य दृष्ट्वा करुणयार्द्रं स्निग्धं चेतो यस्य तथाभूतः सन्नाहोवाच ॥

अहो बतानन्तपराक्रमाणां दिवौ[12]कसो वीरवरायुधानाम्।
हिमोदबिन्दुग्लपितस्य किं यः पद्मस्य दैन्यं दधते मुखानि॥

अहो इति ॥ अहोशब्दोऽत्र हेशब्दपर्यायः। हे दिवौकसो देवाः, अनन्तपराक्रमाणामपारविक्रमाणाम्। तथा वीरान्वृणतेऽभिलषन्ति। वीरहस्तस्पर्शशालीनीत्यर्थः। एवंभूतान्यायुधानि येषां तथाभूतानां वो युष्माकं मुखानि हिमस्य यदुदमुदकं तस्य यो बिन्दुस्तेन ग्लपितस्य क्षीणहर्षीकृतस्य। 'उदकस्योदः संज्ञायाम्' इत्युदादेशः। तथाभूतस्य पद्मस्य दैन्यं दीनतां किं कुतो हेतोः बिभ्रति। यूयं कुतः कारणतो भ्रष्टलक्ष्मीका इति प्रश्नाशयः ॥

---

१ उपदिष्टे. २ नृपासने; ध्रुवासने. ३ प्रमदम्. ४ प्रभोः प्रसादः. ५ अन्ये. ६ उपाविशुः. ७ पुरः समेताः. ८ गीर्वाणमुख्यान्. ९ असुरावधूतान्. १० ध्वस्तश्रियः. ११ शीर्णमुखान्. १२ दिवौकसाम्.

स्वर्गौकसः स्वर्गपरिच्युताः किं स्वपुण्यराशौ[1] सुमहत्तमेऽपि[2] ।
चिह्नं चिरोढं न[3] तु यूयमेते निजाधिपत्यस्य परित्यजध्वम् ॥३६॥

स्वर्गौकस इति ॥ हे स्वर्गौकसः, स्वपुण्यराशौ स्वर्गप्राप्तिनिमित्तपुण्यव्रजे रां महत्तमेऽपि । अक्षयेऽपीत्यर्थः । किं कुतः स्वर्गपरिच्युताः स्वस्थानभ्रष्टाः । किं कारणमिति प्रश्नाशयः । अथ चाश्वासयति—एते यूयं चिरोढं बहु- मूढं निजाधिपत्यस्य स्वीयस्वामितायाश्चिह्नं छत्रचामरादि तु न परित्यजध्वं परित्यजत । विध्यर्थे लोट् । त्यजध्वमित्यात्मनेपदं चिन्त्यम् ॥

दिवौकसो[4] देवगृहं विहाय मनुष्यसाधारणतामवाप्ताः ।
यूयं कुतः कारणतश्चरध्वं[5] महीतले[6] मानभृतो[7] महान्तः ॥ ३७ ॥

दिवौकस इति ॥ हे दिवौकसः, महान्तोऽत एव मानभृतो मनस्विनो कुतः कारणतः कारणाद्देवगृहं स्वर्गं विहाय परित्यज्य मनुष्यसाधारणतां वसाम्यमवाप्ताः सन्तो महीतले चरध्वम् । संप्रश्ने लोट् । अत्राप्यात्मनेपदं त्यम् ॥

अनन्यसाधारणसिद्धमुच्चैस्तद्दैवतं[8] धाम निकामरम्यम्[9] ।
कस्मादकस्मान्[10]निरगाद्[11]भवद्भ्यश्चिरार्जितं पुण्यमिवापवादात्[12] ॥ ३८ ॥

अनन्येति ॥ हे देवाः, अनन्यसाधारणेनान्यदीयदेशतुल्यत्वेन सिद्धं साधि- । रचितमित्यर्थः । तन्न भवतीति तथोक्तमत एव निकामं बहु रम्यं मनोह- च्चैर्महत्तत्प्रसिद्धं दैवतं धाम स्वर्गमकस्मात्सहसैव कस्माद्धेतोः भवद्भ्योऽप- त्पापाद्धेतोश्चिरार्जितं बहुकालेन संपादितं पुण्यमिव निरगान्निर्गतम् । त्यांपासून स्थल कसें जातें जहालें' इति लोकोक्तिरीतिरनुसंधेया ॥

दिवौकसो[13] वो हृदयस्य कस्मात्तथाविधं धैर्यमहार्यमार्याः ।
अगादगाधस्य जलाशयस्य ग्रीष्मातितापादि[14]वशादिवाम्भः ३९

दिवौकस इति ॥ हे दिवौकसो हे आर्याः, तथाविधं तादृशमहार्यमनिर्वच- यं वो युष्माकं हृदयस्य मनसो धैर्यं कस्माद्धेतोर्ग्रीष्मेण योऽतितापादिः संता- दिस्तस्य वशाद्धेतोः अगाधस्य जलाशयस्याम्भ इव । अगादनशत् । अन्यत्र च्छतीत्यर्थः । धैर्यं न हेयमिति भावः ॥

---

१ सुपुण्यराशौ. २ सुमहत्तरे. ३ बत; ननु. ४ स्वर्गौकसः. ५ चरध्वे. ६ मही- ः. ७ मानधनाः. ८ सुदैवतम्; तदैव तम्. ९ निकामकामम्; निकामकाम्यम्. १० यमादैः. ११ अगाधम्. १२ अपवादात्. १३ विरुद्धतः, १४ ग्रीष्मातपापत्तिवशात्.

संप्रति स्वयमेव भयनिमित्तं दर्शयति—

सुराः सुराधीशपुरःसराणां समीयुषां वः सममातुराणाम्।
तद्ब्रूत लोकत्रयजित्वरात्किं महासुरात्तारकतो विरुद्धम् ॥४

सुरा इति ॥ हे सुराः, तत्तस्मादातुराणामत एव समं सह समीयु... तानां तथा सुराधीशपुरःसराणामिन्द्रप्रमुखानां वो युष्माकं लोकत्रयजि... त्रैलोक्यजेतुस्तारकतस्तारकसंज्ञकान्महासुराद्विरुद्धं वैरं किम्। स भवतां किमिति प्रश्नः। ब्रूत वदत ॥

पराभवं तस्य महासुरस्य निषेद्धुमेकोऽहमलंभविष्णुः।
दावानलप्लोषविपत्तिमन्यो महाम्बुदात्किं हरते वनानाम् ॥४

पराभवमिति ॥ भो देवाः, तस्य महासुरस्य तारकस्य तत्कर्तृकम्। ... कर्मणोः' इति कर्तरि षष्ठी। पराभवं पराजयम्। अर्थाद्यौष्माकीणमि... निषेद्धुं निवारयितुमहमेक एवालंभविष्णुः। समर्थोऽस्मीत्यर्थः। तथा वनानां संबन्धिनीं दावानलस्य दावानलकर्तृको यः प्लोषो दाहः स एव ... त्तिस्तां महाम्बुदान्महतो मेघादन्योऽपरः। 'अन्यारात्–' इत्यादिना पञ्च... हरते किम्। अपि तु नैवेति काक्वा व्याख्येयम् ॥

इतीरिते मन्मथमर्दनेन सुराः सुरेन्द्रप्रमुखा मुखेषु।
सान्द्रप्रमोदाश्रुतरङ्गितेषु दधुः श्रियं सत्वरमाश्वसन्तः ॥४

इतीति ॥ मन्मथमर्दनेन महेश्वरेण इतीत्थमीरित उक्ते सति सुरेन्द्रप्र... सुरा देवा आश्वसन्तो विश्वसन्तः सन्तः। उज्जीवन्त इति यावत्। सान्द्र... सघनानि यानि प्रमोदाश्रूण्यानन्दबाष्पाणि तैस्तरङ्गितेषु तरङ्गयुक्तेषु मुखेषु ... शीघ्रम्। महेश्वरवाक्यस्यात्यानन्दहेतुत्वाच्छैघ्र्यम्। श्रियं शोभां दधुर्बभ्रुः ॥

ततो गिरीशस्य गिरां विरामे जगाद लब्धेऽवसरे सुरेन्द्रः।
भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं फलाविष्टमहोदयाय ॥४

तत इति ॥ ततोऽनन्तरं गिरीशस्य हरस्य गिरां वाचां विरामे सति ... प्राप्तेऽवसरे समये सुरेन्द्र इन्द्रो जगादोवाच। तथा हि अवसरे काले प्रयु... प्रेरिताः। उक्ता इति यावत्। वाचो गिरः फलेनाविष्टः पूर्णो यो महोदयो ... र्द्धिस्तस्मै तदर्थं भवन्ति ध्रुवम्। क्रियाग्रहणात्संप्रदानत्वम्। तादर्थ्ये चतुर्थी ॥

---

१ पुरारातिपुरो विवर्णम्; पुरारातिपुरः सुवर्णम्; सुनासीरपुरःसराणाम्. २ ... यिवांसं सममातुराणाम्; समीहितं यत्सममातुराणाम्; समीयुषां सामसमातुरा... ३ ब्रूत लोकत्रयजित्वराः; भूतलोकत्रयजित्वराः. ४ महासुरप्रायकतः. ५ निषेद्धु... ६ अरण्यस्य हर्तुं जलदात्प्रभुः किम्. ७ सान्द्रप्रमोदाः सुचिरस्मितेषु. ८ वि... ९ लब्धावसरे. १० सुरेशः. ११ प्रविसृष्टफलोदयाय; प्रभाविष्टफलोदयाय.

ज्ञानप्रदीपेन तमोपहेनाविनश्वरेणास्खलितप्रभेण ।
भूतं भवद्भावि च यच्च किंचित्सर्वज्ञ[1] सर्वं तव गोचरं[2] तत् ॥४४॥

ज्ञानेति ॥ हे सर्वज्ञ, तमोपहेनाज्ञानहन्त्राविनश्वरेणाक्षयेणास्खलितप्रभेणा-स्खलितकान्तिना । अनेन विशेषणेनामन्दकान्तित्वं हि बोद्धव्यम् । अतो न ...त्यम् । तथाभूतेन ज्ञानप्रदीपेनात्मज्ञानरूपदीपकेन भूतं व्यतीतं भवद्वर्त-मानं भावि भविष्यच्च यत्किंचित्तत्सर्वमेव तव गोचरं ज्ञानविषयम् । अस्तीत्यर्थः । ...ज्ञानेन त्रैकालिकस्यापि कर्मादिकस्य ज्ञातासीति भावः ॥

दुर्वारदोरुद्यम[3]दुःसहेन यत्तारकेणामरघस्मरेण ।
तदीशतामाप्तवता[4] निरस्ता वयं दिवोऽमी वद किं न वेत्सि ४५

दुर्वारेति ॥ हे भगवन्, दुर्वारो दुर्धर्षणीयो यो दुरुद्यमो भुजदण्डबलं तेन ...णेन दुःसहेनात एवामराणां देवानां घस्मरेण वधकेन । 'घस्मरो वधकेऽपि' इति मेदिनी । 'सृघस्यदः क्मरच्' इति क्मरच्प्रत्ययः । ईशतां स्वर्गाधीश-त्वमाप्तवता तारकेणामी वयं दिवः स्वर्गसकाशाद्यन्निरस्ता निष्कामितास्तन्न वेत्सि ...म् । अपितु वेत्स्येव । वद । वाक्यार्थः कर्म ॥

विधेरमोघं स[5] वरप्रसादमासाद्य सद्यस्त्रिजगज्जिगीषुः ।
सुरानशेषानहकप्रमुख्यान्[6][7] दोर्दण्डचण्डो मनुते तृणाय ॥ ४६ ॥

विधेरिति ॥ हे भगवन्, स तारको विधेर्ब्रह्मणः सकाशादमोघं सफलं वर-प्रसादमभिलाषानुग्रहम् । 'वरोऽभिलषिते वरे' इति मेदिनी । आसाद्य प्राप्य ...ः सहसैव दोर्दण्डाभ्यां भुजदण्डाभ्यां चण्डः प्रचण्डः । दुर्जय इति यावत् । ...त एव त्रिजगतो जिगीषुर्जेता सन् । अहकप्रमुख्यानहं प्रमुखो ज्येष्ठो येषु ...भूतानशेषान्सर्वान्सुरान् । तृणाय तृणं मनुते मन्यते । 'मन्यकर्मण्यनादरे ...पाप्राणिषु' इति चतुर्थीसविकरणग्रहणात्तनोतियोगे चिन्त्या ॥

स्तुत्या पुरास्माभिरुपासितेन पितामहेनेति निरूपितं नः ।
सेनापतिः संयति दैत्यमेतं[8] पुरः[9] स्मराराति‍सुतो निहन्ति ॥४७॥

स्तुत्येति ॥ हे भगवन्, पुरा पूर्वमस्माभिः स्तुत्या श्लाघयोपासितेनानुकूलि-तेन पितामहेन ब्रह्मणा नोऽस्मान् हे देवाः, संयति संगरे स्मराराति‍सुतः शांकरिः सेनापतिः सेनानीः सन्नेतं दैत्यं पुरोऽग्रे निहन्ति । निहनिष्यतीत्यर्थः । 'यावत्पु-रानिपातयोर्लट्' । इति निरूपितं कथितम् ॥

---

१ सर्वत्र. २ गोचरः. ३ दोर्दुर्मद. ४ तदीश नन्वात्मपदान्निरस्ताः; तदीव वामाप्लवता ...रस्ताः. ५ वत. ६ सुवर. ७ अस्मत्प्रमुख्यानमरानशेषान्; सुरान्स जम्भारिमुखा-...चण्डम् सुरान्स जम्भारिमुरारिमुख्यान्. ८ एनम्. ९ पुरा स्मराराति‍सुतः; पुरा ...रारेस्तनयः.

**अहो[1] ततोऽनन्तरमद्ययावत्सुदुः[2]सहां तस्य पराभवार्तिम् ।**
**विषेहिरे हन्त[3] हृदन्तशल्यमाज्ञा[4]निवेशं त्रिदिवौकसोऽमी ॥**

अहो इति ॥ अहो भगवन्, ततः पितामहनिरूपणादनन्तरमद्ययाव[त्प]न्तममी त्रिदिवौकसो देवाः सुदुःसहाम् । 'ईषद्दुःसुषु–' इति खल् । तस्[य ता]र्तकां पराभवेन निमित्तेनार्तिं पीडां हृदन्ते मनोमध्ये शल्यं तद्वद्दुःसहम[ाज्ञा]अनुशासनस्य 'भारं वहत' इत्यादिकस्य निवेशं स्थापनं विषेहिरेऽस[हन्त।]हन्तेति दुःखे ॥

**निदाघधामक्लमविक्लवानां नवीनमम्भोदमिवौषधीनाम् ।**
**सुनन्दनं[5] नन्दनमात्मनो नः सेनान्यमेतं[6] स्वयमादिश त्वम् ॥**

निदाघेति ॥ हे भगवन्, त्वं स्वयमेव निदाघे ग्रीष्मे यद्धाम सौरं तेजस्तस्मा[द]यः क्लमः खेदो दाहलक्षणस्तेन विक्लवानां मलिनानामौषधीनां सुतरां नन्[द]नन्दकारिणं नवीनमाषाढीयमम्भोदमिव नोऽस्माकं नन्दनमानन्दकारिणं सेनान्यं सेनाधिपतिमेतं पुरोवर्तिनमात्मनो नन्दनं पुत्रम् । नन्द्यादित्वा[त्] 'युवोः' इत्यनादेशः । आदिशानुशाधि । प्रार्थनायां लोट् । अस्मत्कार्यं क[र्तुमिति] शेषः ॥

**त्रैलोक्यलक्ष्मीहृदयैकशल्यं समूलमुत्खाय महासुरं तम् ।**
**अस्माकमेषां पुरतोर्भवन्सन्दुःखापहारं युधि यो विधत्ते ॥**

त्रैलोक्येति ॥ यो भवन्नन्दनस्त्रैलोक्यस्य लक्ष्म्या हृदय एकमद्वितीयं [श]तद्वद्दुर्धर्षं तं महासुरं तारकं युधि संगर एषामस्माकं पुरतोऽग्रे भवन्सन् भूत्वेत्यर्थः । समूलं सकुटुम्बपरिवारमुत्खाय निहत्य दुःखापहारं दुःखनि[वारणं] विधत्ते कुरुते । त्वन्नन्दनं विनास्माकं दुःखसमूहः केन निवार्येत इति भाव[ः ॥]

**महाहवे नाथ तवास्य सूनोः शस्त्रैः[10] शितैः कृत्तशिरोधराणाम् ।**
**महासुराणां रमणीविलापैर्दिशो दशैता मुखरीभवन्तु ॥ ५[?]**

महाहव इति ॥ हे नाथ, महाहवे महति सङ्ग्रामेऽस्य पुरोवर्तिनस्तव [पु]पुत्रस्य शितैस्तीक्ष्णैः शस्त्रैः करवालादिभिः कृत्तशिरोधराणां कर्तितग्रीवाणां [महा]सुराणां दैत्यानां तारकपक्षाश्रयिणां रमणीनां विलापैर्वैधव्यप्रयुक्तप्रलापैरेता[ः] दिशो मुखरीभवन्तु वावदूका भवन्तु । 'मुखरो वावदूकेऽपि' इति मेदि[नी ।] 'खमुखकुञ्जेभ्यो रः' इति रप्रत्ययः ॥

**महारणक्षोणिपशूपहारीकृते[11]ऽसुरे तत्र तवात्मजेन ।**
**बन्दिस्थितानां सुदृशां करोतु वेणिप्रमोक्षं[12] सुरलोक एषः ॥ ५[?]**

---

१ अकामतः; अतस्ततः. २ सुरा अदान्तस्य पराभवार्तिम्, सुदुःसहं तस्य परा[भवार्]तम्. ३ तस्य. ४ नियोगम्. ५ सन्नन्दनम्. ६ एनम्. ७ द्वितयैक. ८ भवि[...] ९ सुधिया विधाता. १० शरैः. ११ क्षोणिपशूपहारे. १२ वेणिप्रमोकम्.

महेति ॥ हे भगवन्, तत्रासुरे तारके तवात्मजेन पुत्रेण महती या रण-
णिः संग्रामभूमिस्तत्र ये पशवः क्रोष्ट्र्यादयस्तेषामुपहारीकृत उपदीकृते सति ।
हारश्चोपदायाम्' इति मेदिनी । एष सुरलोको बन्दिर्बन्धनागारं तत्र स्थि-
नां सुदृशां स्वरमणीनां वेणीप्रमोक्षं वेणीमोचनं करोतु ॥

**इत्थं सुरेन्द्रे वदति स्मरारिः सुरारिदुश्चेष्टितजातरोषः ।**
**कृतानुकम्पस्त्रिदशेषु तेषु भूयोऽपि[1] भूताधिपतिर्बभाषे ॥५३॥**

इत्थमिति ॥ सुरेन्द्रे महेन्द्र इत्थं वदति सति सुरारिस्तारकस्य दुश्चेष्टितम-
धजनकश्चेष्टाविशेषस्तेन हेतुना जातरोष उत्पन्नामर्षः स्मरारिर्भूतानामधिपति-
। तेषु त्रिदशेषु कृतानुकम्पो विहितदयः सन् । 'कृपा दयानुकम्पा स्यात्'
मरः । भूयोऽपि पुनरपि बभाष उवाच ॥

**अहो अहो देवगणाः सुरेन्द्रमुख्याः[2] शृणुध्वं वचनं ममैते[3] ।**
**विचेष्टते शंकर एष[4] देवः कार्याय सज्जो भवतां[5] सुताद्यैः ॥५४॥**

अहो इति ॥ अहो अहो इति संबोधने । संभ्रमे द्विरुक्तिः । हे देवगणाः
न्द्रमुख्याः पुरंदरप्रधाना एते यूयं मम वचनं शृणुध्वं शृणुत । तदेव सार्ध-
ाह—एष शंकरो देवः सुताद्यैः पुत्रप्रभृतिभिः । पुत्रपौत्रादिभिरित्यर्थः ।
तां युष्माकं कार्याय । कार्यं कर्तुमित्यर्थः । 'क्रियार्थ–' इत्यादिना चतुर्थी ।
ः सिद्धो विचेष्टते । वर्तत इत्यर्थः । मम पुत्रपौत्रजनकतायामपि भवत्कार्य-
बीजमिति भावः ॥

**पुरा मयाकारि गिरीन्द्रपुत्र्याः[6] प्रतिग्रहोऽयं नियतात्मनापि ।**
**तत्रैष[7] हेतुः खलु तद्भवेन वीरेण यद्वध्यत[8] एव शत्रुः ॥ ५५ ॥**

पुरेति ॥ हे देवाः; पुरा पूर्वं नियतात्मनापि योगिनापि मया गिरीन्द्रपुत्र्या
प्रतिग्रह आदानम् । परिणयनमित्यर्थः । यदकारि कृतः । तत्रैष हेतुर्नि-
म् । खलु निश्चितम् । यद्यस्मादेष शत्रुस्तारकसंज्ञकस्तद्भवेन पार्वतीजन्मना
ण वध्यते हन्यते । अतस्तद्भवार्थं पार्वतीपरिग्रहः कृत इति भावः । अतोऽहं
तामुपालम्भपात्रं नेति श्लोकतात्पर्यम् ॥

**अत्रोपपन्नं[9] तदमी[10] नियुज्य कुमारमेनं पृतनापतित्वे ।**
**निघ्नन्तु[11] शत्रुं सुरलोकमेष भुनक्तु[12] भूयोऽपि सुरैः सहेन्द्रः[13] ॥५६॥**

अत्रेति ॥ तत्तस्मादमी भवन्तोऽत्र भवत्कार्य उपपन्नं युक्तम् । योग्यमित्यर्थः ।
सूतमेनं कुमारं पृतनापतित्वे सैनापत्ये नियुज्य नियुक्तं कृत्वा शत्रुं तारकं

---

१ सः. २ सुरेन्द्रमुखाः. ३ ममैतत्. ४ एव. ५ सकलं शुभाय; सकलैः
ाद्यैः. ६ गिरीशपुत्र्याः. ७ एकहेतुः. ८ हन्यते. ९ अथ. १० इतः;
तः. ११ निहन्तु; निहत्य. १२ पुनातु; लभेत. १३ सुरेन्द्रः.

निघ्नन्तु । एतत्साहाय्येन भवन्तस्तारकं मारयन्त्विति भावः । अत ए
सुरेन्द्रः सुरैः सह भूयोऽपि पुनरपि सुरलोकं स्वर्गं भुनक्तु पालयतु ।
लोट् ॥

इत्युदीर्य भगवां[1]स्तमात्मजं घोरसंगरमहोत्सवोत्सुकम् ।
[2]नन्दनं हि ज[3]हि दे[4]वविद्विषं संयतीति निजगाद शंकरः ॥

इतीति ॥ शंकरः शंकरसंज्ञको भगवानिति पूर्वोक्तमुदीर्योच्चार्य घोरं
'घोरं भीमं भयानकम्' इत्यमरः । यः संगरः सङ्ग्रामः स एव महोत्सव
नानन्दस्तत्रोत्सुकमुत्कण्ठितमत एव नन्दनमानन्दकरम् । 'नन्दिग्रहि-' इ
तमात्मजं कुमारम् 'हे पुत्र, संयति सङ्ग्रामे देवानामिन्द्रादीनां विद्विषं
द्वेष्टारं तारकं जहि' । 'हन्तेर्जः' इति हनो जादेशः । इति निजगादोक्त
रथोद्धतावृत्तम् ॥

शासनं पशुपतेः स[5] कुमारः स्वीचकार शिरसावनतेन ।
सर्वथैव पितृभक्तिरतानामेष एव परमः खलु धर्मः ॥ ५

शासनमिति ॥ स कुमारः कार्तिकेयः पशुपतेः पितुर्हरस्य शासनम
वनतेन नम्रीकृतेन शिरसा स्वीचकार । स्वीयं चकारेत्यर्थः । 'कृभ्वस्तियो
च्विः । 'अस्य च्वौ' इतीकारः । 'च्वौ च' इति दीर्घः । तथाहि । सर्वथै
प्रकारेणैव पितृभक्तौ जनकश्रद्धायां रतानां सक्तानां खल्वेष एव परमो
यदाज्ञां झटित्येव स्वीकुर्वन्तीति । स्वागतावृत्तम् ॥

असुरयुद्धविधौ वि[6]बुधेश्वरे पशुपतौ [7]वदतीति तमात्मजम् ।
गिरिजया मुमुदे सुतविक्रमे स[8]ति न नन्दति कां[9] खलु वीरसूः ॥

असुरेति ॥ विबुधेश्वरे सकलदेवस्वामिनि पशुपतौ हरे । असुरस्य ता
यो युद्धविधिः सङ्ग्रामकरणं तत्र । उक्तमिति शेषः । तमात्मजं पुत्रमिति
सति । गिरिजया पार्वत्या मुमुदे प्रसेदे । तथा हि खलु निश्चये । सुत
पुत्रपराक्रमे सति का वीरसूर्वीरप्रसूतिः स्त्री न नन्दति । अपि तु सर्वापि
तीत्यर्थः । पुत्रविषये पराक्रमसत्त्वैव परममुत्कारणं वीरसूनां भवतीति
द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥

सुरपरिवृढः प्रौढं वीरं कुमारमुमापते-
र्बलवदमरारातिस्त्रीणां दृगञ्ज[10]नभञ्जनम् ।
जगदभयदं सद्यः प्राप्य प्रमोदपरोऽभव-
द्ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥ ६०

१ स्वम्. २ नन्दनैहि. ३ जय. ४ देवविद्विषः. ५ तु. ६ विबु ८ न
७ वदति प्रियमात्मजम्; वदति प्रियपुत्रकम्; वदति प्रियमातृकम्.
९ संयति. १० गञ्जनम्.

सुरेति ॥ सुराणां परिवृढः परिशास्तेन्द्रः । 'वृहू हिंसायाम्' । कर्तरि क्तः । ...मतिशयं वीरं पराक्रमशालिनं बलवान्योऽमरारातिस्तारकासुरस्तस्य स्त्रीणां ...जनस्य दृष्टिकज्जलस्य भञ्जनं भञ्जकम् । कर्तरि ल्युट् । मृतभर्तृकतया कज्जल-...णस्यानुचितत्वादिति भावः । अत एव जगद्भ्योऽभयदमभयदातारमुमापते-...स्य कुमारं पुत्रं प्राप्य सद्यः सहसा प्रमोदे प्रकृष्टोन्मोदे । पर असक्तोऽभव-...तः । तथा हि । अभिमते मनोरथे पूर्णे सति मुदा प्रीत्या निमित्तेन को वा न ...ति । अपि तु सर्व एवोन्मत्तो भवतीत्यर्थः । अत्र सामान्येन विशेषसमर्थ-...पोऽर्थान्तरन्यासोऽलंकारः । इदं हरिणीछन्दः–'रसयुगहयैर्न्सौ म्रौ लो गो हरिणी तदा' इति लक्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कुमार-
सैनापत्यवर्णनं नाम द्वादशः सर्गः ॥

---

## त्रयोदशः सर्गः ।

प्रस्थानकालोचितचारुवेषः स स्वर्गिवर्गैरनुगम्यमानः ।
ततः कुमारः शिरसा नतेन त्रैलोक्यभर्तुः[1] प्रणनाम पादौ ॥१॥

प्रस्थानेति ॥ ततोऽनन्तरं स कुमारः कार्तिकेयः प्रस्थानकाल उचितो योग्य-...श्च वेषो यस्य । तथा स्वर्गिवर्गैरिन्द्रादिदेवगणैरनुगम्यमानः सन् । नतेन ...रसा त्रैलोक्यभर्तुः शिवस्य पादौ प्रणनाम नमश्चक्रे । 'उपसर्गादसमासेऽपि' ...णत्वम् ॥

जहीन्द्रशत्रुं समरेऽमरेशपदं स्थिरत्वं नय वीर वत्स ।
इत्याशिषा तं प्रणमन्तमीशो मूर्धन्युपाघ्राय मुदाभ्यनन्दत् ॥२॥

जहीति ॥ प्रणमन्तं नमस्कुर्वन्तं तं कुमारमीशो हरो मुदा प्रीत्या मूर्धन्यु-...ाय गन्धमुपादाय 'हे वीर हे वत्स, समरे युधीन्द्रशत्रुं तारकं जहि मारय । ...ामरेशपदमिन्द्रपदं स्वर्गं स्थिरत्वं स्थैर्यं नय प्रापय' । उभयत्राप्याशिषि ...ट् । इत्येवंभूतयाशिषाशीर्वादेनाभ्यनन्ददस्तौषीत् ॥

प्रह्वीभवन्नम्रतरेण मूर्ध्ना नमश्चकाराङ्घ्रियुगं[2] स्वमातुः ।
तस्याः प्रमोदाश्रुपयःप्रवृष्टिस्[3]तस्याभवद्वीरवराभिषेकः ॥ ३ ॥

प्रह्वीति ॥ स कुमारः प्रह्वीभवन्नम्रीभवन्सन्नम्रतरेण मूर्ध्ना । अत्र प्रह्वीभव-

---

१ त्रिलोक. २ युगं सः; युगाय. ३ प्रपूरः; प्रवर्षः.

न्नित्यनेनैव मूर्ध्नो नम्रत्वे सिद्धे पुनर्विशेषणोपादानं सामान्यतोऽन्येषां नम्रत्वोक्त्यपेक्षया मूर्ध्नि क्रियातिशयद्योतनार्थम्। पुनरुपादानेन तत्र ङ्गाच्च। स्वमातुरङ्घ्रियुगं चरणद्वन्द्वं नमश्चकार। तस्याः पार्वत्याः संबन्धीनि प्रमोदाश्रुपयांसि तेषां प्रवृष्टिर्वर्षणं तस्य कुमारस्य वीरेषु वरस्य श्रेयसः पतेरित्यर्थः। तस्याभिषेक इव योऽभिषेकः सोऽभवत्। तस्य यादृशो भवति स मात्रश्रुपयोवृष्टिरा शिरश्चरणनखपर्यन्तं प्लावयन्त्यभूदिति भावः॥

**तमङ्कमारोप्य सुता हिमाद्रे[1]राश्लिष्य[2] गाढं सुतवत्सला सा।**
**शिरस्युपाघ्राय जगाद शत्रुं जित्वा कृतार्थीकुरु[3] वीरसूं माम्॥**

तमिति॥ सुते पुत्रे वत्सला कृपावती सा हिमाद्रेः सुता पार्वती तं पु अस्य ल्यबन्तत्रयेण संबन्धो विधेयः। अङ्कमुत्सङ्गम्। 'अङ्को रूपकभेदाङ्क रेखाजिभूषणे। रूपकाण्डान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः' इति मेदिनी आरोप्य संस्थाप्य। तथा गाढं दृढं यथा तथा। 'प्रगाढः कृच्छ्रदृढयोः' इति मेदिनी। प्रेति त्रित्वसंघातनिवेशनायैव। एवं विना तदलाभात्। आश्लिष्य लिङ्ग्य। तथा शिरस्युपाघ्राय च। 'हे वत्स, त्वं शत्रुं तारकं जित्वा वीरं वीरसूस्तथोक्तां मां कृतार्थीकुरु इति जगाद। एवंविधे महति कार्ये भवता पादिते सति त्रैलोक्यप्रसृतिशीलेन यशसा धवलीकृतं सत् 'एष यदीयः सा कृतार्थैव' इति वर्णयिष्यतीत्यतो मत्कृतार्थत्वं सिद्धमेवेति भावः॥

**उद्दामदै[4]त्येशविपत्तिहेतुः श्रद्धालुचेताः स[5]मरोत्सवस्य।**
**आपृच्छ्य भक्त्या गिरिजागिरीशौ ततः प्रतस्थेऽभि[6]दिवं कुमा**

उद्दामेति॥ ततोऽनन्तरमुद्दाम उद्भटो यो दैत्येशस्तारकस्तस्य विपत्ति स्तस्या हेतुः कारणम्। तत्कर्तेत्यर्थः। तथा समरोत्सवस्य सङ्ग्रामरूपस्योत्स 'मह उद्धव उत्सवः' इत्यमरः। इयं कर्मणि षष्ठी। संबन्धमात्रविवक्षितत्वा इह षष्ठ्यन्तस्य वृत्तिगतेनापि श्रद्धाशब्देन नित्यसंबन्धवशात्संबन्धं कृत्वा गलक्षणा षष्ठी समर्थनीया। केचित्तु 'समरोत्सवे सः' इति विषयलक्षणस न्तत्वमङ्गीकृत्य पठन्ति। तत्रापि समासवृत्तिगतस्य श्रद्धालुशब्दस्य सं दुर्घट इत्यलम्। श्रद्धालु भक्तिशीलं चेतो यस्य। सङ्ग्रामश्रद्धाधायक इत्य एवंभूतः कुमारो भक्त्या भक्तिपूर्वकं गिरिजागिरीशौ पितरावापृच्छ्य। गम्यत इत्युक्त्वेत्यर्थः। दिवमभि प्रतस्थे चचाल। 'समवप्रवि-' इत्या नेपदम्॥

---

१ महाद्रेः. २ आश्लिष्टगात्रम्. ३ कृतार्थां कुरु. ४ दैतेय. ५ सम
सः. ६ त्रिदिवम्.

देवं महेशं गिरिजां च देवीं ततः प्रणम्य त्रिदिवौकसोऽपि ।
प्रदक्षिणीकृत्य च[1] नाकनाथपूर्वाः समस्तास्तमथानुजग्मुः[2] ॥ ६ ॥

देवमिति ॥ ततोऽनन्तरम् । नाकनाथपूर्वा इन्द्रप्रमुखाः समस्तास्त्रिदिवौ-ो देवा अपि । पूर्वोक्तकुमारप्रस्थानसमुच्चायकोऽपिशब्दः । 'अपि संभावना-ाशङ्कागर्हासमुच्चये' इति विश्वः । महेशं देवं गिरिजां देवीं च प्रणम्य । अथ क्षिणीकृत्य । प्रदक्षिणौ परिक्रमणवशात्सव्यभागस्थौ कृत्वेत्यर्थः । 'ऊर्यादिच्वि-चश्च' इति गतिसंज्ञकतया 'कुगतिप्रादयः' इति समासत्वात् 'समासेऽन-र्व–' इति क्त्वो ल्यबादेशः । तं कुमारमनु पश्चाज्जग्मुरित्यर्थः ॥

अथ व्रजद्भिस्त्रिदशैरशेषैः[3] स्फुरत्प्रभाभासुरमण्डलैस्तैः[4] ।
नभो[5] बभासे परितो[6] विकीर्णं दिवापि नक्षत्रगणैरिवोग्रैः ॥७॥

अथेति ॥ अथानन्तरं व्रजद्भिर्गच्छद्भिरत एव स्फुरत्प्रसरत्प्रभाया: कान्त्याः न्धि भासुरं दीप्यमानं मण्डलं चक्रवालं येषाम् । 'चक्रवालं तु मण्डलम्' मरः । तैरशेषैः संपूर्णैस्त्रिदशैर्देवैर्विकीर्णं व्याप्तं नभोऽन्तरिक्षं दिवापि दिने- । उग्रैर्भासुरैर्नक्षत्रगणैर्विकीर्णमिव बभासे । भासुरत्वरूपसाधारणधर्मेण दशविकिरणविशिष्टे नभसि नक्षत्रविकिरणविशिष्टत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः । 'उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे' इति कोशोक्त्योत्कटवाचिनो-ग्रशब्दस्य कथं भासुरवाचकतेति चेत्, सत्यम् । अत्रौत्कट्यं केनचिद्धर्मेण वक्षितं न तु तेजसैव । कान्त्या तापेन वा सौन्दर्यादिना वोत्कटोऽधिक इत्य-प्रणयनात्प्रकृते समाधेयम् ॥

रराज तेषां व्रजतां सुराणां मध्ये कुमारोऽधिक[7]कान्तिकान्तः ।
नक्षत्रताराग्रहमण्डलानामिव त्रियामा[8]रमणो नभोन्ते[9] ॥ ८ ॥

रराजेति ॥ नभोन्तेऽन्तरिक्षमध्ये व्रजतां गच्छतां तेषां सुराणां मध्ये ारः कार्तिकेयः । अग्रेऽपि नभोन्त इत्यस्य संबन्धः कार्यः । नक्षत्राण्यश्विन्या-नि, ताराः सप्तविंशतिव्यतिरिक्ताः, ग्रहाः सूर्यादयो नव, तेषां मण्डलानां लानां मध्ये त्रियामारमणश्चन्द्र इव रराज । यतोऽधिककान्त्या कान्तो मनो-ः । नक्षत्राणां मध्ये यथा चन्द्र एव शोभते तथा देवानां मध्ये कुमार एव शुभ इत्यर्थः । पूर्णोपमालंकारः ।

गिरीशगौरीतनयेन सार्धं पुलोमपुत्रीदयितादयस्ते ।
उत्तीर्य नक्षत्रपथं मुहूर्तात्[10] प्रपेदिरे लोकमथात्मनीनम्[11] ॥ ९ ॥

---

१ सुरेशमुख्याः सुराः. २ अभिजग्मुः. ३ सरोषैः. ४ मण्डलभासुरैः. ५ ततः. ६ हरितोऽवकाशः. ७ अधिककान्तकान्तिः. ८ दयितः. ९ अन्तः. १० मुहूर्तम्. ११ अयो मुनीनाम्.

गिरीशेति ॥ अथ पुलोमपुत्री शची तस्या दयित इन्द्रः स आदि... भूतास्ते देवा गिरीशगौरीतनयेन । ननु गिरीशगौर्योरेकतरेण सिद्धि... सत्यम् । उभयगतवीर्याश्रयीभूतत्वेन कुमारवीर्याधिक्यस्य द्योतनार्थमु... णमिति समाधातव्यम् । सार्धं मुहूर्तात्क्षणमात्रेणैव नक्षत्रपथमाकाशमु... ङ्क्यात्मनीनसात्मने हितम् । 'तस्मै हितम्' इत्यधिकारस्थेन 'आत्मन्विश्व... इत्यादिना खः । तथाभूतं लोकं स्वर्गं प्रपेदिरे प्रापुः । 'लोकस्तु भुवने... इत्यमरः ॥

ते स्वर्गलोकं चिरकालदृष्टं महासुरत्रासवशंवदत्वात् ।
सद्यः प्रवेष्टुं न विषेहिरे तत्क्षणं[1] व्यलम्बन्त सुराः समग्राः[2] ॥

त इति ॥ ते समग्राः सुरा महासुरात्तारकाद्यस्त्रासो भयं तस्य वशंवद... धीनत्वाद्धेतोः चिरकालेन बहुसमयेन दृष्टं तत्स्वर्गलोकं सद्यः सहसा प्र... विषेहिरे न शेकुः । किं तु क्षणं व्यलम्बन्त । कालं चिक्षिपुरित्यर्थः । अन्य... समये स्वगृहेऽपि सद्यः प्रवेष्टुं न शक्नोति किं तु विलम्बते तद्वदिति भावः ॥

पुरो[3] भव त्वं न पुरो भवामि नाहं[4] पुरोगोऽस्मि पुरःसरस्त्व[5]...
इत्थं सुरास्तत्क्षणमेव[6] भीताः स्वर्गं प्रवेष्टुं कलहं वितेनुः ॥

पुर इति ॥ तत्क्षणम् । 'कालाध्वनोः–' इति द्वितीया । प्रवेशसमय इ... भीता अतस्तारकावस्थानशङ्कया सभयाः सुराः स्वर्गं प्रवेष्टुम् 'त्वं पुरोऽग्रे... अहं पुरो न भवामि, किं तु त्वमेव भव । अहं पुरोगो नास्मि न भवामि । ... पुरःसरो भव' इत्थमेवंभूतं कलहं विग्रहं वितेनुः । चक्रुरित्यर्थः । असी... र्थकमव्ययम् । सर्वेषां त्रिधाभूततया न कोऽप्यन्तः प्रवेष्टुं शशाक । किं तु ... कलहायमानास्तस्थुरिति भावः ॥

सुरालयालोकनकौतुकेन[7] मुदा शुचिस्मेरविलोचनास्ते[8] ।
दधुः कुमारस्य मुखारविन्दे दृष्टिं द्विषत्साध्वसकातरान्ताम्[9] ...

सुरालयेति ॥ सुरालयस्य स्वर्गस्य यदालोकनं तेन यत्कौतुकमानन्द... निमित्तेन शुचीनि शुद्धानि स्मेराणि समन्दहासानि च विलोचनानि येषां ... भूतास्ते देवा द्विषत्साध्वसेन तारकशत्रुभयेन कातरान्तां भीतप्रान्ताम् । ... चिह्नतरलत्वादियुतामित्यर्थः । तथाभूतां दृष्टिं नेत्रं मुदा प्रीत्या । प्रसाद... यावत् । उपलक्षिते कुमारस्य मुखारविन्दे वदनकमले दधुः । दुर्घटप्रवेशोप... पदेशापेक्षयेति भावः । कुमारो बालोऽपि सन् न भीत इति मुदेति विशे... व्यज्यते ॥

---

१ तम्. २ समस्ताः. ३ पुरोऽततत्वम्. ४ नवः. ५ पुरःसरत्वम्. ६ ... तेन कृते स्ववश्ये स्वर्गे; द्विषा तेन हृता मिथस्ते स्वर्गे. ७ सुरत्वरा. ८ सुविस्मेरवि... चनस्य; सुविस्मेरविलोचनान्ताः. ९ कातरास्ते; कातरान्ते.

सहेलहासच्छु[1]रिताननेन्दुस्ततः कुमारः पुरतो भ[2]विष्णुः ।
स तारकापा[3]तमपेक्षमाणो रणप्रवीरो हि[4] सुरानवोचत् ॥ १३ ॥

सहेलेति ॥ ततो दृष्टिपातानन्तरं रणे प्रकृष्टं वीरोऽत एव तारकस्यापातं द्धार्थमागमनमपेक्षते सोऽपेक्षमाणः । प्रतीच्छन्नित्यर्थः । अत एव पुरतोऽग्रतो विष्णुः स कुमारः कार्तिकेयः सहेलः सक्रीडो यो हासस्तेन च्छुरिताननेन्दुर्मिश्रि-मुखचन्द्रः सन् । किंचिद्विहस्येत्यर्थः । हि निश्चितम् । सुरानवोचज्जगाद ॥

भीत्यालमद्य त्रिदिवौकसोऽमी स्वर्गं भवन्तः प्रविशन्तु सद्यः ।
अत्रैव मे दृक्पथमेतु शत्रुर्महासुरो व[5]ः खलु दृ[6]ष्टपूर्वः ॥ १४ ॥

भीत्येति ॥ भो त्रिदिवौकसो देवाः, अद्य संप्रति भीत्या भयेनालम् । न तव्यमित्यर्थः । किं त्वमी भवन्तः सद्यः सहसैव स्वर्गं प्रविशन्तु । स्वर्गप्रवेशे न्यहेतुको विलम्बो न विधेय इति तात्पर्यम् । सद्यः सपदि । तत्क्षणमित्यर्थः । थ रोपादाह—पूर्वं दृष्टो दृष्टपूर्वः । 'राजदन्तादिषु' इति प्राक्प्रयोगार्हस्य पूर्वश-स्य परः प्रयोगः । संभवानुरोधाद्भवद्भिरिति लभ्यते । ननु य इत्यनेनैव सिद्धि-ति चेन्न । 'नलोक—' इति षष्ठीनिषेधात् । तथा वो युष्माकं शत्रुर्दृष्टो महासु-तारकोऽत्रैव स्वर्ग एव मे मम दृक्पथं दृग्गोचरत्वमेतु प्राप्नोतु । दृक्पथमिति क्पूरब्धूः—' इति समासान्तोऽप्रत्ययः ॥

स्व[7]र्लोकलक्ष्मीकचकर्षणाय दोर्मण्डलं व[8]ल्गति यस्य चण्डम् ।
इहैव तच्छोणितपानकेलिमह्नाय कुर्वन्तु शरा ममैते ॥ १५ ॥

स्वर्लोकेति ॥ स्वर्लोकस्य लक्ष्म्याः कचाः केशास्तेषां कर्षणाय । लक्ष्मीकेशानां र्णं कर्तुमित्यर्थः । 'तुमर्थात्' इति चतुर्थी । चण्डं प्रचण्डं यस्य तारकस्य दोर्म-लं भुजमण्डलं वल्गति चलति तस्य तारकस्य यच्छोणितं रुधिरं तस्य पानं देव केलिः क्रीडा तां कर्मभूतामेते मम शरा अह्नाय झटिति । 'द्राग्झटित्यञ्ज-ह्नाय' इत्यमरः । इहैव कुर्वन्तु । तं विनाशयन्त्वित्यर्थः ॥

शक्तिर्ममासावहतप्रचारा प्रभावसारा सु[9]महःप्रसारा ।
स्वर्लोकल[10]क्ष्म्या विपदावहा[11]रेः शिरो हरन्ती दिशतान्मुदं वः १६

शक्तिरिति ॥ अहतप्रचाराविघ्नितगतिः । तथा प्रभावः सामर्थ्यं स एव सारो स्याः सा । सुतरां महसस्तेजसः प्रसारो मण्डलं यस्याः । अतितेजस्विनीत्यर्थः । र्लोकलक्ष्म्या या विपदा तस्या आवहा । सुखेदेत्यर्थः । तथारेः प्रतिकूलस्य शिरः पि हरन्ती । असौ मम शक्तिरायुधं वो युष्माकं मुदं प्रीतिं दिशताद्दत्तात् । आशिषि लोट् ॥

---

१ उद्धरित; उच्छुरित. २ निविष्टः. ३ अवेक्षमाणः. ४ अभि. ५ यः. ६ का-दृष्टः. ७ स्वर्गैकलक्ष्मीकच. ८ यस्य बलातिचण्डम्. ९ सुमहाप्रसारा. १० लक्ष्मीः. ११ सहारेः शिरः. १२ दिशतां सुखम्.

**इत्यन्धकारातिसुतस्य दैत्यवधाय युद्धो[1]त्सुकमानसस्य।**
**सर्वं शुचि[2]स्मेरमुखारविन्दं गीर्वाणवृन्दं वचसा ननन्द[3]॥**

इतीति ॥ दैत्यवधाय दैत्यवधं कर्तुं युद्ध उत्सुकमानसस्योत्कण्ठितचेतस्क अन्धकारातिसुतस्य शिवपुत्रस्य कुमारस्य संबन्धिना इति पूर्वोक्तेन वचसा गीर्वाणवृन्दं देवसमूहः शुचि शुद्धं स्मेरं समन्दहासं मुखारविन्दं मुखकमलं तथाभूतं सदा ननन्द जहर्ष ॥

**सान्द्र[4]प्रमोदात्पुलकोपगूढः सर्वाङ्गसंफुल्ल[5]सहस्रनेत्रः।**
**तस्योत्तरीयेण निजाम्बरेण निरुञ्छनं[6] चारु चकार शक्रः॥**

सान्द्रेति ॥ सान्द्रप्रमोदाद्घनानन्दाद्धेतोः पुलकै रोमाञ्चैरुपगूढ आलिङ्गितः। 'पुलकः कृमिभेदेऽश्मभेदे च मणिदोषके। रोमाञ्चे हरिताले गजान्नपिण्डे गन्धके' इति मेदिनी। तथा सर्वेष्वङ्गेषु संफुल्लानि सहस्रनेत्राणि यस्य सहस्राक्षस्तथाभूतः शक्र इन्द्रस्तस्य कुमारस्योत्तरीयेण संव्यानेन। 'संव्यानमुत्तरीयं स्यात्' इत्यमरः। यथा निजाम्बरेण निरुञ्छनं परिवर्तनं चारु चकार। भ्रातृभ्यां यान्योन्यवस्त्रग्रहणं चक्रतुरित्यर्थः। तदुक्तं मेदिन्याम्—'निरुञ्छनं वस्त्र वाससः परिवर्तनम्' इति। लोकेऽपि भ्रातृतायै परस्परस्योष्णिगबन्धनव्यवहार स्तद्वदत्रापीति अनुशासने सामान्यतो वासोग्रहणेन प्रकृत उत्तरीयग्रहणं गम्यते। लोकव्यवहारस्तु संप्रदायसिद्धः। उष्णिहि विशेषश्चैष्णोपलम्भ व्यवहारमूलमिति मन्तव्यम् ॥

**घनप्रमोदाश्रुतरंगिताक्षै[7]र्मुखैश्चतुर्भिः प्रचुरप्रसादैः[8]।**
**अथो[9] अचुम्बद्विधिरादिवृद्धः षडाननं षट्सु शिरःसु[10] चित्रम्[11]॥**

घनेति ॥ अथो अनन्तरमाद्ययोर्हरिहरयोर्वृद्धो महान्विधिर्ब्रह्मा। घनः सान्द्रः। 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्तादौ घनाद्येषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे च दृष्टार्थे' इति मेदिनी। यः प्रमोदो हर्षस्तेन निर्गतं यदश्रु नेत्रपयस्तेन तरंगितानि संजाततरंगाणि। 'तारकादिभ्य इतच्'। अक्षीणि नेत्राणि येषां तैः। हर्षवशादुद्गताश्रुभिरित्यर्थः। तथा प्रचुरप्रसादैरधिकप्रसन्नता-युक्तैश्चतुर्भिर्मुखैः षट्सु शिरःसु मध्ये षडाननं कुमारं चुचुम्बे पस्पर्श। चित्रं विस्मयः। चतुर्भिर्मुखैः षण्णां मुखानां यौगपद्येन स्पर्शासंभवात्। हारस्तु प्रत्येकं षट्सु चतुर्भिश्चुम्बनेन संधेयः ॥

**तं सा[12]धु साध्वित्यभितः प्रशस्य मुदा कुमारं त्रिपुरासुरारेः।**
**आनन्दयन्वीर जयेति वाचा गन्धर्वविद्याधरसिद्धसंघाः॥**

---

१ वद्धोत्सवमानसस्य. २ सुविस्मेर. ३ आननन्द. ४ सान्द्रप्रमोदः. ५ ... ६ निर्मञ्छनम्; निरूहणम्; निरुञ्छनम्. ७ परिप्लुताक्षैः. ८ प्रमोदः. ९ ... चुम्बे. १० मुखेषु. ११ हर्षात्. १२ सुसाधु.

तमिति ॥ गन्धर्वा देवगायकाः, विद्याधराः, सिद्धाश्च देवविशेषाः, एषां ...ः समुदायाः कर्तारः तं त्रिपुरासुरस्यारेः शिवस्य कुमारं पुत्रं मुदा प्रीत्या ...तेन साधु साध्वित्यभितः संमुखत्वेन प्रशस्य स्तुत्वा 'हे वीर, त्वं जय शत्रोः ...शाज्जयं प्राप्नुहि' इत्येवंभूतया वाचानन्दयन्नानन्दितमकुर्वन् ॥

दिव्यर्षयः शत्रुविजेष्यमाणं तमभ्यनन्दन्किल नारदाद्याः ।
निरुञ्छनं चक्रुरथोत्तरीयैश्चामीकरीयैर्निजवल्कलैश्च ॥२१॥

दिव्यर्षय इति ॥ नारदाद्या नारदप्रमुखा दिव्या दिवि भवा ऋषयः । 'द्युप्रा-...गुदक्-' इति यत् । शत्रुं तारकं विजेष्यमाणं जेष्यन्तं तं कुमारमभ्यनन्द-...वुः किल । अथानन्तरं चामीकरीयैः सौवर्णैरुत्तरीयैर्वस्त्रैः । तथा निजैर्व-...लैश्च निरुञ्छनं बन्धुतायै वासःपरिवर्तनं चक्रुः । निरुञ्छनं पूर्वमेव ...तम् ॥

ततः सुरः शक्तिधरस्य तस्यावष्टम्भतः साध्वसमुत्सृजन्तः ।
उत्सेहिरे स्वर्गमनन्तशक्तेर्गन्तुं वनं यूथपतेरिवेभाः ॥ २२ ॥

...त इति ॥ ततोऽनन्तरं शक्तिरायुधविशेषस्तां धरतीति तथोक्तस्य तस्य ...रस्य । 'शक्तिरस्त्रान्तरे शौर्ये उत्साहादौ बले स्त्रियाम्' इति मेदिनी । ...म्भत आश्रयतः । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति मेदिनी । ... स्तम्भशब्देनाश्रयो लक्षितः । स्तम्भस्याश्रयमिति तत्त्वात् । साध्वसं ...म् । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । उत्सृजन्तस्त्यजन्तः सुरा देवाः । ...न्तशक्तेरपारशौर्यस्य यूथपतेर्गजराजस्यावष्टम्भत इभा गजा वनमिव । स्वर्गं ... प्रवेष्टुमुत्सेहिर उत्साहं चक्रुः । अनन्तशक्तेरिति विशेषणं कुमारेऽपि ...नीयम् ॥

अथाभिपृष्ठं गिरिजासुतस्य पुरंदरारातिवधं चिकीर्षोः ।
सुरा निरीयुस्त्रिपुरं दिधक्षोरिव स्मरारेः प्रमथः समन्तात् ॥२३॥

...थेति ॥ अथोत्साहानन्तरं सुराः पुरंदरस्येन्द्रस्यारातेस्तारकस्य वधं मृत्युं ...र्षोः कर्तुमिच्छोर्गिरिजासुतस्य कुमारस्याभिपृष्ठं पृष्ठसंमुखं त्रिपुरं दैत्यं दिध-...क्षुमिच्छोः । 'दह भस्मीकरणे' इति धातोरिच्छार्थे सनि 'सन्यङोः' इति द्वित्वे ...शंसभिक्ष उ' इत्युप्रत्ययः । स्मरारेः शिवस्याभिपृष्ठं प्रमथा इव स्थिताः ...न्तान्निरीयुर्निर्जग्मुः । अन्तर्विविशुरित्यर्थः ॥

सुराङ्गणानां जलकेलिभाजां प्रक्षालितैः संततमङ्गरागैः ।
प्रपेदिरे पिञ्जरवारिपूरां स्वर्गौकसः स्वर्गधुनीं पुरस्तात् ॥२४॥

---

[1] तस्य वचो वरार्थम्. २ समभ्यनन्दन्; तदभ्यनन्दन्. ३ निर्मञ्छनम्; निरु-...म्. ४ नववल्कलैः. ५ उत्त्यजन्तः. ६ अनन्तशक्त्यै. ७ अभिपृष्ठे. ८ जयम्. ...सुराङ्गनानाम्.

सुराङ्गणानामिति ॥ स्वर्गौकसो देवाः पुरस्तादग्रे जलकेलिभाजां क्रीडासक्तानां सुराङ्गणानामप्सरसां संततं निरन्तरं प्रक्षालितैरङ्गरागैः कुङ्कुमादिचितैः पिञ्जरवारिपूरां पीतजलप्रवाहां स्वर्गधुनीं मन्दाकिनीं प्रपेदिरे प्रापुः। सुराङ्गणानामिति 'कुमति च' इति णत्वम् ॥

अथ चतुर्भिस्तामेव विशिनष्टि—दिग्दन्तिनामित्यादिभिः ॥

दिग्दन्तिनां वारिविहार[1]भाजां कराहतैर्भीम[2]तरैस्तरंगैः ।
आप्लावयन्तीं मुहुरालवाल[3]श्रेणिं तरूणां निज[4]तीरजानाम् ॥

तत्र दिग्दन्तीति ॥ किंभूतां स्वर्गधुनीम् । वारिणि विहारभाजां क्रीडतां दिग्दन्तिनामैरावतादीनां करैः शुण्डादण्डैः । 'करो वर्षोपले पाणौ रश्मौ प्रत्यये शुण्डयोः' इति मेदिनी । आहतैस्ताडितैरत एव भीमतरैरतिशयभयानकैस्तरंगैः कल्लोलैः कृत्वा निजतीरजानामात्मीयतटोत्पन्नानां तरूणां वृक्षाणां संबन्धिनीं मालवालानां मूलस्थलीनां श्रेणिम् । 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी । मुहुर्वारंवारम् । 'मुहुः पुनःपुनः शश्वत्' इत्यमरः । आप्लावयन्तीं सेचयन्तीम् ॥

लीलार[5]साभिः सुरकन्यकाभिर्हिर[6]ण्मयीभिः सिकताभिरुच्चैः ।
माणिक्यगर्भाभि[7]रुपाहिताभिः प्रकीर्णतीरां वरवेदिकाभिः ॥

लीलेति ॥ पुनः किंभूताम् । लीलायां क्रीडायां रसः प्रीतिर्यासां तासां सुराणां कन्यकाभिः पुत्रीभिः । तथा हिरण्मयीभिः सौवर्णीभिः सिकताभिर्वालुकाभिः तथा माणिक्यगर्भाभिर्मणिखचितमध्याभिः तथोपाहिताभिर्निर्मिताभिः न त्वकृत्रिमाभिः । तथोच्चैर्महतीभिर्वराः श्रेयस्यो या वेदिकास्ताभिश्च प्रकीर्णतीरां व्याप्तसैकताम् ॥

सौरभ्यलुब्धभ्रमरोपगीतैर्हिरण्यहंसावलिकेलिलोलैः ।
चामीकरीयैः कमलैर्विनिद्रैश्च्युतैः परागैः [9]परिपिङ्गतोयाम् ॥

सौरभ्येति ॥ पुनः किंभूताम् । सौरभ्ये सौगन्ध्ये लुब्धा लम्पटा ये भ्रमरा द्विरेफास्तैरुपगीतैः । मुखरितैरित्यर्थः । हिरण्यस्य सुवर्णस्य ये हंसा मरालास्तेषामावल्यः पङ्क्तयस्तासां केलिः क्रीडा तया निमित्तेन लोलैश्चञ्चलैश्चामीकरीयैः सौवर्णैर्विनिद्रैर्विदलितैः कमलैरुपलक्षिताम् । अत एव च्युतैः कमलेभ्यो निर्गतैः परागैः सुमनोरजोभिः । 'परागः सुमनोरजः' इत्यमरः । परिपिङ्गं परितः पिङ्गं तोयं जलं यस्यास्तथोक्ताम् ॥

---

१ विहारलीलाम्. २ भीमवराहयूथैः । 'आशंसयन्सादरमद्रिपुत्रीमहेश्वरौ पुरः पुरोगाः । स कार्तिकेयः पुरतः परीतो वियच्चरैर्लोलतरैस्तरंगैः'. ३ श्रेणीम्. ४ गुरुतीरजानाम्. ५ लीलालसाभिः. ६ हिरण्यहंसाभिरुताभिः; हिरण्मयीभिः सिकताभिः. ७ उपोहिताभिः. ८ अवकीर्णैः. ९ परिपिञ्जतोयाम्.

कुतूहलाद्द्रष्टुमुपागताभिस्तीरे[1]स्थिताभिः सुर[2]सुन्दरीभिः ।
[3]अभ्यूर्मिराजिप्रतिविम्बिताभिर्मुदं दिशन्तीं व्रजतां जनानाम् २८

कुतूहलादिति ॥ द्रष्टुं कुतूहलात्कौतुकात् । आनन्दादिति यावत् । उपा-
भिरागताभिः अत एव तीरस्थिताभिः । अत एवाभ्यूर्मिराजि । ऊर्मिराजा-
भ्यूर्मिराजि तरङ्गमध्ये प्रतिबिम्बिताभिः सुरसुन्दरीभिर्देवाङ्गनाभिर्निमित्तेन
तां गच्छतामपि जनानां मुदं दिशन्तीं ददतीम् । एकासामप्यप्सरसां प्रति-
बवशादनेकधा दृश्यमानत्वाद्युक्ता प्रीतिजनकतेति भावः ॥

ननन्द सद्य[5]श्चिरकालदृष्टां विलोक्य शक्रः[4] सुरदीर्घिकां ताम् ।
अदर्शयत्सादरमद्रिपुत्रीमहेशपुत्राय ततः[6] पुरोगः[7] ॥ २९ ॥

ननन्देति ॥ शक्र इन्द्रश्चिरकालेन बहुकालेन दृष्टां तां सुरदीर्घिकां मन्दा-
कीं विलोक्य सद्यो झटिति ननन्द जहर्ष । अतिरमणीयं वस्तु चिरकालदृष्टं
बहुप्रीतिजनकं भवतीति भावः । ततोऽनन्तरमद्रिपुत्रीमहेशयोः पुत्राय
कुमाराय सादरं यथा तथा पुरोगः सन्नदर्शयत् ॥

स कार्तिकेयः पुरतः परीतः सुरैः समस्तैः सुरनिम्नगां ताम् ।
अपूर्वदृष्टाम[8]वलोकमानः सं[9]विस्मयः स्मेरविलोचनोऽभूत् ॥३०॥

स इति ॥ समस्तैः सुरैः परीतो व्याप्तः स कार्तिकेयः कुमारः । अपूर्व-
दृष्टाम् । अधुनैव दृष्टामित्यर्थः । तां सुरनिम्नगां पुरतोऽग्रेऽवलोकमानः सन्सवि-
स्मयः साश्चर्यः स्मेरविलोचनः समन्दहासनेत्रश्चाभूत् ॥

उपेत्य तां तत्र[10] किरीटकोटिन्यस्ताञ्जलिर्भक्तिपरः कुमारः ।
गीर्वाणवृन्दैः प्र[11]णुतां प्रणुत्य नम्रेण मूर्ध्ना [12]मुदितो ववन्दे ॥३१॥

उपेत्येति ॥ भक्तिपरो भक्तिप्रवणः कुमारः कार्तिकेयो गीर्वाणवृन्दैर्देवसमूहैः
प्रणुतां प्रकर्षेण स्तुताम् । 'णु स्तुतौ' इति धातोः कर्मणि क्तः । तां मन्दाकिनीं
उपेत्य । तत्समीपं गत्वेत्यर्थः । किरीटकोटौ मुकुटाग्रे । 'कोटिः स्त्री धनुषोऽग्रे-
ऽपि' इति मेदिनी । अत्राग्रशब्दस्य धनुःशब्दोपलक्षिततया सर्वेषामग्रवाचकत्वं
ज्ञेयम् । न्यस्तोऽञ्जलिर्येन तथाभूतः सन् । प्रणुत्येडयित्वा मुदितो मुमुदे ।
कृदन्तरूपं क्रियापदम् । तथा नम्रेण मूर्ध्ना शिरसा ववन्दे नमश्चक्रे ॥

[13]प्रणर्तितस्मेरसरोजराजिः पुरः परीरम्भमिलन्महोर्मिः ।
कपोलपालिश्रमवारिहारि भेजे गुहं[14] तं सरितः समीरः ॥३२॥

---

1 तीरे स्थिताभिः. २ सुरकन्यकाभिः. ३ अभ्यूर्मिराजीः; अत्यूर्मिराजि. ४ शक्रः. [5] सद्यः. ६ पुरः. ७ पुरोज्ञः. ८ इव लोकमानः. ९ सविस्मय. १० रत्नकिरीट. [11] प्रणताम्. १२ नमितः; प्रणतः. १३ प्रपाटित. १४ स्वःसरितः.

प्रणर्तितेति ॥ प्रणर्तिता कम्पिता स्मेरसरोजानां विकसितकमलानां माला येन । अनेन सौगन्ध्योक्तिः । तथा परीरम्भेणाश्लेषेण मिलन्तः मिश्रीभवन्तो महोर्मयो यस्य । अनेन शैत्योक्तिः । कपोलपाल्याः । कपोल लताग्रस्येत्यर्थः । 'पालिः कर्णे लताग्रेऽश्रौ' इति विश्वः । श्रमेण स्वेदस्तस्य हारि । अनेन मान्द्योक्तिः । अन्यथा श्रमहृतेरसंभवः । सरितो मन्दाकिन्याः समीरः पवनः पुरोऽग्रे स्थितं तं गुहं स्वामिकार्तिकेयं यद्वा पुरोग्रे भेजे सिषेवे ॥

ततो व्रजन्[1] नन्दननामधेयं लीलावनं जम्भजितः[2] पुरस्तात् ।
विभिन्नभग्नोद्धृत[3]शालसंघं प्रेक्षांचकार स्मरशत्रुसूनुः ॥ ३३ ॥

तत इति ॥ ततो गङ्गावलोकनानन्तरं व्रजंश्चलन्स्मरशत्रुसूनुः पुरस्तादग्रे विभिन्नो विदारितः । बाणैः शतरन्ध्रीकृत इति तात्पर्यार्थः । भग्न आमर्दितो मूलं विनोपर्यैव शतशकलीकृत उद्धृत उत्पाटितश्च शालो यस्य तत् । 'शालो हाले मत्स्यभेदे शालौकस्तत्प्रभेदयोः । शालद्रुस्कन्धयोः शालेति परिकीर्तिता ॥' इति मेदिनी । नन्दननामधेयं नन्दनसंज्ञं 'नन्दनं वनम्' इत्यमरः । जम्भजित इन्द्रस्य लीलावनमुपवनं प्रेक्षांचकार ददर्श । 'इजादेश्च–' इत्याम् ॥

सुरद्विषोपप्लुतमेवमेतद्[4]वनं बलस्य द्विषतो गतश्रि ।
इत्थं विचिन्त्यारुणलोचनोऽभूद्भ्रूभङ्गदुष्प्रेक्ष्यमुखः[5] स[6] कोपात् ॥

सुरद्विषेति ॥ स कुमारः । एतत्पुरोवर्ति बलस्य द्विषत इन्द्रस्य 'नलोक–' इत्यादिना षष्ठीनिषेधेऽपि 'द्विषः शतुर्वा' इति विकल्पात्षष्ठी । पवनं सुरद्विषा तारकेणैव न केनापि । यथा तारकेणोपद्रुतं तथा न केन ... वधारणार्थकैवकारेण ध्वन्यते । 'एवः प्रकारोपमयोरङ्गीकारावधारणे' इति ... अभितः सर्वतः । उपप्लुतमुपद्रुतमत एव गतश्रि नष्टशोभमित्थं वि... कोपादरुणे लोचने यस्य तथा भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तथोक्तः ... महतां सति स्वस्मिन्परदुःखं महादुःखावहं भवतीति भावः ॥

निर्लूनलीलोपवनामपश्यद्दुःसंचरी[7]भूतविमानमार्गाम् ।
विध्वस्तसौध[8]प्रचयां कुमारो विश्वैकसाराममरावतीं[9] सः ॥ ३ ...

निर्लूनेति ॥ स कुमारः कार्तिकेयः निर्लूनानि कर्तितानि लीलायाः ... या उपवनानि यस्याम् । तथा दुःखेन संचरः संचारो येषु तथाभूता वि... मार्गा विमानसंचारपथा यस्याम् । तथा विध्वस्ताः खण्डिताः । स्फो... इति यावत् । सौधप्रचया राजसदनसमूहा यस्याम् । 'सौधोऽस्त्री राजसद...

---

१ जवात्. २ वज्रभृतः. ३ उन्नतशाखि. ४ एव. ५ दुष्प्रेक्षमुखः. ६ च. ७ ...
८ सौख्यप्रचयाम्. ९ प्रमृष्टविश्वैकसाराम्; प्रमृष्टवस्त्वेकसाराम्.

मरः । तथा विश्वस्मिन्नेकैव सारां तत्त्वभूतांताममरावतीमिन्द्रपुरीमपश्यत् । री त्वमरावती' इत्यमरः ॥

गतश्रियं वैरिवराभिभूतां दशां सुदीनामभितो दधानाम् ।
नारीमवीरामिव तामवेक्ष्य स बाढमन्तः करुणापरोऽभूत् ॥३६॥

गतश्रियमिति ॥ स कुमारः वैरिवरेण तारकेणाभिभूतां पूर्वोक्तविधिना भूताम् । पराभवोऽत्र विध्वंसनक्रियानुकूलो व्यापारो ग्राह्यः । अत एव श्रियं भ्रष्टशोभाम् । अत एव सुतरां दीनां कृपणाम् । अनुकम्प्यामिति । दशामवस्थामभितो दधानाम् । अत एवावीरां नपुंसकभर्तृकां नारी- स्थितां ताममरावतीमवेक्ष्यान्तर्मनसि बाढं बहु यथातथा करुणायां पर क्तोऽभूत् ॥

दुश्चेष्टिते देवरिपौ सरोषस्तस्याविषण्णः समराय चोत्कः ।
तथाविधां तां स विवेश पश्यन्सुरैः सुराधीश्वरराजधानीम् ॥३७॥

दुश्चेष्टित इति ॥ दुश्चेष्टिते दुष्कर्मणि देवरिपौ तारके विषये सरोषः धः । तथा तस्य तत्कर्तृकाय समराय समरं युद्धं कर्तुमुत्कश्च तथाविषण्णो- सः स कुमारः तथाविधां पूर्वोक्तप्रकारां तां सुराधीश्वरस्येन्द्रस्य राजधानीं पश्यन्सन् विवेश । तदन्तरिति शेषः ॥

दैतेयदन्त्यावलिदन्तघातैः क्षुण्णान्तराः स्फाटिकहर्म्यपङ्क्तीः ।
महाहिनिर्मोकपिनद्धजालाः स वीक्ष्य तस्यां विषसाद सद्यः ३८

दैतेयेति ॥ दैतेयानां दैत्यानां दन्त्यावलिर्गजावलिस्तस्यास्तत्कर्तृका ये दन्त- रदनताडितानि तैः क्षुण्णान्तराः क्षोदितमध्या अत एव महाहीनां सर्पाणां निर्मोकाः कञ्चुकाः । 'समौ कञ्चुकनिर्मोकौ' इत्यमरः । तैः द्धानि जलानि सौधजलानि यासु ताः स्फाटिकहर्म्यपङ्क्तीः स्फटिकनिर्मित- निचयान्वीक्ष्य स सद्यस्तस्यां विषसाद । खिद्यति स्मेत्यर्थः । 'सद्यः सपदि र्णे' इत्यमरः ॥

अथ युग्मेनाह—

उत्कीर्णचामीकरपङ्कजानां दिग्दन्तिदानद्रवदूषितानाम् ।
हिरण्यहंसव्रजवर्जितानां विदीर्णवैदूर्यमहाशिलानाम् ॥३९॥
आविर्भवद्बालतृणाञ्चितानां तदीयलीलागृहदीर्घिकाणाम् ।
स दुर्दशां वीक्ष्य विरोधिजातां विषादवैलक्ष्यभरं बभार ॥४०॥

१ गर्भश्रियम्. २ वैरिपराभिभूताम्. ३ स गाढम्; सबाष्पम्. ४ तस्यां विषण्णः. ५ च. ६ दैत्येन्द्रदन्तावल; दैतेयदन्तावल. ७ क्षुण्णान्तर. ८ संवीक्ष्य. ९ तदीय. १० तृणावृतानाम्. ११ सुदुर्दशाम्. १२ विरोधिजां ताम्.

उत्कीर्णेति ॥ आविर्भवदिति च ॥ स कुमारः । उत्कीर्णान्युत्... चामीकरस्य सुवर्णस्य पङ्कजानि कमलानि यासाम् । उत्खनितसुवर्णक... मित्यर्थः । तथा दिग्दन्तिनामैरावतादीनां दानाः खण्डनाः तज्जेतारस्ता... कर्तरि ल्युट् । तेषां द्रवो मदजलं तेन दूषितानां म्लानीकृतानाम् । ... कुम्भीन्द्रमदकलुषीकृतजलानामित्यर्थः । हिरण्यप्रचुरा ये हंसास्तेषां... वर्जितानां रहितानाम् । दैत्योपद्रवादिति भावः । तथा विदीर्णाः ... वैदूर्याणां रत्नविशेषाणां महत्यः शिला यासाम् । तथाविर्भवन्त्युद्... यानि बालतृणानि शष्पाणि तैरञ्चितानां व्याप्तानाम् । तदीया ऐन्द्र्यो या ... गृहदीर्घिका गृहवापिकास्तासां संबन्धिनीम् । विरोधिभ्योऽरिभ्यो जातां ... दुष्टावस्थां वीक्ष्य विषादवैलक्ष्ययोः खेदलज्जयोर्भरम् । बह्वयौ विषा... इत्यर्थः । बभार । दुर्दशादर्शनजनितकरुणाबीजं दुःखं मयि सत्यपि सु... लज्जाहेतुरित्यर्थः ॥

तद्दन्तिदन्तक्षतहेमभित्ति[1] सुतन्तुजालाकुलरत्नजालाम् ।
निन्ये सुरेन्द्रेण पुरोगतेन स वैजयन्ताभिधमात्मसौधम् ॥४...

तद्दन्तीति ॥ स कुमारः । सुरेन्द्रेणेन्द्रेण पुरोगतेनाग्रण्या सता तस्... कस्य दन्तिनां गजानां दन्तैः क्षताः क्षुण्णा हैम्यो भित्तयः कुड्यानि यस्... वा । सुतन्तवो लूतानां शोभनानि सूत्राणि तेषां जालेनाकुलं व्याकुलं र... रत्नसमूहो यस्मिन् तथा वैजयन्ताभिधं वैजयन्तसंज्ञकम् । 'स्यात्प्रासाद... यन्तः' इत्यमरः । आत्मसौधं स्वराजसदनं निन्ये प्रापितः । कर्मणि लिट् ।

निर्दिष्टवर्त्मा विबुधेश्वरेण सुरैः समग्रैरनुगम्यमानः ।
स प्राविशत्तं विविधाश्मरश्मिच्छिन्नेन[2] सोपानपथेन सौधम् ...

निर्दिष्टेति ॥ स कुमारः । विबुधेश्वरेणेन्द्रेण कर्त्रा । निर्दिष्टवर्त्मेतो... विधेयमित्युक्तिपूर्वकप्रदर्शितमार्गः । तथा समग्रैः सुरैर्देवैरनुगम्यमानोऽनु... माणः सन् । विविधा अनेकवर्णा येऽश्मानो रत्नानि तेषां रश्मिभिः ... श्छिन्नेन भिन्नेन । रहितेनेति यावत् । तारककृतसोपानखचितरत्नोत्पाटना... भावः । सोपानपथेनारोहणमार्गेण । 'आरोहणं स्यात्सोपानम्' इत्यमरः ... सौधं प्राविशत् ॥

निसर्गकल्पद्रुमतोरणं[3] तं स[4] पारिजातप्रसवस्रगाढ्यम्[5] ।
दिव्यैः कृतस्वस्त्ययनं[6] मुनीन्द्रैरन्तःप्रविष्टप्रमदं[7] प्रपेदे ॥ ४३

निसर्गेति ॥ स कुमारः । निसर्गेण स्वभावेन । अनायासेनेति या...

१ हेमभित्तिम्; गेहभित्ति. २ तद्विविधात्मरश्मिच्छन्नेन; तं विविधेन रत्ना... ३ तोरणाङ्कम्; तोरणान्तम्. ४ सुपारिजात. ५ स्रजाढ्यम्. ६ कृतस्वस्त्य... ७ कुमारः; प्रविश्य.

सर्गः शीलसर्गयोः' इति विश्वः । कल्पद्रुमा एव तोरणानि यत्र । तथा रिजातस्य देववृक्षविशेषस्य प्रसवानां पत्रपुष्पाणां स्रजा मालयाढ्यं युक्तम् । नार्थमनेकपत्रपुष्पसहितमित्यर्थः । तथा दिव्यैः स्वर्गीयमुनीन्द्रैः कश्यपादिभिः स्वस्त्ययनं विहितस्वस्तिवाचनम् । तथान्तःप्रविष्टा मध्यं प्रविश्य स्थिताः दाः स्त्रियो यत्र तं सौधं प्रपेदे प्राप ॥

पादौ महर्षेः किल कश्यपस्य कुलादिवृद्धस्य सुरासुराणाम् ।
प्रदक्षिणीकृत्य कृताञ्जलिः [1]सन्षड्भिः शिरोभिः स [2]नतैर्ववन्दे ४४

पादाविति ॥ स कुमारः । सुरासुराणां देवदैत्यानां कुल आदिवृद्धस्य कश्य- महर्षेः पादौ चरणौ कर्मभूतौ । प्रदक्षिणीकृत्य कृताञ्जलिः सन् । नतैः भिः शिरोभिर्ववन्दे नमश्चक्रे । किलेत्यैतिह्ये ॥

स देवमातुर्जगदेकवन्द्यौ पादौ तथैव प्रणनाम कामम् ।
मुनेः कलत्रस्य च तस्य भक्त्या प्रह्वीभवञ्शैलसुतातनूजः ॥४५॥

स इति ॥ स शैलसुतातनूजः पार्वतीनन्दनो भक्त्या निमित्तेन प्रह्वीभवन्न- भवन्सन् । मुनेश्च तस्य कलत्रस्य पत्न्याश्च देवानां मातुर्जनन्या अदितेः । त एकवन्द्यौ केवलनमस्करणीयौ पादौ तथैव मुनिनमस्कारप्रकारेणैव कामं ायोग्यं प्रणनाम नमश्चक्रे ॥

स कश्यपः सा जननी सुराणां तमेधयामासतुराशिषा [3]द्वौ ।
[4]तया [5]यया नैकजगज्जिगीषुं जेता मृधे तारकमु[6]ग्रवीर्यम् ॥ ४६ ॥

स इति ॥ स कश्यपो मुनिः सा सुराणां जनन्यदितिः, एतौ द्वौ तं कुमारं ाशिषाशीर्वादेनैधयामासतुर्वर्धयतः स्म । ययाशिषा निमित्तेनोग्रवीर्यमत एव कजगन्त्यनेकजगन्ति । त्रीणि जगन्तीत्यर्थः । जिगीषुं जेतुमिच्छुम् । 'न लोक-' ति षष्ठीनिषेधः । तारकं दैत्यं मृधे संगरे जेता । जेष्यतीत्यर्थः । कर्तरि लुट् ॥

[7]स्वदर्शनार्थं समुपेयुषीणां [8]सुदेवतानाम[9]दितिश्रितानाम् ।
पादौ ववन्दे [10]पतिदेवतास्तमाशीर्वचोभिः [11]पुनरभ्यनन्दन् ॥४७॥

स्वेति ॥ स कुमारः । स्वदर्शनार्थं स्वावलोकनार्थं समुपेयुषीणां प्राप्नुवती- म् । तथादितिं देवमातरं श्रितानाम् । देवमातुराश्रयेण जीवन्तीनामित्यर्थः । मनाः सौभाग्यवत्यो देवतास्तासां पादौ चरणौ ववन्दे प्रणनाम । अथ च तिरेव देवता यासां ताः प्रतिव्रतास्ता देवतास्त्वाशीर्वचोभिः 'त्वं जय' त्यादिभिः पुनस्तं कुमारमभ्यनन्दन् । अस्तुवतेत्यर्थः ॥

---

१ सः. २ विनतैः. ३ द्वे. ४ यथा तथा. ५ अनया; यथा. ६ उग्रवीर्यः. ७ तद्- नार्थम्. ८ स देवतानाम्. ९ अदितेः सुतानाम्. १० विनयेन ताः. ११ गुहम्.

पुलोमपुत्रीं विबुधाधिभर्तुस्ततः शचीं[1] नाम कलत्रमेषः[2]।
नमश्चकार स्मरशत्रुसूनुस्तमाशिषा सा समुपाचरच्च[3] ॥ ४८

पुलोमपुत्रीमिति ॥ ततोऽनन्तरम् । नामेति योग्यताप्रतिपादकमव्य अव्ययानामनेकार्थत्वात् । ततश्च प्रणामकर्तृत्वयोग्य इत्यर्थः । न च पुलो एव प्रणामार्हत्वविवक्षया विशेषणता स्यादिति वाच्यम् । विबुधाधिभर्तृसं द्घाटनेनैव ध्वनितत्वात् । एष स्मरशत्रुसूनुः कुमारो विबुधानां देवानामधि रिन्द्रस्य कलत्रं स्त्रीभूतां शचीं शचीसंज्ञिकां पुलोमपुत्रीं नमश्चकार। सेन्द्राण्याशिषाशीर्वादेन तं कुमारं समुपाचरत् । अवर्धयदित्यर्थः ॥

अथादितीन्द्रप्रमदाः[4] समेतास्ता[5] मातरः[6] सप्त घनप्रमोदाः।
उपेत्य भक्त्या नमते[7] महेशपुत्राय[8] तस्मै ददुराशिषः[9] प्राक् ॥

अथेति ॥ अथानन्तरं घनप्रमोदा सान्द्रानन्दाः । कुमारावलोकन भावः । अत एव समेता एकत्रभूतास्ता अदितीन्द्रस्य कश्यपस्य प्रमदाः सप्तमातरो ब्राह्मीप्रभृतयो भक्त्या निमित्तेनोपेत्य समीपमागत्य नमते नम तस्य महेशपुत्राय कुमाराय तारकविजयसाधना आशिष आशीर्वादान्न स्कारात्पूर्वमेव ददुः ॥

समेत्य सर्वेऽपि मुदं[10] दधाना महेन्द्रमुख्यास्त्रिदिवौकसोऽथ[11]
आनन्दकल्लोलितमानसं [12]तं[13] समभ्यषिञ्चन्पृतनाधिपत्ये ॥

सेति ॥ अथानन्तरं मुदं दधाना महेन्द्रमुख्या इन्द्रप्रभृतयः सर्वेऽपि त्रिदि वौकसो देवा आनन्देन भावितारकयुद्धकर्तृत्वजन्मना कल्लोलितं तरंगितं सर एव मानसं चेतो यस्य तम् । महानन्दमित्यर्थः । तं कुमारं पृतनाधि सैनापत्ये समभ्यषिञ्चन्नभिषिक्तमकुर्वन् ॥

सकलविबुधलोकः स्रस्तनिःशेषशोकः
कृतरिपुविजयाशः प्राप्तयुद्धावकाशः ।
अजनि हरसुतेनानन्तवीर्येण तेना-
खिलविबुधचमूनां प्राप्य लक्ष्मीमनूनाम् ॥ ५१ ॥

सकलेति ॥ अनन्तवीर्येणापारपराक्रमेणात एवानूनां महतीमखिला विबुधचम्वो देवसेनास्तासां लक्ष्मीं वैभवं प्राप्य स्थितेन तेन हरसुतेन । तसाहाय्येनेत्यर्थः । सकलविबुधलोकः समस्तवृन्दारकनिचयाः । स्रताः ध्व नष्टा इति यावत् । निःशेषाः समग्राः शोका यस्य तथा कृता रिपोस्ता

---

१ शची. २ अत्र. ३ समुपाचचार. ४ अदितिप्राग्रमुखाः समेताः; अदितीन्द्र समेताः; अदितीन्द्रप्रमुखाः समेताः. ५ सः; तम्. ६ मातृकाः. ७ नमति. शर्वपुत्राय. ९ ताः. १० मुदमादधानाः. ११ अत्र. १२ ते. १३ तमभ्य

जय आशा येन । तथा प्राप्तो युद्धायावकाशोऽवसरो येन । तथाभूतश्चाजनि
तः । कुण्ठितवीर्याणां सवीर्यसाहाय्यकमेव कार्यसिद्धिहेतुर्भवतीति भावः ।
लिनीवृत्तमेतत् । लक्षणं तु पूर्वमेवोक्तम् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्री-
कालिदासकृतौ कुमारसंभवे महाकाव्ये कुमार-
सैनापत्याभिषेको नाम त्रयोदशः सर्गः ॥

---

## चतुर्दशः सर्गः ।



**रणोत्सुकेनान्धकशत्रुसूनुना[1] समं प्रयुक्तैस्त्रिदशैर्जिगीषुणा[2] ।**
**महासुरं तारकसंज्ञकं द्विषं[3] प्रसह्य हन्तुं समनह्यत द्रुतम् ॥ १ ॥**

रणेति ॥ जेतुमिच्छति जिगीषति जिगीषतीति जिगीषुस्तेन जिगीषुणा ।
सन्ताज्जयतेः 'सनाशंसभिक्ष उः' इत्युप्रत्ययः । अत एव रणे समरे । 'रणः
णे क्वणे पुंसि समरे पुंनपुंसकम् ।' इति मेदिनी । उत्सुकेनोत्कण्ठितेनान्धक-
त्रोः शिवस्य सूनुना कुमारेण कर्त्रा । प्रयुक्तैः प्रेरितैः । संनहनार्थमिति शेषः ।
दशैर्देवैरिन्द्रादिभिः समं सार्धं तारकसंज्ञकं द्विषं शत्रुं महासुरं दैत्यं प्रसह्य
बाद्धन्तुं मारयितुं द्रुतं शीघ्रम् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । समनह्यत
नद्धम् । नह्यतेर्भावे लङ् । सर्गेऽस्मिन्नपि वृत्तमुपजातिरेव ॥

इतः परं 'सः' इत्यादिभिस्त्रिभिः कुमारसंनहनमाह—

**स दुर्निवारं मनसोऽतिवेगिनं जयश्रियः संनयनं[4] सुदुःसहम् ।**
**विजित्वरं नाम तदा[5] महारथं धनुर्धरः शक्तिधरोऽध्यरोहयत्[6] २**

स इति ॥ स गुहः कार्तिकेयो धनुर्धरस्तथा शक्तिधरश्च सन्दुर्निवारं
खेन निवारयितुं प्रतिरोद्धुं शक्यम् । अप्रतिरुद्धगतिकमित्यर्थः । मनसः सका-
दप्यतिवेगिनम् । बहुगतिजववन्तमित्यर्थः । इहाति नाम बहुश्चासौ जवश्च ।
विद्यते यस्येति कृते 'न कर्म धारयान्मत्वर्थीयः' इति निषेधप्रसक्त्या मत्वर्थीयो
स्यात् । अतोऽतीत्यस्य क्रियाविशेषणतामाश्रित्य समर्थनीयम् । केचित्पुनः
मनसोऽपि' इति पठित्वा व्याचक्षते । तथा जयश्रियो विजयलक्ष्म्याः संनयनं
जयप्राप्तिसाधनम् । यमारुह्य गच्छन्तो वीराः सजयलक्ष्मीका एव भवन्तीति
भावः । सुतरां दुःसहं । दुःसहता चैतद्दर्शनविषयिणी बोध्या । एतद्दर्शनेनैव

---

१ स्वयम्. २ जयेषुणा. ३ तारकसंज्ञितं द्विषम्, तारकमूर्जितद्विषम्. ४ संगमनम्;
संयमनम्. ५ ततः. ६ अध्यरोहत.

शत्रवः पराजिता भवन्ति । अतो युक्तमेव जयश्रीसंनयनत्वम् । अत ए त्वरम् । विजित्वरेत्यानुपूर्वीकं नाम । नामत्वं च व्यक्तिबोधजनकतावच्छे केतत्वम् । दधानमिति शेषः । तथाभूतं महारथं महान्तं स्यन्दनम्। पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी । तदाध्यरोहयदारुरोह।

सुरालयश्रीविपदां निवारणं सुरारिसंपत्परितापकारणम् ।
केनापि दध्रेऽस्य विरोधिदारणं सुचारु चामीकरघर्मवारण

सुरालयेति ॥ विरोधिनं तारकं दारयति मारयति तद्विरोधिदार णिजन्तप्रयोगं कुर्वता कविना छत्रस्य जडत्वात्स्वातन्त्र्येण दारणक्रियोपयो संभवात्तदीयधारणप्रभावेण वीरोऽह्यसौ कुमारस्तारकं जेष्यतीति सूचि 'ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः' इति न्यायादिति अत एव सुरालयस्य स्वर्गस्य श्रियो लक्ष्म्या विपदामापदां निवारणं नाश अत एव सुरारेस्तारकस्य संपदां परितापस्य संतापस्य कारणं कर्तृ । सर्वत्र ल्युट् । सुचारु सुतरां मनोहरं चामीकरस्य हेम्नो घर्मवारणं छत्रम् । कुमारस्योपरि केनापि देवेन दध्रे धृतम् । कर्मणि ल्युट् ॥

शरच्चरच्चन्द्रमरीचिपाण्डुरैः स वीज्यमानो वरचारुचामरैः
पुरःसरैः किंनरसिद्धचारणै रणेच्छुरस्तूयत वाग्भिरुल्बणैः ।

शरदिति ॥ शरदि घनात्यये चरतो भ्रमतश्चन्द्रस्य मरीचयो मयूख त्पाण्डुरैः शुभ्रैः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः' इत्यमरः । चर विशेषणं चामराणामपि वीजनवशेन चलत्वादन्वर्थमिति बोध्यम् । तथा श्रेष्ठैः । 'वरो जामातरि वृतौ देवतादेरभीप्सिते । षिङ्गे पुंसि त्रिपु श्रेष्ठे तु नपुंसकम्' इति मेदिनी । चारुभिर्मनोहरैश्च चामरैर्वीज्यमानः । तथा र संग्रामाभिलाषुकः स कुमार उल्बणैरुद्भटैः किंनराः किंपुरुषाः । 'स्यात् किंपुरुषः' इत्यमरः । सिद्धा देवविशेषाश्चारणाश्च तैः कर्तृभिः । पुरःसरैः वाग्भिः कृत्वास्तूयतेडितः । 'ष्टु स्तुतौ' इत्यतः कर्मणि लङ् ॥

इदानीमिन्द्रादीनामष्टानामनुप्रयाणमाह—

प्रयाणकालोचितचारुवेषभृद्वज्रं वहन्पर्वतपक्षदारणम् ।
ऐरावतं स्फाटिकशैलसोदरं ततोऽधिरुह्य द्युपतिस्तमन्वगात्

प्रयाणेति ॥ ततोऽनन्तरं द्युपतिरिन्द्रः प्रयाणकाले प्रस्थानसमय योग्यं चारु मनोहरं च वेषं बिभर्ति धरति तथोक्तः । तथा पर्वतपक्षाणां छेदनम् । करणे ल्युट् । वज्रं स्वायुधं वहन् । करेणेति शेषः । तथा स्फाटि शैलः कैलासस्तस्य सोदरं सदृशमैरावतं गजमधिरुह्यास्थाय तं कुमारमन्वगा

१ संसत्. २ वारणम्. ३ विरागदारणम्. ४ शरद्धलत्. ५ रोचिभिः. ६ दुर्ध मानः. ७ रणोत्सुकः, स षण्मुखः. ८ उच्चकैः. ९ वेषः. १० ऐरावणम्.

तुययावित्यर्थः । 'अभ्यगात्' इति पाठस्त्वसाधुः । सेनानीत्वेन वृतत्वादतिश्रेयः
ारापेक्षयान्येषामिन्द्रादीनामपि गौणत्वात्पुरतो गमनानौचित्यात् ॥

तमन्वगच्छद्गिरिशृङ्गसोदरं म[1]दोद्धतं मेषमधिष्ठितः शिखी ।
विरोधिविद्वेषरुषाधिकं ज्वलन्महोम[2]हीयस्तरमायुधं दधत् ॥ ६ ॥

तमिति ॥ विरोधिनस्तारकस्य विद्वेषेण वैरेण हेतुना या रुट् क्रोधस्तया
ित्तेनाधिकं ज्वलन्प्रदीप्यमानः शिख्यग्निर्गिरेः शृङ्गस्य सोदरं सदृशम् । तद्व-
ालमित्यर्थः । तथा मदेन गर्वेण । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः'
मेदिनी । उद्धतं मेषं पशुविशेषं लोके 'मेंढा' इति ख्यातमधिष्ठितोऽधिरूढः
ा महसा तेजसा महीयस्तरमतिशयं महदायुधं शस्त्रं दधत्, अथवा 'महो
ीयस्तरम्' इति छेदः । महस्तेजोरूपं महीयस्तरमायुधमिति व्याख्यातव्यम् ।
त्सन् । तं कुमारमन्वगच्छदनुगतवान् । अत्राप्यभ्यगच्छदित्यसाधु बोध्यम् ॥

अ[3]थेन्द्रनीलाचलचण्डविग्रहं विषाणविध्वस्तमहाप[4]योधरम् ।
अ[5]धिष्ठितः कासरमुद्धरं मुदा वै[6]वस्वतो दण्डधरस्तमन्व[7]गात् ॥७॥

अथेति ॥ अथानन्तरं वैवस्वतो यमः । 'कालो दण्डधरः श्राद्धदेवो वैवस्व-
ऽन्तकः' इत्यमरः । इन्द्रनीलानां नीलमणीनामचलः पर्वतस्तद्वच्चण्डविग्रहं
ण्डदेहम् । कालत्वाद्भयानकमित्यर्थः । तथा विषाणाभ्यां शृङ्गाभ्यां विध्वस्ता
ः पातिता महापयोधरा बृहन्मेघा येन तथा । उद्धरमुद्भटं कासरं महिषम् ।
लायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । अधिष्ठितोऽधिरूढः तथा
ं धरतीति तथाभूतश्च सन् । मुदा प्रीत्या तं कुमारमन्वगादनुजगाम ॥

म[8]दोद्धतं प्रेतमथाधिरूढवांस्तमन्धकद्वेषितनूजम[9]न्वगात् ।
महासुरद्वेषविशेषभीषणः सुरोषणश्चण्डरणाय नैर्ऋतः ॥ ८ ॥

मदोद्धतमिति ॥ अथानन्तरं महासुरद्वेषेण तारकासुरवैरेण विशेषमधिकं
ा तथा भीषणो भयानकः । 'भीषणं रसशल्लक्योर्ना गाढे दारुणेऽपि च' इति
िनी । तथा सुतरां रोषणः क्रोधनो नैर्ऋतो राक्षसो नैर्ऋतकोणाधीश्वरो मदेन
ोद्धतं प्रेतं पिशाचमधिरूढवानास्थितवान्सन् । चण्डरणाय प्रचण्डरणं कर्तुं
न्धकद्वेषिणो हरस्य तनूजं पुत्रं कुमारमन्वगादन्वियाय ॥

---

१ महोद्धुरम्; महोद्धतम्. २ महामहौजस्तरसा युधे दधे महो महीयस्तरमादध-
धि. ३ नन्विन्द्रनीलाचलचण्डविग्रहम्; नवेन्द्रनीलोचितचण्डविग्रहम्. ४ शिलोच्चये.
स्थितोऽतिमत्ते महिषेऽसुभीषणः; अधिष्ठितः कासरमुद्धतं मुदा. ६ रणोत्सुकः.
अभ्यगात्. ८ मदोद्धतः प्रेतवराधिरोहणः; मदोद्धतप्रेतवराधिरूढः. ९ अभ्यगात्.

[1]नवोद्यदम्भोधरघोरदर्शने युद्धाय[2] रूढो मकरे[3] महत्तरे[4] ।
दुर्वारपाशो वरुणो रणोल्बण[5]स्तमन्वियाय त्रिपुरान्तकात्मजम्

नवेति ॥ रणे युद्ध उल्बण उद्भटो वरुणः प्रचेताः । 'वरुणस्तरुभेदे पश्चिमाशापतावपि' इति मेदिनी । नवो नव्यः । 'नवो नव्यः स्तुतौ' इति मेदि[नी] उद्यन्नुदयमानो योऽम्भोधरो मेघस्तद्वद्घोरदर्शने भयानकदर्शने । 'घोरं भयानकम्' इत्यमरः । तथा महत्तरेऽतिशयदीर्घे मकरे नक्रे रूढः । तथा दु[र्वारः] पाश आयुधविशेषो यस्य । पाशधरः सन्नित्यर्थः । युद्धाय युद्धं कर्तुं तं त्रिपु[रा]न्तकस्य शिवस्यात्मजं पुत्रं कुमारमन्वियायान्वगच्छत् ॥

दिगम्बरा[6]धिक्रमणोल्बणं क्षणान्मृगं महीयांसमरुद्धविक्रमम् ।
अधिष्ठितः संगरकेलिलालसो[7] मरुन्महेशात्मजमन्वगा[8]द्द्रुतं[9]म् ॥१

दिगिति ॥ संगरकेलौ संग्रामक्रीडायां लालसा कामो यस्य । 'लाल[सा] त्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः' इति मेदिनी । तथाभूतो मरुत्प[वनः] वायुकोणाधीशः क्षणान्मुहूर्तमात्रेणैव । 'क्षणः पर्वोत्सवे च स्यात्तथा मानेऽन[व]हसि' इति मेदिनी । दिशामम्बरस्य च । 'अम्बरं वाससि व्योम्नि' इति मेदि[नी] अधिक्रमण आक्रमण उल्बणमुद्भटं महीयांसं महत्तरम् । अरुद्धोऽप्रति[हतो] विक्रमो विवत्पक्षिवत्क्रमः पादक्षेपो यस्य तथाभूतं मृगं हरिणम् । 'मृगः प[शौ] कुरङ्गे च करिनक्षत्रभेदयोः' इति मेदिनी । अधिष्ठितः सन् । तं महेशात्म[जं] कुमारं द्रुतं सत्वरमन्वगादनुजगाम ॥

विरोधिनां [10]शोणितपारणैषिणीं गदामनूनां नरवाहनो वहन्
महाहवाम्भोधिवि[11]गाहनोद्धतं यियासुमन्वा[12]गमदीशनन्दनम् ॥१

विरोधिनामिति ॥ नरवाहनः कुबेरः । 'पौलस्त्यो नरवाहनः' इत्यम[रः] । विरोधिनां शत्रूणां संबन्धि शोणितं रुधिरं तेन या पारणा भोजनं तामिच्छ[ति] तथाभूतामनूनामन्यूनसारां गदामायुधविशेषं वहन्धारयन्सन् महाहवो मह[ा]रणः स एवाम्भोधिः समुद्रस्तस्य विगाहन उद्धतमुद्भटम् । समर्थमिति याव[त्] । अत एव यियासुं जिगमिषुमीशनन्दनं शिवपुत्रं कुमारमन्वगमत् । अनुगच्छ[ति] स्मेत्यर्थः ॥

महाहिनिर्बद्ध[13]जटाकलापिनो ज्वलत्त्रिशूलप्रबला[14]युधा युधे[15] ।
रु[16]द्रास्तुषाराद्रिसखं[17] महावृषं ततोऽधिरूढास्तमयुः पिनाकिनः ॥१

१ नवोदयाम्भोधरघोरदर्शनः; नवोदयस्तोरणघोरदर्शनम्; नवोदयास्तोरणघोरद[र्श]नम्. २ युद्धेऽधिरूढः; युद्धोपरूढः. ३ मकरम्. ४ महत्तरम्. ५ रणोल्बणम्. ६ अधि[क्र]क्रमण. ७ लालसम्. ८ अभ्यगात्. ९ ध्रुवम्. १० विग्रह. ११ विगाहमान. १२ अभ्यागमत्. १३ निर्बन्ध. १४ प्रवरायुधाः. १५ युधि. १६ रुषा. १७ समन्

महाहीति ॥ ततोऽनन्तरं पिनाकिनः पिनाकवन्तो रुद्रा ईशानकोणाधीशाः महाहिभिर्महद्भिः सर्पैः कृत्वा निर्बद्धो यो जटाकलापः सोऽस्ति येषाम् । अथवा महाहिभिर्निर्बद्धा जटा येषाम् । 'शेषाद्विभाषा' इति कप् । तथाला- न इदानीं तारकं जेष्याम इत्युद्धतवादिनश्च । ततो विशेषणसमासः । केचित्तु महाभरावराः' इति पाठं कल्पयन्ति । यथास्थितव्याख्याने तु 'न कर्मधार- यान्मत्वर्थीयः' इति मत्वर्थीयप्रसङ्गो दुर्वार इत्यलम् । तथा ज्वलद्दीप्यमानं शूलमेव प्रबलं सबलमायुधं येषाम् । तथा तुषाराद्रेर्हिमवतः सखं सखायम् । ...द्बच्छुभ्रमित्यर्थः । महावृषम् । जातावेकवचनम् । अधिरूढाश्च सन्तः । युधे ...द्धाय तं कुमारमयुः । अन्वयुरित्यर्थः ॥

अन्येऽपि संनह्य महारणोत्सवश्रद्धालवः स्वर्गिगणास्तमन्वयुः ।
स्ववाहनानि प्रबलान्यधिष्ठिताः प्रमोदविस्मेरमुखाम्बुजश्रियः १३

अन्येऽपीति ॥ अन्येऽप्युक्तातिरिक्ता अपि स्वर्गिगणाः देवगणाः प्रमोदेन आनन्देन विस्मेरा विशेषेण समन्दहासा मुखाम्बुजश्रीर्येषाम् । अत एव महति रणोत्सवे श्रद्धालवः श्रद्धाशीला अत एव प्रबलानि स्ववाहनान्यधिष्ठिताः । तथा कवचादिना संनह्य संनद्धा भूत्वा तं कुमारमन्वयुः । अनुजग्मुरित्यर्थः ॥

अथ युग्मेनाह—

उद्दण्डहेमध्वजदण्डसंकुलाश्चलद्विचित्रातपवारणोज्ज्वलाः ।
चलद्घनस्यन्दनघोषभीषणाः करीन्द्रघण्टारवचण्डचीत्कृताः १४

स्फुरद्विचित्रायुधकान्तिमण्डलैरुद्द्योतिताशावलयाम्बरान्तराः ।
दिवौकसां सोऽनुवहन्महाचमूः पिनाकपाणेस्तनयस्ततो ययौ १५

उद्दण्डेति ॥ स्फुरदिति च ॥ ततः सर्वसंनहनानन्तरं स पिनाकपाणे- रस्य तनयः कार्तिकेय उद्दण्डा उच्चनालदण्डा ये हेमध्वजाः सुवर्णविकारध्वजा- स्तेषां दण्डैर्नालदण्डैः संकुला व्याप्ताः । अनेकध्वजदण्डवत्य इत्यर्थः । चलन्ति कम्प्यमानानि तथा विचित्राणि हरितपीतादिकर्णयुक्तानि च यान्यातपवारणानि छत्राणि तैरुज्ज्वलाः । कान्तिमत्य इत्यर्थः । चलन्तो ये घना मेघास्त इव ये स्यन्दना रथास्तेषां घोषेणारवेण भीषणा भयानकाः । तथा करीन्द्राणां मत्तद्वि- पानां संबन्धीनि घण्टारवाः, चण्डानि भीषणानि चीत्कृतानि च यासु । चीत्कृ- तमिति शब्दानुकृतिः । तथा स्फुरन्ति सर्वतः प्रसरन्ति विचित्राण्यनेकवर्णान्यायु- धसंबन्धिनीनां कान्तीनां द्युतीनां मण्डलानि वलयानि तैः कृत्वोद्योतितमुच्चैः शोभितमाशावलयं दिङ्मण्डलमम्बरान्तरमाकाशमध्यं च याभिः । 'अम्बरमव- काशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरा-

१ महामहोत्सव, महामहोत्सवाः. २ प्रवराणि. ३ चलत्. ४ उल्बणाः. ५ घनाघना. ६ चक्रि. ७ कन्दलैः. ८ अम्बरा वराः.

त्मनि च' इति मेदिनी । एवंविधा दिवौकसां देवानां महाचमूर्महती: सेना अनु पश्चाद्धहन्सन् ययौ । जगामेत्यर्थः ॥

**कोलाहलेनोच्चलतां दिवौकसां महाचमूनां गुरुभिर्ध्वजव्रजैः ।**
**घनैर्निरुच्छ्वासमभूदनन्तरं दिङ्मण्डलं व्योमतलं महीतलम् ॥**

कोलाहलेति ॥ उत्प्लुत्योड्डीय चलताम् । रोषवशादिति भावः । दिवौकसां देवानां कोलाहलेन घोरघोषेण । तथा महाचमूनां गुरुभिर्विशालैः सघनैः । पुष्टैरिति यावत् । ध्वजव्रजैर्ध्वजसमूहैश्च कृत्वा निरुच्छ्वासं निरुद्ध... निरोधहेतुकव्याप्तिमद्दिशां मण्डलं व्योमतलं महीतलमनन्तरमनुच्छ्वासमा... दमभूत् । 'एकमेवाद्वितीयं ब्रह्म' इत्यद्वैतवादिनां ब्रह्मणोऽद्वैतत्वप्रति... निदर्शनमभूदिति भावः ॥

**सुरारिलक्ष्मीपरिकम्पहेतवो दिक्चक्रवालप्रतिनादमेदुराः ।**
**नभोन्तकुक्षिंभरयो घनाः स्वना निहन्यमानैः पटहैर्वितेनिरे ॥**

सुरारीति ॥ निहन्यमानैस्ताड्यमानैः पटहैः कर्तृभिः 'पटहो ना सम... आनके पुंनपुंसकम्' इति मेदिनी । 'आनकः पटहोऽस्त्री स्यात्' इत्यम... सुरारिलक्ष्म्यास्तारकसंपदः संबन्धिनि परिकम्पे हेतवो निदानम् । ... चक्रवाले मण्डले । 'चक्रवालं तु मण्डलम्' इत्यमरः । ये प्रतिनादः प्रति... स्तेन मेदुराः पुष्टाः । तथा नभोन्तेनाकाशप्रान्तेन । प्रान्तपर्यन्तेनेत्यर्थः । ... भरन्ति पिपुरति नभोन्तकुक्षिंभरयः । सर्वं नभो व्याप्नुवन्त इत्यर्थः । '... हिरात्मंभरिश्च' इत्यत्र चात्कुक्षेरपि समावेशात्कुक्षिंभरिरिति सिद्धम् । ... घनाः सान्द्राः स्वनाः शब्दा वितेनिरे । वितस्तरिर इत्यर्थः ॥

**प्रमथ्यमानाम्बुधिगर्जितर्जनैः सुरारिनारीगणगर्भपातनैः ।**
**नभश्चमूधूलिकुलैरिवाकुलं ररास गाढं पटहप्रतिस्वनैः ॥ १८**

प्रमथ्यमानेति ॥ चमूनां धूलिकुलै रेणुसमूहैः । 'कुलं जनपदे ... सजातीयगणेऽपि च' इति मेदिनी । आकुलं व्याप्तं पीडितं नभः प्रमथ्यमा... ऽवलोड्यमानो योऽम्बुधिस्तस्य गर्जो गर्जनं तस्य तर्जना जेतारः । ततोऽप्यधि... गर्जनैरित्यर्थः । अत एव सुरारेस्तारकस्य यो नारीगणः स्त्रीसमूहस्तस्य ... गर्भस्तस्य पातनैः पातनकारिभिः । अतिगर्जनभयादिति भावः । पटहप्रति... नैरानकप्रतिघोषैः कृत्वा गाढं दृढं यथा तथा ररासेव रुरोदेव । उत्प्रेक्षालंका... आर्तानां रोदनमेवैकं शरणं भवतीति भावः ॥

**क्षुण्णं रथैर्वाजिभिराहतं खुरैः करीन्द्रकर्णैः परितः प्रसारितम्**

१ उच्छलता. २ ध्वजाग्रैः. ३ अलंतराम्. ४ घनस्वनाः. ५ अर्णवगर्जितस्व... ६ वरारि. ७ आकुलैः. ८ क्षिप्तम्.

...ध्वजैः काञ्चनशैलजं रजो वातैर्हतं व्योम समारुहत्क्रमात् १९

...क्षुण्णमिति ॥ रथैः स्यन्दनैः क्षुण्णमुत्खनितम्। तथा काञ्चनशैलजं सुमेरु-...तजनितम्। इदं विशेषणं पीतत्वद्योतनार्थम्। रजो धूलिः। वाजिभिरश्वैः ...भिः। खुरैः करणैः। कृत्वा हतं चूर्णीकृतम्। पिष्टीकृतमिति यावत्। तथा ...न्द्राणां मत्तगजानां कर्णैः श्रवणैः परितः सर्वतः प्रसारितं विस्तृतम्। तथा ...धूतं कम्पितम्। एतेन सघनता द्योतिता। तथा वातैः पवनैर्हतं स्पृष्टम्। ...न पवनस्योपरि रंहःप्राप्तौ साधकतोक्ता। क्रमाद्यथाक्रमं व्योम कर्म। समा-...द्। आकाशमारूढमित्यर्थः। अत्र रुहेर्भौवादिकत्वाल्लुङि गुणप्रसङ्गः, लुङि ...न्तत्वात्क्सप्रसङ्गः, णिजन्तत्वे लङि यकारश्रवणप्रसङ्गः, इत्यतोऽयं प्रयोगश्चिन्त्य ...बहवः। वयं तु व्योझ्याकाशे सम्यगारोहतीति समारोहः, इगुपधलक्षणः ...तत आचारार्थे क्विपि अल्लोपे धातुत्वाल्लङि शपि अल्लोपस्य स्थानिवत्त्वाद्गु-...भावे च रूपसिद्धिरिति समादध्महे ॥

...न केवलं व्योमन्यारूढं किंतु दिगन्तेष्वपि तथेत्याह—

...तं खुरैं रथ्यतुरंगपुंगवैरुपत्यकाहाटकमेदिनीरजः।
...तं दिगन्तान्मुखरैः समीरणैः सुविभ्रमं भूरि बभार भूयसा ॥२०॥

...खातमिति ॥ रथं वहन्ति ते रथ्याः। 'तद्वहति रथयुगप्रासङ्गम्' इति यत्। ...क्ता ये तुरंगपुंगवा अश्वश्रेष्ठास्तैः कर्तृभिः। खुरैः कृत्वा खातं क्षुण्णम्। ...त्यकाद्रेरासन्ना या हाटकमेदिनी सुवर्णभूमिः। अद्रेः सौवर्ण्यासन्नभूमिरिति ...र्यार्थः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इत्यासन्नार्थे त्यकन्प्रत्ययः। तस्याः ...न्धि। रजः कर्तृ। भूरि बहलं मुखरैः शब्दायमानैः समीरणैः पवनैर्दिगन्ता-...स्थान्तान्गतम्। गमितमित्यर्थः। अन्तर्भावितणिजर्थोऽत्र बोध्यः। तथोक्तं ...र। भूयसातिशयेन शोभमानं विभ्रमं विलासम्। शोभामिति यावत्। ...भार धृतवान्। अत्यन्तं शुशुभ इत्यर्थः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधि-...का' इत्यमरः ॥

...धस्तथोर्ध्वं पुरतोऽथ पृष्ठतोऽभितोऽपि चामीकररेणुरुच्चकैः।
...मूषु सर्पन्मरुदाहतोऽहरन्नवीनसूर्यस्य च कान्तिवैभवम् ॥ २१ ॥

अध इति ॥ चमूषु सेनासु मरुता पवनेनाहत उत्पादितः। अत एवाधो ...चैः। तथोर्ध्वमूर्ध्वभागे। तथा पुरतोऽग्रभागे। अथ पृष्ठतः पृष्ठभागे। तथा-...तोऽपीतस्ततश्च सर्पन्प्रसरन्। चामीकररेणुः सुवर्णरजः। सुवर्णपर्वतोद्भूतत्वा-...ति भावः। नवीनसूर्यस्योपस्यसूर्यस्य कान्तिवैभवं द्युतिसंपदमहरत्। ततो-...त्यधिकं शुशुभ इत्यर्थः ॥

१ धृतं घनैः. २ ससार ततः; समासदत्. ३ क्षणात्. ४ उपत्यकानां ...कस्थलीरजः. ५ प्रखरैः. ६ दाहभ्रमम्. ७ तत्कालबालातपवैभवं बहु; ...त्कालबालारुणवैभवं बहु.

बलोद्धूतं[1] काञ्चनभूमिजं रजो बभौ दिगन्तेषु नभःस्थले[2] स्थितम् ।
अकालसंध्याघनरागपिङ्गलं[3] घनं घनानामिव वृन्दमुद्यतम्[4] ॥ २

बलोद्धूतमिति ॥ काञ्चनस्य भूमौ जातं रजो धूलिर्बलोद्धूतं सैन्येनोत् तमत एव दिगन्तेषु दिक्प्रान्तेषु तथा नभःस्थल आकाशदेशे स्थितं च अकाले या संध्या तस्या यो घनः सान्द्रो रागो लौहित्यं तेन पिङ्गलं पिशङ्गम्। 'पिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः । तथा घनं सान्द्रमुद्यतमुत्पन्नम् । पर्वतेभ्य शेषः । घनानां मेघानां वृन्दं समूह इव बभौ । अकालसंध्यालिप्तो मेघो भाति तद्वत्सुवर्णभूमिजमपि रजो बभावित्यर्थः । अत्र पूर्णोपमालंकारः। भानाश्रयीभूते रजसि घनवृन्दत्वेनोत्प्रेक्षासंभवात्संभावनैवास्त्विति सत्यम् । क्रियाप्राधान्यमते रजःकर्तृकशोभायां घनवृन्दत्वोत्प्रेक्षापत्तेः ॥

हैमावनीषु[5] प्रतिबिम्बमात्मनो मुहुर्विलोक्याभिमुखं महागजाः ।
रसातलोत्तीर्णगजभ्रमात्[6] क्रुधा दन्तप्रकाण्डप्रहतानि[7] तेनिरे ॥ २

हैमेति ॥ महागजा महान्तो दन्तिनो हेम्नः सुवर्णस्यावनीषु प्र पतितमात्मनः प्रतिबिम्बमभिमुखं विलोक्य रसातलात्पातालात्। 'अधो पातालं बलिसद्म रसातलम्' इत्यमरः । उत्तीर्णा उत्थिता ये गजास्तेषां भ्रान्त्या निमित्तेन । जातयेति शेषः । क्रुधा क्रोधेन । 'प्रतिघा रुट्क्रुधौ स्त्रि' इत्यमरः । मुहुरनुवेलं दन्ता एव प्रकाण्डाः स्तम्बाः । 'काण्डं स्तम्बे तरु बाणेऽवसरनीरयोः' इति मेदिनी । तैस्तत्कर्मकानि प्रहतानि प्रहारान्। निष्ठा । तेनिरे वितस्तरिरे । कर्तरि लिट् । 'अत एकहल्मध्येऽनादे-' इत्ये भ्यासलोपौ । पृथिव्यामात्मप्रतिबिम्बदर्शनेनान्यगजभ्रमवतां गजानां यु प्रहारकरणमिति भावः । 'नान्यस्य गन्धमपि मानभृतः सहन्ते' इति गन्धस्य दुःसहत्वात् । किं पुनः साक्षाद्दर्शनस्य । तद्दर्शनं तद्वति तत्प्रकारकमत तत्प्रकारकं वा तत्र तेषां नातीव निग्रहः । मानान्धतायाः प्राधान्यात् ॥

सुजातसिन्दूरपरागपिञ्जरैः कलं चलद्भिः सुरसैन्यसिन्धुरैः ।
शुद्धासु चामीकरशैलभूमिषु नादृश्यत[8] स्वं प्रतिबिम्बमग्रतः ॥ २४

सुजातेति ॥ सुजातः शोभनो यः सिन्दूरस्य परागो रजस्तेन पिञ्जरैः तथा कलं मन्द्रं यथा तथा चलद्भिर्गच्छद्भिः सुराणां देवानां सैन्यस्य सिन्धुरैः कर्तृभिः । शुद्धासु निर्मलास्वपि चामीकरशैलस्य सुमेरुपर्वतस्य भूमिष्वग्र पतितमपि स्वं प्रतिबिम्बं नादृश्यत नालोकि । कर्मणि लङ् । आधाराधेययो कवर्णतया पृथगभासमानत्वादिति भावः । 'सिन्दूरस्तनुभेदे स्यात्सिन्दूरं चूर्णके' इति मेदिनी ॥

---

१ वातोद्धतम्; बलोद्धतम्. २ नभस्तले. ३ पिङ्गितम्. ४ दण्ड
५ हैमावनीषु. ६ गजभ्रमेण ते. ७ प्रहतानि; प्रकृतानि. ८ व्यदृश्यत.

क्रमेणामरराजवाहिनी महाहवा[1]म्भोधिविलासलालसा ।
तरत्काञ्चनशैलतो द्रुतं कोलाहला[2]क्रान्तविधूतकन्दरा ॥२५॥

तीति ॥ महानाहवः सङ्ग्रामः स एवाम्भोधिः समुद्रस्तत्र यो विलासो ला । क्रीडेति यावत् । 'विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्' इति नी । तत्र लालसौत्सुक्यं यस्याः । तथा कोलाहलेन कलकलेन । 'कोलाहलः कलः' इत्यमरः । आक्रान्ता व्याप्ता अत एव विधूताः कम्पिताः कन्दरा या यया । 'कन्दरस्त्वङ्कुशे पुंसि गुहायां न नपुंसकम्' इति मेदिनी । एवं-मरराजवाहिनीन्द्रसेना । 'वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः' इति नी । इति क्रमेण पूर्वोक्तक्रमेण काञ्चनशैलतः सुमेरोः सकाशाद्द्रुतं शीघ्रम-रत् । उत्ततारेत्यर्थः ॥

ाचमूस्यन्दनचण्डचीत्कृतैर्विलोलघण्टे[4]भपतेश्च बृंहितैः ।
न्द्रशैलेन्द्रमहागुहाशयाः सिंहा महत्स्वप्नसुखं न तत्यजुः ॥२६॥

महेति ॥ सुरेन्द्रस्येन्द्रस्य शैलेन्द्रे मेरौ या महगुहा महागह्वराणि तासु ते स्वपन्ति । गुहासु निद्रां कुर्वन्त इत्यर्थः । तथाभूताः सिंहा मृगेन्द्रा ाचमूषु महतीषु सेनासु ये स्यन्दना रथास्तेषां चण्डैः प्रचण्डैः । तीव्रैरिति त् । 'चण्डो धनहरी शङ्खपुष्पास्विष्वतिकोपने । तीव्रेऽपि चूडावलभौ शि-यां बाहुभूषणे ॥' इति मेदिनी । चीत्कृतैः शब्दविशेषैः । इयं च शब्दानु-ः । तथा विलोलघण्टोऽतिचपलघण्टो य इभपतिर्गजराजस्तस्य । जातावेक-नम् । बृंहितैर्गर्जितैश्च । 'बृंहितं करिगर्जितम्' इत्यमरः । महद्दीर्घं स्वप्ने द्रायां यत्सुखम् । 'सुखं शर्मणि ना नाके' इति मेदिनी । 'स्वपो नन्' इति त्ययः । न तत्यजुर्न जहुः । अत्र निद्राप्रतिबन्धाश्रयीभूतबहुविधकोलाहल- सत्यपि निदाने निद्राभङ्गरूपकार्योत्पत्त्यभावाद्विशेषोक्तिरलंकारः । 'कार्या-निर्विशेषोक्तिः सति पुष्कलकारणे' इति लक्षणात् । 'शयवासवासिष्वकालात्' ति सूत्रे हलदन्तादेवेति नियमाद्गुहाशय इत्यत्र तदभावान्नालुक् ॥

भीरभेरिध्वनितैर्भयंकरैर्म[6]हागुहान्तप्रतिनादमेदुरैः ।
रथानां गुरुनेमिनिःस्वनैरनाकुलैस्तैर्मृगराजता[8]जनि ॥ २७ ॥

गम्भीरेति ॥ महान्तः परिणाहिनो ये गुहान्ता गह्वरमध्यानि तेषु यः प्रति-दः प्रतिध्वनिस्तेन मेदुरैः पुष्टैः । अत एव भयंकरैर्विभीषकैः । 'मेघर्तिभयेषु ः' इति खश् । गम्भीराणि मन्द्राणि यानि भेरिध्वनितानि दुन्दुभिशब्दाः । रीः स्त्री दुन्दुभिः पुमान्' इत्यमरः । तैः । तथा महारथानां महतां स्यन्द-

---

१ हवारम्भ. २ कोलाहलावृत्तिविधूतकन्दरा; कोलाहलाकूतविधूतकन्दरा; लाहलाकृत्तविधूतकन्दराः. ३ महाचमूनां करिचण्ड. ४ घण्टाक्वणितोपबृंहितैः. ५ महास्वप्न. ६ मुहुर्गुहान्तः. ७ गुरुनादनिःस्वनैः. ८ तापि किम्.

नानां संबन्धिन्यो या गुरुनेमयो महत्यश्चक्रधाराः । 'चक्रधारा प्रधिर्नेमिः' इत्य-
मरः । तासां निःस्वनैः शब्दैश्चापि । निमित्तभूतैरित्यर्थः । अनाकुलैराकुलत्वा
ववद्भिस्तैः सिंहैर्निमित्तैर्मृगराजता मृगाधिपत्यम् । अन्वर्थेति शेषः । सार्थ
जाता । राज्ञामयमेव परमो धर्मः प्रतिकर्तुमशक्तैरपि यदरिभ्यो न भेतव्यमि
तदेभिर्मृगराट्त्वधारिभिः । कथंचिदपि न भीतम् । अतो युक्तमेषां खलु मृ
राज इत्यभिधानमित्यभिप्रायः । अत्रापि विशेषोक्तिरलंकारः ॥

**स[1]मुत्थितेन त्रिदिवौकसां म[2]हाचमूरवेणाद्रितटान्तदारिणा ।**
**प्रपेदिरे केसरिणोऽधिकं मदं स्व[3]वीर्यलक्ष्मीमृगराजतावशात् ॥२**

समुत्थितेनेति ॥ समुत्थितेन समुदितेनात एवाद्रेः सुमेरोस्तटान्तानां म
मध्यानाम् । 'तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु' इति मेदिनी । 'प्रपात
तटो भृगुः' इत्यमरश्च । दारिणा विदारकेण । अतिघोषेण महान्तः पर्वतभृगवो
विदीर्णा बभूवुरित्यर्थः । अत्र शब्दकर्तृकपर्वततटविदारणस्यायोगेऽपि तद्यो
ग्वचनात्संबन्धादतिशयोक्तिरलंकारः । त्रिदिवौकसां देवानां संबन्धिन्यो या म
चम्वो महत्यः सेनाः । 'चमूः सेनाविशेषेऽपि सेनामात्रे च योषिति' इति मेदि
तासां रवेण ध्वनिना निमित्तेन केसरिणः सिंहाः कर्तारः । स्वस्य वीर्यं परा
एव लक्ष्मीः शोभा यस्याः । आत्मपराक्रमशालिनीत्यर्थः । तथाभूता या मृग
जता हरिणाधिपत्यं तस्या वशादायत्तत्वात् । 'वशो जनस्पृहायत्तेष्वायत्तत्वप्र
त्वयोः' इति मेदिनी । अधिकं बहु मदं गर्वं प्रपेदिरे । कर्तरि लिट् । भय
कोऽपि चमूरवः प्रत्युत सिंहानामधिकमदकारक एव जात इति भावः ॥

**भिया सुरानीकविमर्दजन्मना विदुद्रुवुर्दूरतरं द्रुतं मृगाः ।**
**गुहागृहान्ताद्बहिरेत्य हे[5]लया तस्थुर्वि[6]शङ्कं नितरां मृगाधिपाः ॥२**

भियेति ॥ मृगा हरिणाः । 'मृगः पशौ कुरङ्गे च' इति मेदिनी । सुरा
देवानामनीकस्य सैन्यस्य । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी । यो विमर्द
प्राणापहारि मर्दनं तज्जन्मना । ततो जनितयेत्यर्थः । भिया भयेन निमित्तेन द्रु
सत्वरं दूरतरं विदुद्रुवुः । पलायांचक्रिर इत्यर्थः । भयशीलत्वादिति भावः । अ
च मृगाधिपाः सिंहा हेलया क्रीडया । सहसैवेत्यर्थः । गुहागृहस्य गह्वररूप
सद्मनोऽन्तान्मध्याद्बहिरेत्य । 'अपपरिबहिः—' इति समासविधानाज्ज्ञापकात्
ञ्चमी । नितरां विशङ्कं निर्भयं यथा तथा तस्थुः ॥

**वि[7]लोकिताः कौतुकिनामरावतीजनेन जु[8]ष्टप्रमदेन दूरतः ।**

१ समुच्छ्रितेन. २ चमूरवेण तेन. ३ स्ववीरलक्ष्मी. ४ अभिष्ट
५ लीलया. ६ विनिःशङ्कतराः. ७ विलोकिता. ८ जातप्रमदेन; दुष्टं प्रमदे

राचलप्रान्तभुवः[1] प्रपेदिरे सुविस्तृतायाः[2] प्रसरं सुसैनिकाः[3] ॥३०॥

विलोकिता इति ॥ कौतुकिना । सैनिकदर्शने कौतुकाविष्टचेतसेत्यर्थः । प्रमदेन सेवितकलत्रेण । कलत्रसहितं वर्तमानेनेति फलितोऽर्थः । अमराव-तीजनेन सुरेन्द्रनगरीलोकेन दूरतो दूरात् । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति मी । 'पञ्चम्याः–' इति तसिल् । विलोकिता दृष्टाः सुसैनिकाः शोभनाः स्थलोकाः कर्तारः । सुतरां विस्तृतायाः सुराचलस्य सुमेरोर्या प्रान्तभूस्तस्याः रं प्रदेशं प्रपेदिरे प्रापुः । सुमेरोरवरुह्याधः प्रापुरिति भावः ॥

तासितारक्तसितैः[4] सुराचलप्रान्तास्थितैर्धातुरजोभिरम्बरम्[5] ।
यत्नगन्धर्वपुरोदयभ्रमं बभार भूम्नोत्पतितैरितस्ततः ॥ ३१ ॥

पीतासितेति ॥ अम्बरं नभः कर्तृ । इतस्ततः सर्वत्रेत्यर्थः । भूम्ना बाहु-ल्येनोत्पतितैरुड्डयितैरत एव सुराचलस्य सुमेरोः प्रान्तेषु स्थितैः । प्रान्तत्वं ह्यूर्ध्व-क्रमवगन्तव्यम् । तथा पीतानि चासितानि चारक्तानि च सितानि च तैर्धा-तुरजोभिर्गैरिकादिधूलिभिर्निमित्तेन । अयत्नेन यत्नाभावेन अनायासेनेतियावत् । गन्धर्वपुरस्य देवगायननगरस्योदय उत्पत्तिस्तस्य भ्रमं बभार धृतवत् । भ्रान्त-वितणिजर्थः । गन्धर्वपुरस्य ह्यनेकवर्णपरिमण्डितत्वरूपसामान्यधर्मेण नभसो मा तन्मूलिका भ्रान्तिः । अत उपमोत्थापितोऽयं भ्रान्तिमानलंकारः । भयोरङ्गाङ्गिभावेन संकरः ॥

हास्वनः सैन्यविमर्दसंभवः कर्णान्तकूलंकषतामुपेयिवान्[6] ।
योनिधेः क्षुब्धतरस्य वर्धनो[7][8] बभूव भूम्ना भुवनोदरंभरिः ॥ ३२ ॥

महास्वन इति ॥ कर्णान्तः श्रवणमध्यं स एव कूलं तटम् । 'अथ कूलं तटे सैन्यपृष्ठतडागयोः' इति मेदिनी । तत्कषत्युन्मार्ष्टि तस्य भावस्तत्ता ताम् । कूलाभ्रकरीषेषु कषः' इति खश् । 'अरुर्द्विषत्–' इति मुम् । उपेयिवान्प्रा-न् । कर्णान्तं स्फोटयन्नित्यर्थः । क्षुब्धतरस्यात्यन्तसंचलितस्य । वेलामतिक्रा-त्यर्थः । पयोनिधेः समुद्रस्य वर्धनः । कर्तरि ल्युट् । तथा भुवनैः कृत्वोदरं तीति तथोक्तः । आवृतसकलब्रह्माण्डत्वाद्भुवनानां मध्यपातो युक्त इति भावः । भूतः सैन्यविमर्दसंभवः सेनासंघट्टनोत्पन्नो महास्वनो भूम्ना बाहुल्येन युक्तो । अतिमहत्त्वविशिष्टो जात इत्यर्थः ॥

गजानां गुरुबृंहितैस्ततैः[9][10][11] सुहेषितैर्घोरतरैश्च वाजिनाम् ।
रथानां गुरुचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य निःस्वनः ३३

महागजानामिति ॥ महागजानां महतां दन्तिनां संबन्धिभिर्गुरुबृंहितैर्गु-

---

१ भुवि. २ सुविस्तृतायाम्. ३ न सैनिकाः. ४ पीतासितं रक्तसितम्. ५ प्रान्तोत्थितैः. ६ अखर्वः. ७ सुतराम्; नितराम्. ८ रवः प्रगल्भाहतभेरि-भवः. ९ मूलंकषताम्. १० मन्थनः. ११ शतैः; स तैः. १२ स्वनैः.

रूणि गम्भीराणि यानि बृंहितानि ध्वनितानि तैः । तथा ततैर्विस्तृतैः । व
घोरतरैरत्यन्तभयंकरैर्वाजिनां सुहेषितैः शोभनहेषणैः । तथा घनैर्गम्भीरै रथ
संबन्धिभिर्गुरूणि महान्ति चण्डानि भयानकानि च यानि चीत्कृतानि तैश्च
हस्य निःस्वनः स्वनस्तिरोहितोऽन्तर्हितः । अप्रकाशित इति यावत् । अभूत् ।

**महासुराणामवरोधयोषितां कचाक्षिपक्ष्मस्तनमण्डलेषु च ।**
**ध्वजेषु नागेषु रथेषु वाजिषु क्षणेन तस्थौ सुरसैन्यजं रजः ॥३**

महासुराणामिति ॥ महासुराणां तारकादीनां संबन्धिनीनामवरोधयो
तामन्तःपुरस्त्रीणाम् । 'शुद्धान्तश्चावरोधश्च' इत्यमरः । संबन्धीनि कचा
अक्षिपक्ष्माणि च, स्तनमण्डलानि च तस्मिन् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना
इति प्राण्यङ्गत्वादेकवद्भावः । तथा ध्वजेषु नागेषु हस्तिषु रथेषु वाजिषु च
सान्द्रं सुरसैन्यजं रजो धूलिः क्षणेन तस्थौ । अनेन तेषां शत्रूणामशुभसूच
ध्वनिः ॥

**घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचितं नभःस्थलम् ।**
**अयायि हंसैरभि मानसं घनभ्रमेण सानन्दमनर्ति केकिभिः ॥३**

घनैरिति ॥ घनैः सान्द्रैरत एव स्थगितार्कमण्डलैराच्छादितसूर्यबिम्बैश्च
जोभिः सेनाधूलिभिर्निचितं व्याप्तं नभःस्थलं व्योमदेशं विलोक्य घनभ्रमे
मेघभ्रान्त्या हंसैर्मरालैर्मानसं सरोऽभि संमुखमयायि गतम् । भावे लुङ् । ते
वर्षास्वप्रगल्भत्वादिति भावः । अथ च केकिभिर्मयूरैः सानन्दं सहर्षमन
नृत्यमकारि । अत्रापि भावे लुङ् ॥

**सान्द्रैः सुरानीकरजोभिरम्बरे नवाम्बुदानीकनिभैरभिश्रिते ।**
**चकाशिरे स्वर्णमया महाध्वजाः परिस्फुरन्तस्तडितां गणा इव ॥**

सान्द्रैरिति ॥ अम्बरे नभसि । 'अम्बरं वाससि व्योम्नि कार्पासे च सु
न्धके' इति मेदिनी । नवो नूतनः । वार्षिक इति यावत् । योऽम्बुदो मेघस्तस्य
नीकं समूहस्तन्निभैस्तत्सदृशैः । 'निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु' इति
मेदिनी । तथा सान्द्रैः सघनैः । 'सान्द्रं बले वापि घने मृदौ च' इति मेदिनी
सुराणामनीकस्य सैन्यस्य रजोभिः । 'रजो रेणौ परागे स्यादार्तवे च गुणा
न्तरे' इति मेदिनी । अभिश्रित आवृते सति स्वर्णमया हेममया महाध्वजा
महान्तो ध्वजाः । 'ध्वजः स्याच्छौण्डिके पुमान् । न स्त्रियां तु पताकायां खट्वा
मेढ्रचिह्नयोः' इति मेदिनी । परिस्फुरन्तः परितः स्फुरन्तः प्रकाशमानास्तडितां
विद्युताम् । 'तडित्सौदामिनी विद्युत्' इत्यमरः । गणाः समूहा इव चकाशि
शुशुभिरे ॥

---

१ ध्वलम्. २ चलैः. ३ नभस्तलम्. ४ अयापि; अवापि. ५ सान्द्रै
६ विलासिभिः श्रिते; निर्भरभिसुतैः. ७ स्वर्णमयध्वजव्रजाः; स्वर्णमया ध्वजव्रजाः.

**विलोक्य धूलीपटलैर्भृशं भृतं द्यावापृथिव्योरलमन्तरं महत् ।**
**किमूर्ध्वतोऽधः किमधस्त[1] ऊर्ध्वतो रजोऽभ्युपैतीति जनैरतर्क्यत ३७**

विलोक्येति ॥ जनैर्लोकैर्द्यावापृथिव्योर्द्यौश्च पृथिवी च तयोः । 'दिवसश्च पृथिव्याम्' इत्यत्र चकाराद्द्यावादेशः । महद्विशालमन्तरमवकाशो धूलीपटलैर्धूलिनिचयैर्भृशं बहु यथा तथा भृतं पूर्णं विलोक्य रज ऊर्ध्वतः सकाशादध उपैति । किंवाधस्तः सकाशादूर्ध्वत ऊर्ध्वभागे । सार्वविभक्तिकस्तसिः । अभ्युपैति इतीत्यलं पर्याप्तमतर्क्यत तर्कितम् । भावे लङ् । सर्वतो रजोव्याप्त्या कुत आगच्छतीति निश्चयाभावादिति भावः ॥

**न चोर्ध्वं न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषोर्गतिः[2] ।**
**सूच्यग्रभेद्यैः[3] पृतनारजश्चयै[4]राच्छादिता[5] प्राणिगणस्य सर्वतः ॥ ३८ ॥**

नोर्ध्वमिति ॥ सूच्यग्रेण सीवनद्रव्यपुरोभागेन । 'सूची तु सीवनद्रव्येऽप्याभिनयान्तरे' इति मेदिनी । भेद्यैर्भेत्तुं योग्यैः । 'ऋहलोः–' इति ण्यत् । अनेनातिसद्यस्ता द्योतिता । तथाभूतैः पृतनायाः सेनायाः । 'पृतना तु स्त्रियां सामान्यसेनाविशेषयोः' इति मेदिनी । रजसां चयैः समूहैः । 'चयः समूहे प्राकारमूलबन्धे समाहतौ' इति मेदिनी । सर्वत आच्छादितावृता प्राणिगणस्य जन्तुसमूहस्य चक्षुषोर्नेत्रयोः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । गतिः प्रसरणमूर्ध्वं नाभूत्, अधश्च नाभूत्, पुरो नाभूत्, पृष्ठतो नाभूत्, पार्श्वतोऽप्युभयतो नाभूत् । खलु निश्चयेन ॥

**दिगन्तदन्त्या[6]वलिदानहारिभिर्विमानरन्ध्रप्रतिनादमेदुरैः ।**
**अनेकवाद्य[7]ध्वनितैरनारतैर्जगर्ज गाढं गुरुभि[8]र्नभस्तलम् ॥ ३९ ॥**

दिगन्तेति ॥ दिगन्तेषु या दन्त्यावलिर्गजपङ्क्तिस्तस्या दानं मदजलं तस्य हारिभिः शोषकैः । घोरध्वनितश्रवणजनितभयवशाद्दिगन्तदन्तिनोऽपि शुष्कमदजला अभूवन्निति भावः । तथा विमानानां देवस्यन्दनानां रन्ध्रेषु जालेषु यः प्रतिनादः प्रतिध्वनिस्तेन मेदुरैः पुष्टैर्गुरुभिर्दीर्घैरनारतैरविद्यमानक्षणिकविरामैरनेकवाद्यानां मृदङ्गादीनां ध्वनितैर्घोषैः कृत्वा नभस्तलं कर्तृ गाढं दृढं जगर्ज । प्रतिननादेत्यर्थः । कोऽपि कस्मिंश्चित्कर्णकटुरवकारिणि सति तटस्थोऽपि प्रतिनदति तद्वत् । समासोक्तिरलंकारः—'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य यत्' इति लक्षणात् ॥

**भुवं विगाह्य प्रययौ महाचमूः क्वचिन्न मान्ती महतीं दिवं[10] खलु ।**
**ससंकुलायामपि तत्र निर्भरा[11]र्तिं किं कांदिशीकत्वमवाप नाकुला ॥४०॥**

भुवमिति ॥ महाचमूर्महती सेना भुवं विगाह्य व्याप्य क्वचिदपि भूमिस्थले

---

१ अधस्तात्. २ चक्षुषः. ३ सूच्यग्रभिन्नैः. ४ रजोभरैः; रजोभिः. ५ सुनिर्भरम्; सुनिर्भरैः. ६ दन्तावल. ७ वाह. ८ गुरुमत्सरादिव. ९ ततः. १० दिवमभ्यगात्ततः. ११ निर्भरा विकांदिशीकत्वम्.

न मान्त्यसमाविशन्ती सती महतीं विशालां दिवं स्वर्गं प्रययौ प्राप खलु वि- श्रयेन। अथ च निर्भरादधिकात्मभाराद्धेतोस्तत्रापि दिव्यपि सुतरां संकुला- व्याप्तायां सत्यामाकुला व्याकुला सती कांदिशीकत्वं भयद्रुतत्वम्। 'कांदिशीको भयद्रुतः' इत्यमरः। किं नावाप। अपि त्ववापैवेत्यर्थः। परस्परपेषणभिया व्याकु- लत्वाद्दुद्रुवुरित्यर्थः। अत्र द्रवणं द्रवणेच्छामात्रपरम्। द्रवणं कर्तुमैच्छदिति तात्प- र्यार्थः। अन्यथा व्याप्तेः प्रतिबन्धकत्वेन द्रवणासंभवाद्द्रवणोक्तेरफलत्वापत्तिः

उद्दामदानद्विपवृन्दबृंहितैर्नितान्तमुत्तुङ्गतुरंगहेषितैः।
चलद्घनस्यन्दननेमिनिस्वनैरभून्निरुच्छ्वासमिवाकुलं जगत्॥ ४१

उद्दामेति॥ उद्दामदाना उत्कटमदा ये द्विपा गजास्तेषां वृन्दस्य समूहस्य बृंहितैः शब्दैः। तथोत्तुङ्गा उन्नता ये तुरंगा अश्वास्तेषां हेषितैर्हेषाभिः। तथा नितान्तमत्यन्तं चलन्तो घना इव स्यन्दना रथास्तेषां या नेमयश्चक्रधारास्तासां निस्वनैश्च नितरामाकुलं व्याकुलं जगन्निरुच्छ्वासमिव निरुद्धश्वासमिवाभूत्। आ- कुलत्वसाधारणधर्मेण निरुद्धश्वासत्वमुत्प्रेक्षत इत्युत्प्रेक्षालंकारः॥

महागजानां गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोल्बणैः।
वीरप्रणादैः प्रमदप्रमेदुरैर्वाचालतामादधिरेतरां दिशः॥ ४२॥

महागजानामिति॥ महागजानां संबन्धिभिर्गुरुभिर्दीर्घैर्गर्जितै रणोल्बणैः वि- लोला या घण्टास्तासां रणितैश्च प्रमदेनोन्मादेन निमित्तेन प्रमेदुरैः प्रकर्षेण पुष्टैः वीरप्रणादैर्वीराणां शब्दैश्च दिशः काष्ठाः कर्त्र्यः। वाचालतां मुखरतामादधिरेत- रामतिशयेन धृतवत्यः। तरपि 'किमेत्तिङ्-' इत्याम्॥

दन्तीन्द्रदानद्रववारिवीचिभिः सद्योऽपि नद्यो बहुधा पुपूरिरे।
धारा रजोभिस्तुरगैः क्षतैर्भृता याः पङ्कतामेत्य रथैः स्थलीकृताः॥ ४३

दन्तीन्द्रेति॥ दन्तीन्द्राणां गजेन्द्राणां ये दानद्रवा मदस्रुतयस्तेषां वारीणि जलानि तेषां वीचिभिस्तरङ्गैः कर्तृभिः। नद्यो वाहिन्योऽपि सद्यो बहुधा पुपूरिरे पूरिताः। कर्मणि लिट्। ग्रीष्मसंतापेन शुष्का अपि नद्यो जलपूर्णा आसन्नित्यर्थः। अथ या नद्यस्तुरगैः क्षतैः क्षुण्णै रजोभिर्भृताः पूर्णा अतएव पङ्कतां कर्दमतामेत्य स्थिताः। ता रथैः कर्तृभिः। धाराश्चक्रधारा भ्रामयित्वा स्थलीकृताः॥

निम्नाः प्रदेशाः स्थलतामुपागमन्निम्नत्वमुच्चैरपि सर्वतश्च ते।
तुरंगमाणां व्रजतां खुरैः क्षता रथैर्गजेन्द्रैः परितः समीकृताः॥ ४४॥

१ द्विपबृंहितैः शतैः. २ चलध्वज. ३ अथ. ४ नभः; तत्. ५ रणो- ज्ज्वलैः. ६ वीरप्रभेदैः. ७ दानाम्बुधि; दानद्रुत. ८ बहु ताः. ९ धरारजो- भिस्तुरगक्षतैर्भृतं वाः पङ्कतामेत्य रजस्वलीकृतम्; धारारजोभिस्तुरगैः क्षितिर्भृता या पङ्कतामेत्य रथैः स्थलीकृता. १० निम्नप्रदेशाः. ११ सर्वतः स्थलम्; सर्वतः स्थलाः. १२ क्षिती. १३ समीकृता.

निम्ना इति ॥ निम्ना नीचाः प्रदेशा भूमयः स्थलतां समानभूमित्वमुपागमुः । सर्वत उच्चैरप्युन्नता अपि ते प्रदेशा निम्नत्वमुपागमन् । निम्नमुच्चैरवत्, अन्यप्रदेशोत्थापितधूलिपूरितत्वात् । उच्चैर्निम्नमभवत्, आत्मधूलीनात्र पतितत्वादिति भावः । अथ च ते प्रदेशा व्रजतां गच्छतां तुरंगमाणां : क्षताश्चुक्षुदिरे । अत एव रथैर्गजेन्द्रैश्च परितो निम्नोन्नतेषु समीकृताः । ाश्चक्रिर इत्यर्थः ॥

ोदिगन्तप्रतिघोषभीषणैर्महामहीभृत्तटदारणोल्बणैः ।
ोधिनिर्धूननकेलिभिर्जगद्बभूव भेरीध्वनितैः समाकुलम् ॥ ४५ ॥

नभ इति ॥ नभसि व्योम्नि दिगन्तेषु च यः प्रतिघोषः प्रतिध्वनिस्तेन भीषयानकैः । महान्ति यानि महीभृतां पर्वतानां तटानि भृगवस्तेषां दारणे न उल्बणैरुद्धटैः । समर्थैरिति यावत् । तथा पयोधेः समुद्रस्य निर्धूनने ने केलिः क्रीडा येषाम् । पयोधिमपि कम्पयद्भिरित्यर्थः । भेरीध्वनितैर्वदनैाद्यमानवाद्यविशेषरवैर्निमित्तैर्जगत्समाकुलं व्याकुलं बभूव ॥

स्ततो वातविधूतचञ्चलैर्नीरन्ध्रिताशागमनैर्ध्वजांशुकैः ।
ः कणत्काञ्चनकिङ्किणीकुलैरमज्जि धूलीजलधौ नभोगते ॥४६॥

इत इति ॥ इतस्ततो वातविधूतानि पवनकम्पितान्यत एव चञ्चलानि च तैः । ा नीरन्ध्रितं निरवकाशीकृतमाशासु दिक्षु गमनं यैः । आत्मव्याप्त्या रुद्धपथिथैरित्यर्थः । क्वणद्रणत्काञ्चनकिङ्किणीनां सौवर्णनूपुराणां कुलं जालं येषां न्तभागेषु । शोभार्थं प्रतिबद्धनूपुरजालैरित्यर्थः । लक्षैर्लक्षसंख्यैः । 'लक्षं ाव्ये संख्यायाम्' इति मेदिनी । ध्वजांशुकैर्ध्वजपटैः । 'अंशुकं शुक्लवस्त्रे ाद्वस्त्रमात्रोत्तरीययोः' इति मेदिनी । नभसि गते प्रसृते धूलिजलधौ रजोुधावमज्जि मज्जितम् । भावे लुङ् । सर्वाणि ध्वजांशुकानि धूलिभिरलक्षितानि भूवुरित्यर्थः ॥

ण्टारवै रौद्रतरैर्निरन्तरं विसृत्वरैर्गर्जरवैः सुभैरवैः ।
त्तद्विपानां प्रथयांबभूविरे न वाहिनीनां पटहस्य निःस्वनाः ॥४७॥

घण्टारवैरिति ॥ मत्तद्विपानां संबन्धिभिर्निरन्तरं विसृत्वरैः प्रसृमरैः । सुरां भैरवैर्भीषणैः । 'भैरवः पुंसि शम्बरे । भीषणेऽपि च' इति मेदिनी । गर्जरर्जनारूपघोषैः । रौद्रतरैरत्युग्रैः । 'रौद्रं तूग्रममी त्रिपु' इत्यमरः । घण्टारवैश्च । ाहिनीनां सेनानां संबन्धिनः पटहस्यानकाख्यवाद्यविशेषस्य निःस्वनाः शब्दा प्रथयांबभूविरे न प्रकटीचक्रिरे ॥

१ पयोविनिर्धूननकेलिभिः; पयोधिनिर्धूतककेलिभिः. २ स्वनितैः. ३ विधूति. ४ आरोधिताशा. ५ लघु क्वणत्; चलत्क्वणत्. ६ नभोगतैः. ७ निरन्तरैः. ८ मदद्विपानाम्.

करालवाचालमुखा[1]श्चमू[2]स्वनैर्ध्वस्ता[3]म्बरा वीक्ष्य दिशो रजस्वलाः।
तिरोबभूवे गहनै[4]र्दिनेश्वरो रजोन्धकारैः परितः कुतोऽप्यसौ ॥४८॥

करालेति ॥ चमूस्वनैः सेनाघोषैः करालानि वाचालानि च मुखानि प्रा-रम्भाः । 'मुखं निःसरणे वक्रे प्रारम्भोपाययोरपि' इति मेदिनी । तथा ध्व- रजोव्याप्तमम्बरं यासाम् । तथा रजस्वला रजोयुक्ता दिशो वीक्ष्य परितो गह- सघनैः रजोन्धकारैः कर्तृभिः असौ दिनेश्वरः सूर्यः कुतोऽपि कुत्रापि तिरो- भूवे तिरोगमितः । अन्तर्हित इत्यर्थः । 'भूञ् गतौ' इत्यतो लिट् । 'भू प्रा- इत्यतो वा । वीक्ष्येवेति गम्योत्प्रेक्षा । अथ द्वितीयपक्षे—रजस्वला आर्तववत्यो अतएव कराला भीषणा वाचां वाणीमलान्त्यगृह्णन्ति मुखानि यासाम् । ते- विशेषणसमासः । मौनव्रतधारिणीत्यर्थः । तथा ध्वस्ताम्बराः स्रस्तशाटिकाः नग्ना इत्यर्थः । एवंभूता चमूर्योषितः । 'चमूः सेनाविशेषे च सेनामात्रे च- पिति' इति मेदिनी । वीक्ष्य रजस्यार्तवविषयेऽन्धकारोऽन्धवत्कारः कृतिः क्रिया इति यावत् । भावे घञ् । आर्तवमपत्रपद्भिरित्यर्थः । रजस्वलादर्शननि- धात् । गहनैर्गहनमनोभिः सद्भिरित्यर्थः । दिनेश्वरः कश्चित्पुरुषः कुतो- कुत्रापि तिरोभूयते । कश्चिदसत्पुरुषो रजस्वलां पश्यन्नपि सद्भिः करुणया पटां- भिस्तिरोधीयते तद्वदित्यर्थः ॥

आक्रान्तपूर्वा रभसेन सैनिकैर्दिगङ्गना व्योम रजोभिदूषिता ।
भेरीरवाणां प्रतिशब्दितैर्घनैर्जगर्ज गाढं घ[5]नमत्सरादिव ॥ ४९ ॥

आक्रान्तपूर्वेति ॥ सैनिकैः सेनाजनै रभसेन वेगेनाक्रान्तपूर्वा पूर्वं- क्रान्ता दिगङ्गना दिग्रूपा नायिका रजसा धूल्या । आर्तवेन च । 'र- रेणौ परागे स्यादार्तवे च गुणान्तरे' इति मेदिनी । अभिदूषिता कृता वीक्ष्येति । अतो घनमत्सरादिव गाढद्वेषादिव व्योम कर्तृ भेरीरवा- घनैः प्रतिशब्दितैः कृत्वा गाढं जगर्ज । अन्योऽप्यात्मपत्नीमन्यसंगमेन रजोयु- वीक्ष्य गर्जति ॥

गुरुसमीरसमीरितभूधरा इव गजा गगनं विजगाहिरे ।
गुरुतरा इ[6]व वारिधरां रथा भुवमि[7]तीह विवर्त[8] इवाभवत्[9] ॥ ५० ॥

गुरुसमीरेति ॥ गुरुणा महता समीरेण वातेन समीरिता उपरि क्षि- भूधराः पर्वता इवेत्युत्प्रेक्षा । गजा गगनं विजगाहिरे । अवगाहितवन्त इत्यर्थः । गुरुतरा अपि महान्तो वारिधरा मेघा इवेत्युत्प्रेक्षा । रथा भुवं विजगाहिरे । इ- सङ्करः इत्येवं विवर्त इव व्यत्यय इवाभवत् । गगनपृथिव्यवगाहने स्यन्दननाग- योर्भूधरसंभवात् । उत्प्रेक्षितं च तत्सादृश्यदर्शनात् । द्रुतविलम्बितं वृत्तम् ॥

१ मुखैः; रवैः, २ चमूरवैः. ३ स्रुताम्बराः; स्रस्तां धराम्. ४ गाढे; गहने. ५ गुरुमत्सरादिव. ६ बहुवारिभराढ्वनाः. ७ अतीव. ८ नमन्त- ९ अभवन्.

बलमदसुरलोकानल्पकल्पान्तकाले
निरवधय इवाम्भोराशयो घोरघोषाः ।
गुरुतरपरिमज्जद्भूभृतो देवसेना
ववृधुरपि सुपूर्णा व्योमभूम्यन्तराले ॥ ५१ ॥

बलवदिति ॥ गुरुतरा अतएव परिमज्जन्तो भूभृतो राजानः पर्वताश्च यासु च व्योमभूम्योर्द्यावापृथिव्योरन्तराले मध्ये सुतरां पूर्णा अपि । इत्युभयापि समानम् । घोरघोषा भयानकरवा देवसेना ववृधुः । तत्रोत्प्रेक्षते—बलनामसुरलोकानामनल्पो महान्यः कल्पान्तकालः प्रलयकालस्तत्र निरवधयोपारा अम्भोराशय इव समुद्रा इव । अत्रोपमैवास्त्विति चेत्, न । तत्राभिन्नधर्मभुभयोरिति नियमात् । मालिनी छन्दः । लक्षणं पूर्वमुक्तम् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
देवसेनाप्रयाणं नाम चतुर्दशः सर्गः ॥

---

## पञ्चदशः सर्गः ।

सेनापतिं नन्दनमन्धकद्विषो युधे पुरस्कृत्य बलस्य शात्रवः ।
उपैत्युपैतीति सुरद्विषां पुरोऽभूत्किंवदन्ती हृदयप्रकम्पिनी ॥ १ ॥

सेनापतिमिति ॥ बलस्य बलनामकराक्षसस्य शात्रवः शत्रुरेव शात्रवः । प्रज्ञादित्वात्स्वार्थेऽण् । इन्द्रः । सेनापतिं पृतनाधिपम् । अन्धकद्विषो हरस्य नन्दनं पुत्रं कार्तिकेयं पुरस्कृत्याग्रे कृत्वा सैन्यैः सह युधे युद्धाय । युद्धं कर्तुमिति यावत् । 'क्रियार्थ–' इत्यादिना चतुर्थी । उपैत्यायाति । इत्येवंभूता हृदयप्रकम्पिनी हृदयं वेपयन्ती किंवदन्ती जनश्रुतिः । 'किंवदन्ती जनश्रुतिः' इत्यमरः । सुरद्विषां दैत्यानां तारकनगरनिवासिनां पुरोऽग्रेऽभूत् । सर्गेऽस्मिन्निन्द्रवंशोपजाती वृत्ते ॥

चमूप्रभुं मन्मथमर्दनात्मजं विजित्वरीभिर्विजयश्रियाश्रितम् ।
श्रुत्वा सुराणां पृतनाभिरागतं चित्ते चिरं चुक्षुभिरे महासुराः ॥२॥

चमूप्रभुमिति ॥ महासुरास्तारकनगरनिवासिनो दैत्या विजयश्रिया विजयलक्ष्म्या श्रितं सेवितम् । एतेनास्य कादाचित्कोऽपि पराभवो न भवतीति ध्वनि-

---

१ वरतरसुर. २ संहारकाले. ३ घोरघोरः. ४ ववृधुः. ५ सुपूर्णव्योमभूम्यन्तरालाः; समाना व्योम्नि भूम्यन्तराले. ६ युद्धे. ७ हृदयस्य कम्पिनी. ८ चमूपतिम्. ९ विजित्वराभिः. १० आवृतम्; आगमम्. ११ स्वान्ते.

तम्। अतएव चमूप्रभुं सेनाधिपं मन्मथमर्दनस्य शिवस्यात्मजम्। अनेन यदि पिता सकलभुवनजेतुर्मकरध्वजस्यापि प्लोषिता, अतोऽस्य किं वक्तव्यम्। 'कार्यं निदानाद्धि गुणानधीते', 'प्रवर्तितो दीप इव प्रदीपात्' इत्यादिन्यायेन तातेनाप्ययं दुर्जय इति ध्वनितम्। तं कार्तिकेयं विजित्वरीभिर्जयशीलाभिः। जयतेः 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरपि परे 'ह्रस्वस्य पिति' इति तुकि 'टिड्ढा–' इत्यनेन ङीप्। सुराणां देवानां पृतनाभिः सेनाभिः सहागतमा श्रुत्वा चिरं बहुकालपर्यन्तं चित्ते मनसि चुक्षुभिरे संचेलुः। बिभ्युरित्यर्थः। 'क्षुभ संचलने' कर्तरि लिट्। अत्र वाच्यापेक्षया व्यङ्ग्यार्थस्याधिकचमत्कार जनकत्वाद्ध्वनिः॥

**समेत्य दैत्याधिपतेः पुरे[1] स्थिताः किरीटबद्धाञ्जलयः प्रणम्य ते। न्यवेदयन्मन्मथशत्रुसूनुना[2] युयुत्सुना जम्भजितं[3] सहागतम्[4] ॥ ३ ॥**

समेत्येति॥ दैत्याधिपतेस्तारकस्य पुरे नगरे स्थितास्ते महासुराः समेत्य समुदित्य। संघीभूयेति यावत्। तथा किरीटेषु मुकुटेषु बद्धोऽञ्जलिर्यैस्तथा सन्तः प्रणम्य युयुत्सुना योद्धुमिच्छुना मन्मथशत्रोः शिवस्य सूनुना पुत्रेण कुमारेण सहागतं जम्भजितमिन्द्रं न्यवेदयन्। सशंभुपुत्रो महेन्द्र आगत इति निवेदितवन्त इत्यर्थः॥

**दासीकृताशेषजगत्त्रयं न[5] मां जिगाय युद्धे कतिशः शचीपतिः। गिरीशपुत्रस्य बलेन सांप्रतं ध्रुवं विजेतेति स[6] काकुतोऽहसत्[7] ॥ ४ ॥**

दासीकृतेति॥ दासीकृतं भृत्यीकृतम्। 'दासो भृत्ये च शूद्रे च' इति मेदिनी। अशेषजगत्त्रयं समस्तलोकत्रितयं येन तथाभूतं मां शचीपतिरिन्द्रः कतिशः कतिवारं युद्धे न जिगाय जयति स्म। अपि त्वनेकवारं जिगायेति काकुः। अत्र निषेधस्य काक्वाश्रितत्वाज्जयनिषेध एव ध्वन्यते। सांप्रतं वर्तमानकाले गिरीशपुत्रस्य कुमारस्य बलेन वीर्येण। तदाश्रयेणेत्यर्थः। ध्रुवं निश्चयेन विजेता विजेष्येत इति स तारकः काकुतः काक्वाहसज्जहास। कदाचिदपि न विजेष्यत इति ध्वन्यते॥

**ततः क्रुधा विस्फुरिताधराधरः[8] स तारको दर्पितदोर्बलोद्धतान्[9]। युधे[10] त्रिलोकीजयकेलिलालसः सेनापतीन्संनहनार्थमादिशत् ॥ ५ ॥**

तत इति॥ ततोऽनन्तरं क्रुधा क्रोधेन निमित्तेन विस्फुरित उच्छ्वसितोऽधरोऽनूर्ध्व ओष्ठो यस्य। प्रसिद्धं चैतद्यत्क्रोधवशादधरविस्फुरणम्। तथाधरो हीनो नीच इति यावत्। 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत्' इति मेदिनी। विस्फुरिताधरश्चासावधरश्चेति विशेषणसमासः। तथा त्रिलोक्या जय एव केलि

---

१ पुरः. २ दूतसूनुना; शत्रुसूनुम्. ३ जम्भजिता. ४ समागतम्. ५ ... नु. ६ इव; एव. ७ सकाकु सोऽहसत्. ८ अधरच्छदः. ९ बलाद्... निजान्. १० युद्धे.

ळा तस्यां लालसेच्छा यस्य । अनायासेनैव त्रिलोकीं जेष्यामीत्यभिमानवानि- र्थः । एवंभूतः स तारकोऽसुरो दर्पिताः संजातदर्पास्तथा दोर्बलेन भुजबलेनो- त्प्रगल्भान्सेनापतीन्सेनाधिपान्युधे युद्धाय । युद्धं कर्तुमित्यर्थः । संनहनार्थं द्धीभवनार्थं चादिशदाजज्ञे । 'युद्धे' इति पाठे युद्धे विषये त्रिलोकीजयक- लास इत्यन्वयितव्यम् ॥

महाचमूनामधिपाः समन्ततः संनह्य सद्यः सुतरामुदायुधाः ।
तस्थुर्विनम्रक्षितिपालसंकुले तदङ्गनद्वारवरप्रकोष्ठके[1] ॥ ६ ॥

महेति ॥ उदायुधा उद्धृतान्यायुधानि शस्त्राणि यैरेवंभूता महाचमूनां मह- नां सेनानामधिपाः स्वामिनः सद्यस्त्वरितं सुतरां संनह्य संनद्धा भूत्वा विनम्रा क्षितिपाला राजानस्तैः संकुले व्याप्ते तस्य तारकस्य यदङ्गनद्वारं चत्वरप्रवेश- रं तस्य वरः श्रेष्ठो यः प्रकोष्ठकोऽन्तरम् । मध्यमिति यावत् । 'प्रकोष्ठो मणिब- न्ध स्यात्कूर्परस्यान्तरेऽपि च । भूपकक्षान्तरेऽपि स्यात्' इति मेदिनी । तत्र मन्ततः सर्वतस्तस्थुः । नृपं प्रतीक्षमाणा इति शेषः । 'समन्ततस्तु परितः र्वतो विष्वगित्यपि' इत्यमरः ॥

द्वारपालेन पुरः प्रदर्शितान्कृतानतीन्बाहुवरान्[2]धिष्ठितान् ।
हाहवाम्भोधिविधूननोद्धतान्ददर्श[3] राजा[4] पृतनाधिपान्[5]बहून्[6] ॥ ७ ॥

स इति ॥ स राजा तारकः पुरोऽग्रे द्वारपालेन प्रदर्शितान्कृतानतीन्बाहुवरा- हवो वराः श्रेष्ठा येषां तथोक्तानधिष्ठितान् । द्वार इति शेषः । महाहवरूपि- ऽम्भोधेः समुद्रस्य विधूनने कम्पन उद्धतान्प्रगल्भान् । महावीरानित्यर्थः । ङ्ग्रामाभ्यागमाहवाः' इत्यमरः । बहून्पृतनाधिपान्सेनापतीन्ददर्श दृष्टवान् । दभ्रं बहुलं बहु' इत्यमरः ॥

ली बलारातिबलातिशातनं दिग्दन्तिनादद्रवनाशनस्वनम्[8] ।
हीधराम्भोधिनवारितक्रमं[9] ययौ रथं घोरमथाधिरुह्य सः ॥ ८ ॥

बलीति ॥ अथानन्तरं बली वीर्यवान्स तारको बलारातेरिन्द्रस्य संबन्धिनो लस्य सैन्यस्य । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः' इति मेदिनी । तिशातनं तनूकर्तारम् । हन्तारमित्यर्थः । दिग्दन्तिनामैरावतादीनां नादद्रवयो- र्घोषमदयोर्नाशनो नाशकः स्वनो घोषो यस्य तम् । यदीयघोषवशाद्दिग्दन्तिनो- पि तूष्णीं शुष्कमदाश्च भवन्तीति भावः । महीधरेषु पर्वतेष्वम्भोधिषु च नवा- रितक्रममनिवारितसंचारम् । नशब्देन सह 'सुप्सुपा' इति समासः । घोरं भीमं रथमधिरुह्य ययौ जगाम । प्रतस्थ इति यावत् ॥

---

१ तदङ्गणद्वारि बहिःप्रकोष्ठके; तदङ्गणद्वारबहिःप्रकोष्ठके. २ वाहवरान्. ३ ननन्द. ४ दैत्यः; पश्यन्. ५ पृतनायुधान्. ६ निजान्. ७ ततः. ८ दानद्रवनाशनस्वनम्; दानद्रवताननिःस्वनम्. ९ अम्भोध्यनिवारित; अम्भोधिनिवारित.

**युगक्षयक्षुब्धपयोधिनिःस्वनाश्चलत्पताकाकुलवारितातपाः ।**
**धरारजोग्रस्तदिगन्तभास्कराः पतिं प्रयान्तं पृतनास्तमन्वयुः ॥ ९**

युगेति ॥ युगक्षये प्रलयकाले क्षुब्धः संचलितो यः पयोधिः समुद्रस्त निःस्वन इव निःस्वनो यासाम् । प्रलयकालोद्वेलीभूतसागरसदृशघोरघोषा इत्यर्थः । चलन्तीनां पताकानां वैजयन्तीनाम् । 'पताका वैजयन्त्यां स्यात्सौभाग्ये नाटकाङ्कयोः' इति मेदिनी । कुलेन समूहेन वारितातपा दूरीकृतघर्मा धराया रजोभिर्ग्रस्ता दिगन्तानि दिक्प्रान्तानि भास्करस्य याभिस्तथाभूताः पृतनाः सेनाः कर्त्र्यः । प्रयान्तं प्रतिष्ठमानं तं पतिं तारकासुरमन्वयुः । अनुजग्मुरित्यर्थः ॥

**चमूरजः प्राप दिगन्तदन्तिनां महासुरस्याभिसुरं प्रसर्पिणः ।**
**दन्तप्रकाण्डेषु सितेषु शुभ्रतां कुम्भेषु दानाम्बुघनेषु पङ्कताम् ॥**

चमूरज इति ॥ अभिसुरं सुरसंमुखं प्रसर्पिणः प्रतिष्ठमानस्य महासुरस्य तारकस्य संबन्धिनीनां चमूनां रजो रेणुः । दिगन्तदन्तिनामैरावतादीनां सितेषु शुभ्रेषु दन्तप्रकाण्डेषु । दन्तरूपासु शाखास्वित्यर्थः । 'प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तयोः' इति मेदिनी । शुभ्रतां पाण्डुतां दानाम्बुना मदजलेन घनेषु सघनेषु कुम्भेषु मूर्धान्तरेषु । गण्डस्थलेष्विति यावत् । 'कुम्भो राश्यन्तरे हस्तिमूर्धान्ते राक्षसान्तरेषु' इति मेदिनी । पङ्कतां कर्दमताम् । 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी । प्राप । धवलिमाश्रयीभूतसंबन्धेन युक्तं हि धवलत्वमिति भावः । अन्यत्स्फुटम् ॥

**महीभृतां कन्दरदारणोल्बणैस्तद्वाहिनीनां पटहस्वनैर्घनैः ।**
**उद्वेलिताश्चुक्षुभिरे महार्णवा नभःस्रवन्ती सहसाभ्यवर्धत ॥ ११**

महीभृतामिति ॥ महीभृतां पर्वतानां संबन्धिनो ये कन्दरा दर्यः । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । तेषां दारणे स्फोटन उल्बणैरुद्भटैः । आत्मव्याप्तिवशात्स्फोटद्भिरिव भासमानैरित्यर्थः । तथा घनैर्दृढैः । कठोरैरिति यावत् । 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । ना मुस्तादौ घनाद्येषु विस्तारे लोहमुद्गरे त्रिषु सान्द्रे दृढे च' इति मेदिनी । तद्वाहिनीनां तारकसेनानां संबन्धिनो ये पटहा आनकाः । 'पटहो ना समारम्भ आनके पुंनपुंसकम्' इति मेदिनी । तेषां स्वनैः कर्तृभिः उद्वेलिता वेलामतिक्रमिता महार्णवा महान्तः समुद्राश्चुक्षुभिरे संचेलुः । पटहध्वनिजनितभयादिति भावः । तथा नभःस्रवन्त्याकाशगङ्गा सहसाकस्मादभ्यवर्धत । अतिवेला बभूवेत्यर्थः ॥

**सुरारिनाथस्य महाचमूस्वनैर्विगाह्यमाना तुमुलैः सुरापगा ।**
**अभ्युच्छ्रितैरूर्मिशतैश्च वारिजैरक्षालयन्नाकनिकेतनावलीम् ॥ १२**

१ प्रति प्रयातुम्, प्रतिप्रयातम्. २ प्रसर्पतः. ३ दानाम्बुधरेषु. ४ उद्वेजिताः. ५ व्यवर्धत. ६ ऊर्मिशतैरवारितैः. ७ निकेतनावलीः.

सुरारिनाथस्येति ॥ तुमुलैः संकुलैः । 'तुमुलः कलिवृक्षे ना तुमुलं रणसंकुले' इति मेदिनी । सुरारिरिव नाथो राजा तस्य । यद्वा सुरारीणां नाथो राजा तस्य संबन्धिनां महाचमूनां स्वनैः शब्दैर्विगाह्यमाना व्याप्यमाना सुरापगा मन्दाकिनी । अभ्युच्छ्रितैरभ्युत्पतितैर्वारिजैर्वारिजानि कमलानि विद्यन्ते येषु तैः । कमलसहितैरित्यर्थः । 'अर्शआदिभ्यः–' इत्यच् । ऊर्मिशतैस्तरङ्गशतकैश्च । 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः । नाकनिकेतनावलीं स्वर्गवेश्मपङ्क्तिमक्षालयन्ममार्ज ॥

**अथ प्रयाणाभिमुखस्य नाकिनां [1]द्विषः पुरस्तादशुभोपदेशिनी ।**
**[2]अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पातपरम्परा तव ॥ १३ ॥**

अथेति ॥ अथानन्तरं प्रयाणाभिमुखस्य प्रस्थानसंमुखस्य नाकिनां देवानां द्विषो वैरिणस्तारकस्य पुरस्तादग्रे 'भो तारक' तव त्वत्कर्मकम् । अगाधोऽतलस्पर्शः । 'अगाधमतलस्पर्शे त्रिषु श्वभ्रे नपुंसकम्' इति मेदिनी । यो दुःखाम्बुधिर्दुःखसमुद्रस्तन्मध्ये मज्जनं भविष्यतीत्येवमशुभोपदेशिन्यशुभवादिन्युत्पातपरम्परा दुःशकुनपङ्क्तिर्बभूव ॥

इतः परम् 'आगामि–' इत्यादिभिरेकादशभिरुत्पातपरम्परामेव प्रपञ्चयति—

**[3]आगामिदैत्याशनकेलिकाङ्क्षिणी [4]कुपक्षिणां घोरतरा परम्परा ।**
**दधौ पदं व्योम्नि सुरारिवाहिनीरुपर्युपर्येत्यनिवारितातपा ॥ १४ ॥**

तत्र आगामीति ॥ घोरतरातिशयभयानका कुपक्षिणां गृध्रादीनां कपोतादीनां वा परम्परा । आगामि भविष्यद्यद्दैत्यस्याशनकेलिर्भोजनक्रीडा तत्काङ्क्षतीति तथाभूता । तथा सुरारिवाहिनीस्तारकसेना उपर्युपरि । 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावः । तद्योगे द्वितीया । तदुक्तं वामनेन—'उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीयया' इति । अनिवारितातपा न निवारितघर्मा च सती व्योम्न्याकाशे पदं स्थानं दधौ धृतवती । अनेन पद्येन प्रयाणानौचित्यद्योतकमुत्पातद्वयं वर्णितम् । तथाहि—आकस्मिकोपरि वृत्तिः आतपानिवृत्तिश्च । तस्मात्सर्वथैवास्य मरणं भविष्यतीति सूच्यते ॥

**मुहुर्[5]विभग्नातपवारणध्वजश्चलद्धराधूलिकलाकुलेक्षणः ।**
**[6]धुताश्वमातङ्गमहारथाकरानवेक्षणोऽभूत्प्रसभं प्रभञ्जनः ॥ १५ ॥**

मुहुरिति ॥ विभग्ना त्रोटिता आतपवारणसहिता ध्वजा येन । चलन्त्यो

---

१ द्विषः पुरस्तादशुभौघदायिनीं; पताकिनीं प्रत्यसुरेश्वरस्य हि. २ अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पातततिर्विशंसती; मुहुर्महारिष्टपरम्परा परापतन्मृत्युमहापताकिनी. ३ भविष्यदैत्याशनकेलिकामिनी. ४ द्युपक्षिणाम्. ५ विभिन्न. ६ धुताश्वमातङ्गमहारथव्रजोऽनवेक्षणोऽभूत्; जनाश्वमातङ्गमहारथव्रजानवेक्षमाणः.

विसरन्त्यो या धराधूलयः पृथिवीरजांसि तासां कुलेन साधनीभूतेनाकुलीकृ-
व्याकुलीकृतानीक्षणानि लोकनेत्राणि येन । तथा धूतस्य कम्पितस्य । नभसि
भ्रमितस्येति यावत् । अश्वानां मातङ्गानां महारथानां चाकरस्य निकरस्य
'आकरो निकरे रत्नस्थाने श्रेष्ठे च कथ्यते' इति मेदिनी । अनवेक्षणमदृष्ट
येन । आच्छादितसकलसेनाङ्गः प्रभञ्जनो वायुः । 'पवमानप्रभञ्जनाः' इत्यमरः
अभूदुत्पन्नः । 'मुहुः' 'प्रसभम्' इत्यस्य विशेषणत्रयेऽपि संबन्धः । अयं तृतीय
उत्पातः ॥

सद्यो विभिन्नाञ्जनपुञ्जतेजसो[1] मुखैर्विषाग्निं विकिरन्त उच्चकैः ।
पुरः पथो[2]ऽतीत्य महाभुजंगमा भयंकराकारभृतो भृशं ययुः ॥१६

सद्य इति ॥ सद्यो विभिन्नं तत्क्षणपतितं यदञ्जनं कज्जलम् । 'अञ्जनं कज्ज-
चाक्तौ सौवीरे च रसान्तरे' इति मेदिनी । तस्य पुञ्ज इव निकर इव तेजो ध
येषाम् । नूतनपातितकज्जलसमूहश्यामभास इत्यर्थः । उच्चकैर्महान्तः । विस्ती
इति यावत् । तथा भृशं भयंकराकारभृतः । अतिभीषणस्वरूपधारिण इत्यर्थः
महाभुजंगमा महान्तः सर्पाः पुरोऽग्रे विषाग्निं गरलरूपमग्निम् । 'क्ष्वेडस्तु गरलं
विषम्' इत्यमरः । विकिरन्तो विक्षिपन्तः सन्तः पथः सैन्यगन्तव्यमार्गानतीत्य
पूर्वविहितात्मसंबन्धेन वियोज्य ययुः । चतुर्थोऽयमुत्पातः ॥

मिलन्महाभीमभुजंगभीषणं प्रभुर्दिनानां परिवेषमादधौ ।
महासुरस्य द्विषतोऽतिम[3]त्सरादिवा[4]न्तमासूचयितुं भयंकरः ॥ १७

मिलदिति ॥ दिनानां प्रभुः सूर्यो द्विषतः शत्रुभूतस्य । 'द्विषद्द्वेषणदुर्हृद्-
इत्यमरः । महासुरस्य तारकस्यान्तं विनाशम् । मरणमिति यावत् । 'अन्तः स्वरूपे
नाशे ना स्त्री शेषे चान्तिके त्रिषु' इति मेदिनी । आसूचयितुं ज्ञापयितुं मिलन्तः
संयुजन्तः । तथा महाभीमा अतिभयंकरा ये भुजंगाः सर्पास्तैर्भीषणं भयं
परिवेषं परिधिं कुण्डलाकारम् । 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः
अतिमत्सरादिवादधौ धृतवान् । विनाशरूपफलसूचकपरिवेषाधाने मत्सरस्य
हेतुत्वाभावेऽपि हेतुत्वकल्पनाद्धेतूत्प्रेक्षा । अत एव भयंकरो विभीषकः । 'मेघर्ति-
इति खश् । पञ्चमोऽयमुत्पातः ॥

त्विषामधीशस्य पुरोऽधिम[5]ण्डलं शिवाः समेताः परुषं ववाशिरे ।
[6]सुरारिराजस्य रणान्तशोणितं प्रसह्य पातुं द्रुतमुत्सुका इव ॥१८॥

त्विषामिति ॥ त्विषां तेजसामधीशस्य रवेरधिमण्डलम् । मण्डल इत्यर्थः ।
विभक्त्यर्थेऽव्ययीभावः । समेताः समुदिताः शिवाः क्रोष्ट्र्यः । 'शिवा झाटामलौ-
षधौ । अभयामलकीगौरीक्रोष्ट्रीशक्रफलासु च' इति विश्वः । सुरारिराजस्य तार-

१ संनिभाः. २ परोत्पात. ३ नु मत्सरात्; न मत्सरात्. ४ आत्तमास्यं प्रयतुर्भयं-
करम्; आत्तमास्यप्रयतुर्भयंकराः. ५ अभिमण्डलम्. ६ सुराधिराजस्य.

...स्य संबन्धिनि रणान्ते सङ्ग्रामसमीपे यच्छोणितं रक्तं द्रुतं शीघ्रं प्रसह्य बला- ...तुं पानं कर्तुमुत्सुका इव परुषं कठोरं यथा तथा ववाशिरे चुक्रुशुः । अत्रोत्पा- ...द्वयम् । मार्तण्डमण्डलाधिकरणकं शिवासमुदितत्वं तत्कर्तृककठोररुदितं चेति । ...षष्ठसप्तमावेतावुत्पातौ ॥

दिवापि तारस्तरला[1]स्तरस्विनीः परापतन्तीः परितोऽथ[2] वाहिनीः ।
विलोक्य लोको[3] मनसा व्यचिन्तयत्[4]प्राणव्ययान्तं[5] व्यसनं सुरद्विषः ॥

दिवापीति ॥ अथ दिवापि दिनेऽपि तरलाश्चञ्चलाः तरस्विनीर्वेगवतीः । 'रंह- स्तरसी तु रयः स्यदः' इत्यमरः । तारा नक्षत्राणि, वाहिनीः परितः 'अभितःप- रितःसमया-' इत्यादिना द्वितीया । परापतन्तीर्विलोक्य लोको मनसा सुरद्विषः संबन्धि प्राणव्ययान्तं प्राणनाशावधि व्यसनं व्यचिन्तयत् । प्राणनाशावधि राज्ञो दुःखं भविष्यतीति चिन्तयामासेत्यर्थः । अष्टमोऽयमुत्पातः ॥

ज्वलद्भिरुच्चैरभितः[6] प्रभाभरैरुद्भासिताशेषदिगन्तराम्बरम् ।
रवेण रौद्रेण हृदन्तदारणं[7] पपात वज्रं नभसो निरम्बुदात् ॥ २० ॥

ज्वलद्भिरिति ॥ निरम्बुदादनुद्भूतमेघान्नभसो व्योम्नः सकाशादभितो ज्वलद्भिः प्रस्फुरद्भिः प्रभाभरैः कान्तिसमूहैः कृत्वा । उच्चैरतिशयितं यथा तथो- द्भासितानि प्रकाशितान्यशेषदिगन्तराम्बराणि समस्तदिशां प्रान्तगतानि येन । तथा रौद्रेण भयानकेन रवेण घोषेण हृदन्तस्योरोमध्यस्य दारणं विदारकं वज्रं स्फूर्जथुः पपात । 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः । अत्राप्युत्पातद्वयं अम्बुदसां- निध्याभावेऽपि वज्रदर्शनं तत्पातश्चेति । एवं नवमदशमावुत्पातावुक्तौ ॥

ज्वलद्भिरङ्गारचयै[8]र्नभस्तलं ववर्ष गाढं सह शोणितास्थिभिः ।
धूमं[9] ज्वलन्तो व्यसृजन्मुखै[10] रजो दधुर्दिशो रासभकण्ठधूसरम् ॥ २१ ॥

ज्वलद्भिरिति ॥ नभस्तलम् । निरम्बुदं सदिति शेषः । ज्वलद्भिरङ्गारचयैः काष्ठशकलसमूहैः । तथा शोणितास्थिभिश्च सह गाढं दृढम् । बह्विति यावत् । ववर्ष । ज्वलदङ्गाररुधिरास्थिगर्भितं जलं ववर्षेत्यर्थः । अम्बुदसांनिध्याभावेऽपि वृष्टिः एकादशतमोऽयमुत्पातः । साप्यङ्गारादिमिश्रितेति द्वादशतमः । अत एव ज्वलन्त्यो दिशो रासभकण्ठधूसरं खरगलसदृशधूसरवर्णम् । 'रासभो गर्दभे क्षुद्र- जन्तुरोगप्रभेदयोः' इति मेदिनी । धूमं धूमरूपं रजो रेणुं मुखैः प्रारम्भदेशै- र्व्यसृजंस्तत्यजुः । त्रयोदशतमोऽयमुत्पातः ॥

निर्घातघोषो गिरिशृङ्गशातनो[11] घनोऽम्बराशाकुहरोदरंभरिः[12] ।

---

१ तदानिशम्. २ अभिवाहिनीम्. ३ लोकाः. ४ व्यचिन्तयन्. ५ प्राणात्ययान्तं व्यसनम्. ६ चलद्भिः. ७ दिगन्तदारणम्. ८ अङ्गारभरैः. ९ धूम्रम्. १० मुखे. ११ गिरिशृङ्गघातनः; गिरिशृङ्गशातनैः. १२ धराम्बराशाकुहरोदरंभरिः; घनैर्वराशा- कुहरोदरंभरिः.

बभूव भूम्ना[1] श्रुतिभित्तिभेदनः प्रकोपिकालार्जितगर्जित[2]तर्जनः ॥२२॥

निर्घातेति ॥ प्रकोपिना प्रकृष्टरोषेण कालेन यमेनार्जितोत्पादिता गर्जि... गर्जनां कुर्वती तर्जनापकारगीर्यत्र । अतएवाम्बरस्याशानां च कुहरेणान्तरेणो... भरिरत एव गिरीणां शृङ्गस्य शातनो भेदकः । तथा घनः सान्द्रो निर्घातश्चा... घोषश्च स भूम्ना बाहुल्येन श्रुतिभित्तिभेदनः कर्णकुड्यताडनो बभूव । चतुर्दश... मोऽयमुत्पातः ॥

स्खलन्[3]महेभं प्रपतत्तुरङ्गमं[4] परस्पराश्लिष्टजनं समन्ततः ।
प्रक्षुभ्यद्[5]म्भोधिविभिन्नभूधराद्[6]बलं द्विषोऽभूदवनिप्रकम्पात्[8] ॥२३॥

स्खलदिति ॥ द्विषस्तारकस्य बलं सैन्यम् । 'बलं गन्धरसे रूपे स्था... स्थौल्यसैन्ययोः' इति विश्वः । प्रक्षुभ्यद्भिरुन्मथ्यमानैरम्बोधिभिर्विभिन्ना विदी... भूधराः पर्वता यत्र । प्रोत्पद्यमानविकटतरधरणिकम्पप्रोच्छलत्समुद्वेलजलधि... रतरप्रवाहस्फुटन्तो धराधरा बभूवुरिति भावः । एवंभूतादवनिप्रकम्पाद्भूकम्पा... द्धेतोः स्खलन्महेभं मूर्च्छद्बृहत्करीन्द्रं प्रपतत्तुरंगमं प्रकृष्टपतद्वाजिराजं परस्परा... श्लिष्टोभयवदन्योन्यासंसक्ताननो यत्र तथाभूतं बभूव । पञ्चदशतमोऽयमुत्पातः ॥

ऊर्ध्वीकृतास्या रविदत्तदृष्टयः समेत्य सर्वे सुरविद्विषः पुरः ।
श्वानः स्वरेण श्रवणान्तशातिना[9] मिथो रुदन्तः करुणेन निर्ययुः ॥२४॥

ऊर्ध्वीकृतास्या इति ॥ सर्वे श्वानः समेत्य समुदेत्योर्ध्वीकृतास्या ऊर्ध्वी... शाविहितवदनाः । तथा रविदत्तदृष्टयः सूर्यनिबद्धलोचनाः । तथा करुणेन क... णरसपूरितेनात एव श्रवणान्तशातिना कर्णमध्यतनूकारिणा स्वरेण शब्देन क्र... रुदन्तः क्रोशन्तः सन्तः सुरविद्विषस्तारकस्य पुरोऽग्रे निर्ययुर्निरगच्छन् । षोड... तमोऽयमुत्पातः ॥

अपीति[10] पश्यन्परिणामदारुणां महत्तमां[11] गाढमरिष्टसंततिम् ।
दुर्दैवदष्टो[12] न खलु[13] न्यवर्तत[14] क्रुधा प्रयाणव्यवसायतोऽसुरः ॥२५॥

अपीति ॥ गाढं दृढं यथा तथा परिणाम उत्तरकाले दारुणां भयप्रदां महत्त... मामतिशयमहतीमरिष्टसंततिमुत्पातपरम्परां पश्यन्नप्यसुरस्तारकः क्रुधामर्षे... प्रयाणव्यवसायतः प्रस्थानोद्योगान्न न्यवर्तत न निवृत्तः खलु । यतो दुर्दैवेन दु... दृष्टेन दष्टो हतः । 'विनाशकाले विपरीतबुद्धिः' इति न्यायादिति भावः ॥

अरिष्टमाशङ्क्य विपाकदारुणं निवार्यमाणो[15]ऽपि[16] बुधैर्महासुरः[17] ।

१ भूमा. २ गर्जितस्वनः; गर्जतर्जनः. ३ चलन्. ४ प्रणयत्तुरंगमम्. ५ संक्षुभ्यद्...
६ भूधरम्. ७ पुरः. ८ प्रकम्पम्; प्रकम्पतः. ९ पतिना. १० इति प्रपद्य...
११ महत्तराम्. १२ दृष्टः. १३ खलः. १४ निवर्तते. १५ निवार्यमाणो...
१६ विबुधैः; विविधैः. १७ महासुरैः.

: प्रतस्थे महतां वृथा भवेदसद्ग्रहान्धस्य हितोपदेशनम्[1] ॥ २६ ॥

अरिष्टेति ॥ महासुरस्तारकोऽरिष्टं विपाक उत्तरकाले दारुणं भयदमाशङ्क्य यित्वा निवार्यमाणो निषिध्यमानोऽपि पुर एव प्रतस्थे न तु पश्चान्निववृते । हि । महतां महता कृतमसद्ग्रहेणान्धस्याविवेकिनः संबन्धिनो हितस्योप- नं वृथा व्यर्थं भवेत् । दुराग्रहशीलस्य सम्यगुपदेशोऽपि तदमततया व्यर्थः दिति भावः ॥

इदानीं पञ्चभिः पञ्च महोत्पातानाह—

तौ निरस्तं प्रतिकूलवायुना तदीयचामीकरघर्मवारणम् ।
ज मृत्योरिव पारणाविधौ प्रकल्पितं हाटकभाजनं[2] महत् ॥२७॥

क्षिताविति ॥ प्रतिकूलवायुना प्रतीपपवनेन क्षितौ पृथिव्यां निरस्तं निक्षि- । 'असु क्षेपणे' इत्यतः कर्मणि निष्ठा । तदीयं तारकसंबन्धि चामीकरस्य ः । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । घर्मवारणं छत्रं मृत्यो- स्य संबन्धिनि पारणाविधौ । भोजनक्रियानिमित्तमित्यर्थः । 'निमित्तात्कर्म- णि' इति सप्तमी । योगोऽत्र संयोगः । प्रकल्पितं निर्मितं महद्विशालं हाटक- नं सुवर्णपात्रमिवेत्युत्प्रेक्षा । रराज शुशुभे ॥

जानता भाविशिरोनिकृन्तनं[3] प्रज्ञेन[4] शोकादिव तस्य मौलिना ।
र्गलद्भिस्तरलैरलंतरामरोदि मुक्ताफलबाष्पबिन्दुभिः ॥ २८ ॥

विजानतेति ॥ प्रज्ञेन बुद्धेन । 'प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति' मेदिनी । अत एव भावि भविष्यच्छिरोनिकृन्तनं मस्तकच्छेदनं विजा- बुध्यमानेन तस्य तारकस्य मौलिना किरीटेन । 'मौलिः किरीटे शृङ्गारे मिल्ले द्रुमचूडयोः' इति विश्वः । शोकाद्धेतोर्मुहुर्गलद्भिर्निःसरद्भिस्तरलैश्चञ्चलैः । लं चञ्चले खिङ्गे हारमध्यमणावपि' इति विश्वः । मुक्ताफलान्येव बाष्पबि- वोऽश्रुबिन्दवः । 'बिन्दुस्तु दन्तनाले स्यात्तथा वेदितृविप्रुषोः' इति विश्वः । कृत्वालंतरामतिशयपर्याप्तं यथा । 'अलं भूषणपर्याप्तिवारणेषु निरर्थके' इति ः । अरोदीव रुदितमिवेत्युत्प्रेक्षा । मुकुटखचितमणिनिचयसाहसिकभूपतन- उत्पातोऽयमिति भावः ॥

नार्यमाणैरभितोऽनुयायिभिर्ग्रहीतुकामैरिव तं मुहुर्मुहुः ।
शाति गृध्रैरभि[5] मौलिमाकुलैर्[6]भविष्यदेतन्मरणोपदेशिभिः ॥ २९ ॥

निवार्यमाणैरिति ॥ भविष्यति एतस्य तारकस्य मरणमुपदिशन्ति बोधयन्ति भूतैः तथाकुलैर्भक्षणक्रियासंभ्रमितैर्गृध्रैः पक्षिविशेषैः । 'गृध्रः खगान्तरे ग्री वाच्यवच्चाथ लुब्धके' इति विश्वः । अभितः सर्वतोऽनुयायिभिरनुगच्छद्भिः ।

१ हितोपदेशना; हितोपदेशिता. २ राजतपानभाजनम्. ३ विकर्तनम्. ४ स्वस्तेन; नेन. ५ अभिमौलि चाकुलैः. ६ तस्यातनुच्छायमपायदर्शिभिः.

अत एवोत्प्रेक्षते—मुहुर्मुहुरनेकवेलं निवार्यमाणैरपि तं ग्रहीतुकामैरिव ... किरीटमभि संमुखमपाति पतितम्। भावे लुङ्। पुनःपुनर्निवार्यमाणा ... तद्बुभुक्षया मौलिमुद्दिश्यैव पेतुरिति भावः। अयमपि महोत्पातः॥

सद्यो निकृत्ताञ्जनसोदर[1]द्युतिं फणामणिप्रज्वलदंशुमण्डलम्।
निर्यद्विषोल्[2]कानलगर्भफूत्कृतं ध्वजे जनस्तस्य महाहिमैक्षत॥ ३...

सद्य इति॥ जनो लोकस्तस्य तारकस्य ध्वजे। तदुपरीत्यर्थः। सद्यो नि... तत्कालपातितस्याञ्जनस्य कज्जलस्य सोदरा समाना द्युतिः शोभा यस्य। ... नसदृशश्यामलमित्यर्थः। तथा फणामणिभिः फणरत्नैः प्रज्वलदधिकीभ... मण्डलं यस्य। निर्यद्विषमेवोल्कानलः स गर्भे मध्ये येषां तादृशानि फूत्कृ... यस्य तथाभूतं महाहिं महान्तं सर्पमैक्षत ददर्श। अयमपि महोत्पातः॥

[3]रथाश्वकेशावलिकर्णचा[4]मरं ददाह बाणासनबाण[5]बाणधीन्।
[6]अकाण्डतश्चण्डतरो हुताशनस्तस्यातनुस्यन्दन[7]धूर्यगोचरः॥ ३...

रथेति॥ अकाण्डतोऽसमये। सार्वविभक्तिकस्तसिल्। तस्य तारकस्य सं... योऽतनुस्यन्दनो महान्रथस्तस्य धूर्योऽग्रभागस्तस्य गोचरः। तल्लग्न इत... चण्डतरोऽतिशयप्रचण्डो हुताशनोऽग्निः। रथाश्वसंबन्धिनी या केशा... कर्णचामराणि च तेषां समाहारस्तत्। प्राण्यङ्गत्वादेकवद्भावः। तथा बा... बाणक्षेपक्रियासाधनम्। करणे ल्युट्। धनुर्बाणाः बाणधिस्तूणीरश्चेत्येतानित... ददाह। अयमपि महोत्पातः॥

[8]इत्याद्यरिष्टैरशुभोपदेशिभिर्विहन्यमानोऽप्यसुरः पुनः पुनः।
यदा मदान्धो न[9] गतान्यवर्तताम्बरा[10]त्तदाभून्मरुतां सरस्वती॥ ३...

इत्यादीति॥ मदान्धोऽसुरस्तारकोऽशुभोपदेशिभिरमङ्गलसूचकैरित्याद्य... पूर्वोक्तमहोत्पातैः पुनः पुनर्विहन्यमानोऽपि विघ्नितः क्रियमाणोऽपि यदा ... द्गमनात्। भावे निष्ठा। न न्यवर्तत न निवृत्तः। तदाम्बराद्व्योम्नः सकाश... रुतां देवानां सरस्वती वाण्यभूत्॥

मदान्ध मा गा भुजदण्डचण्डिमावलेपतो म[11]न्मथहन्तृसूनुना।
सुरैः [12]सनाथेन पुरंदरादिभिः समं समन्तात्स[13]मरं विजित्वरैः॥ ३...

मदान्धेति॥ भो मदान्ध, भुजदण्डयोर्यश्चण्डिमा प्रचण्डत्वं तेन योऽव... गर्वः। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति मेदिनी विश्वश्च। तस्... पञ्चम्यास्तसिल्। हेत्वर्थे पञ्चमी। विजित्वरैर्जयनशीलैः पुरंदरादिभिः सुरैः ...

१ सोदरं क्वचित्. २ उल्कातत. ३ रथस्य. ४ चामरात्. ५ बालबालधीन्. ६ ... ण्डेन. ७ धूर्युगोद्गतः. ८ इत्याद्यनिष्टैः; इत्यादिरिष्टैः. ९ न च विन्यवर्तत; न ग... वर्त्मना. १० अम्बरे. ११ मन्मथशत्रु. १२ सनाथैस्त्रिदिवेश्वरादिभिः; सनाथैस्त्रि... श्वरादिभिः. १३ समरे.

...परितः सनाथेन सहितेन मन्मथहन्तृसूनुना शिवपुत्रेण समं सह समरं ...म् । कर्तुमिति शेषः । मा गा मा याहि ॥

...थ 'गुहः–' इत्यादिभिश्चतुर्भिः कुमारविषये तारककर्तृकसमरानौचित्यमेव ...ति—

...ऽसुरैः षड्दिनजातमात्रको निदाघधामेव निशातमोभरैः ।
...द्यते नाभिमुखो हि संगरे कुतस्त्वया तस्य समं विरोधिता ३४

...त्र गुहेति ॥ भो मदान्ध, संगरे युद्धेऽभिमुखः संमुखः षड्दिनानि जातानि ...तानि यस्य । जन्मदिनादारभ्यातिक्रान्तषड्दिनीक इत्यर्थः । गुहः सेनानीः । ...ः षाण्मातुरे गुह्ये' इति मेदिनी । असुरैर्दैत्यैः कर्तृभिः । निशातमोभरै रात्र्य-...तमससमूहैर्निदाघधामा उष्णतेजाः सूर्य इव नहि नैव विपद्यते विमृष्यते । ...समं सह तस्य संबन्धिनी विरोधिता वैरं कुतः कारणात्स्यात् । कुमारवि-...भवत्कृतवैरनिमित्तसमरोऽनुचित एवेति भावः ॥

...लिहैः शृङ्गशतैः समन्ततो दिक्चक्रवालैः स्थगितस्य भूभृतः ।
...स्य रन्ध्रं विशिखेन निर्ममे येनाहवस्तस्य सह त्वया कुतः ३५

अभ्रंलिहैरिति ॥ भो मदान्ध, येन सेनान्या कर्त्रा । अभ्रंलिहैराकाशस्पृग्भिः ...तैः सानुशतैः । तथा दिक्चक्रवालैः काष्ठामण्डलैः । 'चक्रवालं तु मण्डलम्' ...रः । समन्ततः परितः स्थगितस्याच्छादितस्य क्रौञ्चस्य क्रौञ्चसंज्ञकस्य भूभृतः ...स्य संबन्धि रन्ध्रं छिद्रम् । जातावेकवचनम् । विशिखेन बाणेन निर्ममे ...तम् । कर्मणि लिट् । तस्याहवः सङ्ग्रामस्त्वया सह कुतः कारणात्स्यात् । ...तु नेदमुचितमिति भावः ॥

...थ युग्मेनाह—

...ध्वा धनुर्वेदमनङ्गविद्विषस्त्रिःसप्तकृत्वः समरे महीभुजाम् ।
...ाभिषेकं रुधिराम्बुभिर्घनैः स्वक्रोधवह्निं शमयांबभूव यः ३६

...ब्ध्वेति ॥ यो जामदग्न्यः परशुरामोऽनङ्गविद्विषो हरसकाशाद्धनुर्वेदं लब्ध्वा ...। अधीत्येति यावत् । अतः समरे युधि महीभुजां राज्ञां संबन्धिभी रुधिरा-...ः शोणितजलैस्त्रिःसप्तकृत्वस्त्रिगुणसप्तवारम् । एकविंशतिवारमिति यावत् । ...षेकं स्नानं कृत्वा स्वक्रोधवह्निमात्मीयकोपाग्निं शमयांबभूव । एकविंशतिवारं ...यान्हत्वा शान्तोऽभूदिति भावः ॥

...ामदग्न्यः क्षयकालरात्रिकृत्स क्षत्रियाणां समराय वल्गति ।

---

... महासुरैः; सुरासुरैः. २ विमुह्यते. ३ सोऽभिमुखम्; योऽभिमुखम्. ४ न. ...नियम्. ६ तेन. ७ दिक्चक्रवालस्थगितस्य; दिक्चक्रवालस्थगतस्य. ८ स्वशरै-...र्ममे येनाहवे तेन कुतः समो भवान्. ९ कृताभिषेकः.

**येन त्रिलोकी[1]सुभटेन तेन कुतो[2]ऽवकाशः सह विग्रह[3]ग्रहे ॥ ३७**

नेति ॥ क्षत्रियाणाम् । 'क्षत्राद्घः' इति घप्रत्ययः । 'आयनेय-' इति तदे- देशः । क्षयसंबन्धिनीं कालरात्रिं करोति यः स जामदग्न्यो जमदग्नेरपत्यं पु- रामस्त्रिलोक्यां सुभटेन सुतरां योद्धा येन सेनान्या सह समराय समरं न वल्गति न चलति । नैवोद्युङ्क्त इत्यर्थः । तेन सकलराजकुलजिघत्सद्भ- भीषकेण सेनान्या सह तव त्वत्कर्तृके विग्रहग्रहे रणग्रहे । 'विग्रहः कायविस्त- भागे ना रणे स्त्रियाम्' इति मेदिनी । कुतः कस्मादवकाशोऽवसरः स्यात्। तु न स्यादिति काक्वा व्याख्येयम् । अतः सर्वथैवामुना सह त्वया न यो- किं तु निवर्तनीयमेवेति भावः ॥

ननु निवर्तने पुनरपि वधशङ्केति चेत्तत्राह—

**त्यजाशु गर्वं[4] मदमूढ मा स्म गाः स्मरारिसूनोर्वरशक्तिगोचरम् ।**
**तमेव नूनं शरणं व्रजाधुना जगत्सुवीरं[5] स[6] चिराय जीव तत् ॥ ३**

त्यजेति ॥ भो मदमूढ उन्मादमूर्ख, आशु शीघ्रं गर्वमभिमानं त्यज । स्म- रिसूनोः सेनान्याः संबन्धिनी या वरा श्रेष्ठा शक्तिरायुधं तस्या गोचरं विष- स्म गाः मा स्म याहि । तर्हि किं कर्तव्यमित्याह—अधुनेदानीं नूनमेव नि- नैव । 'नूनमवश्यं निश्चये द्वयम्' इत्यमरः । शरणं रक्षितारम् । 'शरणं गृह- त्रोर्वधरक्षणयोरपि' इति मेदिनी । तं जगत्सुवीरं सेनान्यं व्रज गच्छ । तच्छ- द्गमनाद्धेतोः स त्वं चिराय जीव बहुकालं प्राणान्धारय । कुमारगमनं वि- तवान्यज्जीवातुरिति भावः ॥

**श्रुत्वेति वाचं वियतो गरीयसीं[7] क्रोधादहंकारपरो महासुरः ।**
**प्रकम्पिताशेषजगत्त्रयोऽपि सन्न[8]कम्पतो[9]च्चैर्दिवम[10]भ्यधाच्च सः ॥ ३**

श्रुत्वेति ॥ वियत आकाशस्येत्येवंभूतां गरीयसीमतिशयगुर्वीं वाचं श्रु- क्रोधाद्धेतोरहंकारेऽभिमाने । 'गर्वोऽभिमानोऽहंकारः' इत्यमरः । परः स- 'परः श्रेष्ठादिदूरान्योत्तरे क्लीबं तु केवले' इति मेदिनी । आदिशब्दसंगृहीत- शक्तिवाचकत्वं विवेचनीयम् । सोऽसुरस्तारकः प्रकर्षेण कम्पितं वेपितमशेषं स- जगतां त्रयं येन तथाभूतः सन्नप्यकम्पत चकम्पे । भारत्या अत्यासन्नत्वादिति भा- अथ च दिवं स्वर्गमुच्चैरुच्चैः स्वरेणाभ्यधादचकथत् ॥

अथ 'किम्' इत्यादिभिस्त्रिभिस्तदुक्तिमाह—

**किं ब्रूथ रे[11] व्योमचरा महासुराः स्मरारि[12]सूनुप्रतिपक्षवर्तिनः ।**
**मदीयबाणव्रणवेदना[13] हि साधुना कथं विस्मृति[14]गोचरीकृता ॥ ४०**

१ तिलकेन. २ अवकाशी; अवकेशी. ३ विग्रहग्रहः. ४ दर्पम्. ५ जगत्प्रवीरं. ६ सुचिराय. ७ वरीयसीम्. ८ सः. ९ नाकम्पत; प्राकम्पत. १० अभ्यधात्ततः; अभ्य- गात्ततः. ११ हे. १२ मखारि. १३ वेदनामहोऽधुनेव. १४ विस्मृत्य गताः स्वपृष्ठतः.

किमिति ॥ रे व्योमचराः। रे इति नीचसंबोधने। महासुरा महान्तः सुराः स्मरारिसूनोः कुमारस्य प्रतिपक्षे कोटौ वर्तन्ते तथाभूताः सन्तः किं ब्रूथ य। नेदं वाच्यमिति ध्वनिः। ननु वादे त्वया किं कृतमित्याह—सा पूर्वतरा यानां बाणानां संबन्धिनां व्रणानां रन्ध्राणां वेदना पीडाधुना हीदानीमेव केन प्रकारेण विस्मृतिगोचरीकृता विस्मरणविषयीकृता। अपि त्विदानी-सैव स्मर्तव्या, अग्रे भोक्ष्यमाणत्वात् ॥

स्वरैः प्रालपथाम्बरस्थिताः शिशोर्बलात्षड्दिनजातकस्य किम् ।
नः प्रमत्ता इव कार्तिके निशि स्वैरं वनान्ते मृगधूर्तका इव ॥४१॥

कटुस्वरैरिति ॥ भो देवाः, यूयमम्बरस्थिता आकाशवर्तिनः सन्तः दिनजातकस्य षड्दिनजन्मनः शिशोर्बालस्य बलाद्वीर्याद्धेतोः कार्तिके बाहुले सि प्रमत्ता उन्मत्ताः श्वान इव निशि वनान्ते वनमध्ये मृगधूर्तका मृगा एव कास्त इव किं प्रालपथ प्रलापं कुरुथ। अपि तु मदपेक्षया निर्वीर्यैर्भवद्भिः पो न विधेय इति भावः ॥

न वो गर्भतपस्विनः शिशुर्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ।
स्करस्तस्करसङ्गतो यथा तद्वो निहन्मि प्रथमं ततोऽप्यमुम् ४२

सङ्गेनेति ॥ भो देवाः, वो युष्माकं सङ्गेन संबन्धेन निमित्तेन वराकोऽति-त्वाच्छोचनीयः। 'वराकः शंकरे पुंसि शोचनीयेऽभिधेयवत्' इति मेदिनी। पुरोवर्ती गर्भतपस्विनः । अत्र गर्भशब्देन गर्भत्वं तदस्यास्तीति गर्भः। आद्यच् । ततो गर्भत्ववानिति निष्पन्नम्। गर्भत्वं चात्र बालत्वम्। 'गर्भो ऽर्भके कुक्षौ' इति मेदिनी। एवं च बाल इति निष्कर्षः। स चासौ तपस्वी । बालत्वेऽपि तपस्वित्वकथनाद्वार्धक्ये त्वर्थात्सिद्धम्। एवं च बालकस्व-स्य तपस्वित्वेन निष्किंचनस्येति तात्पर्यार्थः। अथवा गर्भत्वादिति ल्यब्लोप-या पञ्चमी। तदन्तेन तपस्विशब्दस्य समासो विधेयः। गर्भत्वं बालत्वमा-तपस्वीत्यर्थः। तथाभूतस्य शिवस्य शिशुर्बालः कुमारः। तस्करसङ्गतश्चौर-तस्करो यथा चौर इव। ध्रुवं निश्चयेनान्तं मरणमवाप्स्यति प्राप्स्यति। साद्वो युष्मान्प्रथमं प्राङ् निहन्मि। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति ष्यकालेऽपि वर्तमानप्रयोगः। ततो भवद्धननानन्तरममुं कुमारमपि निहन्मि निष्यामि ॥

रयत्युग्रतरं महासुरे महाकृपाणं कलगत्यलं क्रुधा ।
परीतपीडितजानवो भयान्नभश्चरा दूरतरं विदुद्रुवुः ॥ ४३ ॥

ईतीति ॥ इति पूर्वोक्तमीरयति वदति महासुरे तारके क्रुधा हेतुनोग्रतरम-

---

१ कटुस्वरैरारटथ; कटुस्वरैरीरयथ. २ प्रवृत्ताः. ३ कार्तिकीनिशि. ४ भर्गतप-नः. ५ अतस्करम्. ६ तु. ७ ध्रुवम्.

त्यन्तभयानकं महाकृपाणं महान्तं खड्गम् । अलं पर्याप्तत्वेन । अनेन प्रय... स्पर्शमात्र एवेति व्यज्यते । 'अलं भूषणपर्याप्तिवारणेषु निरर्थके' इति विश्वः ... कलयति बिभ्रति सति । नभश्चरा देवा भयाद्धेतोः परस्परमन्योन्यमुत्पीडि... अतिसंकीर्णतया धृष्टत्वाद्व्यथिता जानव ऊरुपर्वाणि येषाम् । 'जङ्घा तु प्रसृ... जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः । तथाभूताः सन्तो दूरतरमतिदूरम् । '... न्तिकार्थेभ्यो द्वितीया च' इति प्रातिपदिकार्थमात्रे द्वितीया । विदुद्रुवुः पला... चक्रिरे । 'द्रु गतौ' इत्यस्मात्कर्तरि लिट् ॥

ततोऽवलेपाद्विकटं विह[1]स्य स [2]व्यधत्त कोशादसिमुत्तमं बहिः ।
रथं द्रुतं प्रापय वासवान्तिकं [3]नन्वित्यवोचन्निजसारथिं रथी ॥ ४४ ॥

तत इति ॥ ततोऽनन्तरं स तारको विकटं करालं यथा तथा । वक्ष्यमा... स्यासेर्विशेषणं वा । 'विकटा वज्रवाराह्यां त्रिषु रुचिकरालयोः' इति मेदिनी । विहस्याट्टहासं कृत्वा । उत्तममसिं करवालं कोशाद्बहिर्व्यधत्त कृतवान् । अथ रथी सः 'रथं वासवान्तिकमिन्द्रसमीपं द्रुतम् । ननु निश्चयेन प्रापय' इति निजं स्वीयं सारथिं सूतमवोचत् । 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधार... इति विश्वः ॥

मनोतिवेगेन रथेन सारथिप्रणोदितेन प्रचलन्महासुरः ।
ततः प्रपेदे सुरसैन्यसागरं भयंकराकारमपारमग्रतः ॥ ४५ ॥

मन इति ॥ ततोऽनन्तरं मनोतिवेगेनान्तःकरणादपि बहुलगतिजवेन सार... थिना प्रणोदितेन प्रेरितेन रथेन प्रचलन्गच्छन्महासुरस्तारकोऽग्रतः पुरतः । स्थि... मिति शेषः । अपारमनवधिकं भयंकराकारम् । विभीषकाकृतिमत्पुरुषमित्यर्थः । सुरसैन्यसागरं देवसेनासमुद्रं प्रपेदे प्राप ॥

पुरः सुराणां पृ[6]तनां प्रथीयसीं विलोक्य वीरः पुलकं प्रमोदजम् ।
बभार भूँ[7]म्नाथ स बाहुदण्डयोः प्रचण्डयोः संगरकेलिकौतुकी ॥ ४६ ॥

पुर इति ॥ वीरः शूरः । 'वीरो रसविषे पुंस्युत्तरे सुभटे त्रिषु' इति मेदिनी । स तारकः प्रथीयसीमतिपृथुलां सुराणां देवनां संबन्धिनीं पृतनां सेनां पुरोऽग्रे विलोक्य प्रचण्डयोर्बाहुदण्डयोर्भुजदण्डयोः । 'दण्डोऽस्त्री लगु... पुमान्' इति मेदिनी । प्रमोदजमानन्दजनितं पुलकं रोमाञ्चं भूम्ना बाहुल्ये... बभार धृतवान् । यतः संगरकेलौ सङ्ग्रामक्रीडायां कौतुक्युत्साहवान् । वीरा... सेनादर्शनमेव महान्मुदो हेतुरिति भावः ॥

---

१ विकृष्य. २ अभिकोशमाधादसिमंशुभासुरम्. ३ बत. ४ प्रति. ५ द्रुत... ६ पृतनाः प्रथीयसीः. ७ भूम्ना बहु.

तो महेन्द्रस्य चराश्चमूचरा रणान्तलीलारभसेन भूयसा ।
ः प्रचेलुर्मनसोऽतिवेगिनो युयुत्सुभिः किं समरे विलम्ब्यते ॥४७॥

तत इति ॥ ततोऽनन्तरं मनसः सकाशादप्यतिवेगिनोऽत्यन्तजववन्तः । था भूयसातिशयेन रणान्ते सङ्ग्राममध्ये या लीला विलासः । विलासोऽत्र मराङ्गणाधिकरणकमात्मीयभुजदण्डगतपराक्रमचमत्कृतिदर्शनम् । तत्र रभसेन गेन । 'लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्वः । मूं सेनायां चरन्तीति विग्रहे 'चरेष्टः' इति टप्रत्ययः । तथाभूता महेन्द्रस्ये- न्द्रस्य चराश्चाराः । दूता इति यावत् । 'चरो द्यूतप्रबन्धे स्याच्चारजङ्गमयोश्चले' ति विश्वः । समरे सङ्ग्रामे युयुत्सुभिर्योद्धुमिच्छुभिः । भवद्भिरित्यर्थः । किं लम्ब्यते किं विलम्बः क्रियते । अपि तु सत्वरमेव युध्यतामिति प्रतिपक्षान्व- तीत्यपि शेषः । पुरोऽग्रे प्रचेलुः ॥

ःस्थितं देवरिपोश्चमूचरा [3]बलद्विषः सैन्यसमुद्र[4]मभ्ययुः ।
जं समुत्क्षिप्य [5]परेभ्य आत्मनोऽभिधानमुच्चैरभितो न्यवेदयन् ४८

पुर इति ॥ देवरिपोस्तारकस्य चमूचराः सेनाचराः पुरःस्थितमग्रस्थितं बल- प इन्द्रस्य संबन्धिनं सैन्यसमुद्रं सेनासागरमभ्ययुः संमुखत्वेन जग्मुः । अथ भितः संमुखम् । 'अभितः शीघ्रसाकल्यसंमुखोभयतोऽन्तिके' इति विश्वः । जं बाहुं समुत्क्षिप्योत्थाप्य आत्मनोऽभिधानं नाम । 'आख्याह्वे अभिधानं च मधेयं च नाम च' इत्यमरः । उच्चैःस्वरेण परेभ्यः शत्रुभ्यो न्यवेदयन्वयममु- नामानो वयममुकनामान इति निवेदितवन्तः ॥

रोगतं दैत्यचमूमहार्णवं दृष्ट्वा [6]परं चुक्षुभिरे [7]महासुराः ।
रारिसूनोर्नयनैककोणके [9]ममुर्[10]भटांस्[11]तस्य रणेऽवहेलया ॥ ४९ ॥

पुर इति ॥ महासुरा महान्तः सुरा इन्द्रादयः पुरोगतमग्रे प्राप्तं दैत्यस्य रकस्य चमूरेव महानर्णवः समुद्रस्तं दृष्ट्वा परं केवलम् । 'परमव्ययमिच्छन्ति–' ति विश्वः । चुक्षुभिरे संचेलुः । विव्यथुरिति यावत् । रणे संगरेऽवहेलया दपेक्षया केयं वराकिका सेनेत्यनादरेणोपलक्षितस्य तस्य पुरारिसूनोः शिवपु- स्य नयनैककोणके नेत्रैकदेश एव । 'कोणो वाद्यप्रभेदे स्यात्कोणोऽब्धौ लगु- र्कजे । वीणादिवादनोपायेऽप्येकदेशे गृहस्य च ॥' इति विश्वः । अत्र गृह- त्र कोण इत्यविवक्षितम् । किंत्वनन्यसाधारणत्वेन प्रकृत इष्टसिद्ध्यर्थमुपलक्षि- वे गमनीय इत्यलम् । भटा योद्धारो ममुः समविविशुः ॥

---

१ ऽसुरेन्द्रानुचराः; ऽसुरेन्द्रस्य चराः. २ पुरःसरा. ३ सुरद्विषः. ४ अभ्यगुः. ५ सहेलमात्मनः. ६ अभितः. ७ अखिलाः सुराः; अखिलाः स तु. ८ सरारि- नोः. ९ ममौ. १० भटः; पुरः. ११ भावि रणे हि हेलया.

द्विषद्बलत्रासवि[1]भीषिताश्चमूर्दिवौकसामन्धकशत्रुनन्दनः ।
अपश्यदुद्दिश्य [2]महारणोत्सवं प्रसादपीयूषधरेण चक्षुषा ॥ ५० ॥

द्विषदिति ॥ महारणोत्सवमुद्दिश्य स्थितोऽन्धकशत्रुनन्दनः कार्तिकेयो द्वि- बलत्रासेन तारकसैन्यशासनेन विभीषिता भीता दिवौकसां देवानां चमूः से- कर्म । प्रसादोऽनुग्रहः स एव पीयूषममृतं तद्धरति तथाभूतेन चक्षुषापश्यद्ददर्श अनेन यूयं माभैष्ट, प्रसन्ना भवत, निःशङ्कं युध्यध्वं चेति व्यज्यते ॥

[3]उत्साहिताः शक्तिधरस्य दर्शनान्मृधे महेन्द्रप्रमुखा [4]मखाशनाः ।
[5]अहं मृधे जेतुमरीनरीरमन्न कस्य वीर्याय वरस्य संगतिः ॥ ५१ ॥

उत्साहिता इति ॥ शक्तिधरस्यायुधविशेषस्य धारिणः । 'शक्तिर्बले प्रभावा- शक्तिः प्रहरणान्तरे' इति विश्वः । अत एव मृधे सङ्ख्ये । 'मृधमास्कन्द- सङ्ख्यम्' इत्यमरः । तस्य कुमारस्य दर्शनाद्धेतोरुत्साहिता उत्साहं प्राप्ता महेन्द्र- प्रमुखा इन्द्रपूर्वा मखाशना यज्ञहविर्भोक्तारो देवाः मृधे संगरे 'अहमेवारीञ्छत्रू- ञ्जेतुं समर्थोऽस्मि नान्यः' इति वदन्तः सन्तोऽरीरमन्नेरमिरे । तथाहि । वरस्य श्रेष्ठ- संगतिः संबन्धः कस्य पुरुषस्य वीर्याय वीर्यं कर्तुं न भवति । अपि तु सर्वस्या- त्यर्थः । गतवीर्यस्य वीर्यकरणे महदाश्रय एव निदानं नान्यदिति काक्वा ध्वन्यते ॥

परस्परं वज्रधरस्य सैनिका द्विषोऽपि योद्धुं [6]स्वकरोद्धृतायुधाः ।
[7]वैतालिकश्रावितताररविक्रमाभिधानमीयुर्विजयैषिणो रणे ॥ ५२ ॥

परस्परमिति ॥ रणे युद्धे विजयैषिणो विजयं प्राप्तुमिच्छवः । अत ए- योद्धुं युद्धं कर्तुं स्वकरैरात्मीयपाणिभिरुद्धृतानि गृहीतान्यायुधानि खड्गादीनि यैस्तथाभूता वज्रधरस्येन्द्रस्य द्विषोऽपि तारकस्य च । अपिरत्र समुच्चयार्थः 'अपिः संभवनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः । सैनिकाः सेनाचराः 'चरति' इति ठक् । वैतालिकैर्बन्दिभिः श्रावितान्याकर्णितानि तार उच्चैर्विक्रमो- ऽभिधानानि नामानि च यस्मिन्कर्मणि यथा तथा परस्परमन्योन्यमीयुः प्रापुः मिमिलुरिति यावत् ॥

[8]सङ्ग्रामं प्रलयाय संनिपततो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुग[9]ग्रस्ताशेषदिग्व्यापिनः ।
[10]कालातिथ्यभुजो बभूव बहलः कोलाहलः [11]क्रोषणः
शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिंभरिः ॥ ५३ ॥

---

१ विसंकुला चमूम्. २ महाहवोत्सवम्; महाहवे बलम्. ३ उत्साहिनः. ४ सुधाशिनः. ५ अहंजुषः; अयत्नतः. ६ प्रवरोद्धृतायुधाः, प्रचुरोद्धतायुधाः. ७ वैमानिकैः श्रावितमा- नसत्क्रमाभिधानम्; वैतालिकैः श्रावितनामविक्रमाः सोत्साहम्; वैतालिकश्रावितनामवि- क्रमाभिधानम्. ८ संग्रामप्रलयाय; संग्रामे प्रलयाय. ९ आरोहदिग्व्यापिनः. १० काला- तिथ्यपृथुप्रदानबहलः; कालातिथ्यपृथूच्चचाल बहलः. ११ क्रोधिनः; क्रोधिलः.

सङ्ग्राममिति ॥ प्रलयाय नष्टचेष्टतायै । तां कर्तुमित्यर्थः । सङ्ग्रामं समरं निपततः समुदितवतः । अन्यत्र प्रलयाय लोकसंहाराय संनिपततो वर्धमास्य । अत एव वेलां मर्यादाम् । एकत्र न्याय्याचरणम्, अन्यत्रावधिम् । सीमामिति यावत् । 'वेला काले च जलधौ तीरे नीरविकारयोः । क्लिष्टरसने रोगे सीम्नि वाचि युधि स्त्रियाम्' इति विश्वः । अतिक्रामत उल्लङ्घयतः । निर्मदत्वेन युध्यमानस्य सीमानमुल्लङ्घ्य चलत इत्यर्थः । अत एवाशेषासु दिक्षु पिनो व्याप्नुवतः । उभयत्रापि समानमेतत् । तथा कालस्य यमस्य संबन्ध्यातिथ्यमतिथ्युचितसत्कारं भुनक्ति भोक्ष्यति तथोक्तस्य । 'वर्तमानसामीप्ये–' इति लट् । अन्यत्र कालं कृष्णमातिथ्यमतिथिसत्कारं भुनक्ति भोजयति । अन्तर्भावितणिजर्थः । प्रलये वर्धमानसमुद्रनीरे केवलं तस्यैव वर्तमानत्वात् । वृन्दारकाणां देवानामसुराणां च ये सैन्ये ते एव सागरौ समुद्रौ तयोर्युगस्य युग्मस्य । 'युग्मं तु युगुलं युगम्' इत्यमरः । तत्संबन्धी क्रोषणो मुखरः कोलाहलः कलकलो हलः । अत एव शैलसंबन्धिनीनामुत्ताला उच्चतालवृक्षसहिता यास्तव्यः कतानि । शृङ्गाणीति यावत् । तासां विघट्टने स्फोटने पटुः समर्थः । अत एव ब्रह्माण्डे न कुक्षिं भरति तथोक्तश्च बभूव । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये सुरा-
सुरसैन्यसंघट्टो नाम पञ्चदशः सर्गः ॥

---

## षोडशः सर्गः ।

अथान्योन्यं[1] विमुक्तास्त्रशस्त्रजालैर्भयंकरैः[2] ।
युद्धमासीत्सुनासीरसुरारिबलयोर्महत्[3] ॥ १ ॥

अथेति ॥ अथ सुरासुरसंमेलनानन्तरम् । भयंकरैर्भयमुत्पादयद्भिः । अन्योन्यं परस्परं विमुक्तानि प्रहर्तुं विसृष्टान्यस्त्रशस्त्राणां शरादिमोहनादीनां जालानि समूहास्तैः कृत्वा । सुनासीर इन्द्रः, सुरारिस्तारकः, तयोर्बले सैन्ये तयोः । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः' इति विश्वः । महद्घोरं युद्धं सङ्ग्राम आसीद्बभूव । सर्गेऽस्मिन्वृत्तमनुष्टुप् ॥

पत्तिः पत्तिमभीयाय रणाय रथिनं रथी ।
तुरंगस्थं तुरंगस्थो दन्तिस्थं दन्तिनि स्थितः ॥ २ ॥

---

१ अन्योन्य. २ भयंकरम्. ३ द्वयोः.

पत्तिरिति ॥ पत्तिः पादचारी पत्तिं पादचारिणम्, रथी रथारूढो रथिनं रथारूढम्, तुरंगस्थोऽश्ववाहस्तुरंगस्थमश्ववाहम्, दन्तिनि गजे स्थितो दन्तिस्थो गजारोहम्, रणाय रणं कर्तुमभीयाय संमुखमगमत्। अत्र प्रत्येकं क्रियासंबन्धो विधेयः अन्यथा बहुत्वप्रसङ्गः ॥

युद्धाय धावतां धीरं वीराणामितरेतरम् ।
वैतालिकाः कुलाधीशा नामान्यलमुदाहरन् ॥ ३ ॥

युद्धायेति ॥ इतरेतरं परस्परं युद्धाय युद्धं कर्तुं धीरं गम्भीरं यथा तथा धावतां विद्रवतां वीराणां योद्धॄणां नामानि कुलाधीशाः कुलस्वामिनः। कुलप्रदीपा इति यावत्। अनेन स्वात्मविद्यायामतिप्रावीण्यं व्यज्यते। वैतालिका बन्दिनः। अलं भूषणम्। शोभेति यावत्। यथा स्यात्तथोदाहरन्नूचुः। अयममुकसंज्ञको वीरो धावति, अयममुकसंज्ञको वीरो धावतीत्येवंभूतं जगदुरित्यर्थः। आत्मपरावबोधार्थमिति भावः ॥

पठतां बन्दिवृन्दानां प्रवीरा विक्रमावलीम् ।
क्षणं विलम्ब्य चित्तानि ददुर्युद्धोत्सुकाः पुरः ॥ ४ ॥

पठतामिति ॥ प्रवीराः प्रकृष्टयोद्धारो विक्रमावलीं पराक्रमसमाहारं पठतां स्तुवताम् 'साधु पराक्रान्तम्, साधु पराक्रान्तम्' इति वदतां बन्दिवृन्दानां वैतालिकसमूहानां पुरोग्रे चित्तानि मनांसि क्षणं विलम्ब्य ददुः। यतो युद्धोत्सुकाः समरोत्कण्ठिताः। समरोत्कण्ठितमनोज्ञताभावो न श्रवणेन्द्रियस्य केवलस्यैवार्थबोधासंभवात् ॥

सङ्ग्रामानन्दवर्धिष्णौ विग्रहे पुलकाञ्चिते ।
आसीत्कवचविच्छेदो वीराणां मिलतां मिथः ॥ ५ ॥

सङ्ग्रामेति ॥ सङ्ग्रामानन्देन समरोत्साहेन वर्धिष्णौ वृद्धिशीले अत एव पुलकाञ्चिते रोमाञ्चव्याप्ते मिथो मिलतां संगच्छमानानां वीराणां योद्धॄणां विग्रहे शरीरे। जातावेकवचनम्। कवचानां विच्छेदो विभेद आसीत् ॥

निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः समुत्थितैः ।
आसन्व्योमदिशस्तूलैः पलितैरिव पाण्डुराः ॥ ६ ॥

निर्दयमिति ॥ निर्दयं निष्कृपं खड्गभिन्नेभ्यः करवालविदीर्णेभ्यः कवचेभ्यः सकाशात्समुत्थितैरुड्डयितैस्तूलैः कार्पासैः। 'तूलः पिचौ भवेत्तूलं ब्रह्मदारुविहायसोः' इति विश्वः। पलितैरिव जराजनितशुक्लत्वैरिव। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। व्योमसहिता दिशः पाण्डुराः श्वेता आसन्। उत्प्रेक्षया कवचविच्छे

१ कुलाधीशनामानि. २ पठिता बन्दिभिः श्रुत्वा प्रवीरविरुदावलीः; पठिता बन्दिवृन्देन प्रवीरविरुदावलीः; पठतां बन्दिवृन्दानां प्रवीरविरुदावलिम्. ३ अपि. ४ पुलकाङ्किते. ५ धीराणाम्. ६ समुच्छ्रितैः. ७ स्थूलैः. ८ पतितैः. ९ पञ्जराः.

पि वीराणां युद्धविषयक उत्साहो न विच्छिन्न इति ध्वन्यते । अतोऽलंकारेण वस्तुध्वनिः ॥

खड्गा रुधिरसंलिप्ताश्चण्डांशुकरभासुराः ।
इतस्ततोऽपि वीराणां विद्युतां वैभवं दधुः ॥ ७ ॥

खड्गा इति ॥ रुधिरेण संलिप्ताः । तथेतस्ततश्चण्डांशुकरैः सूर्यकिरणव्यतिकरैर्भासुराश्चमत्कुर्वन्तो वीराणां खड्गा विद्युतां तडितां वैभवं सादृश्यं दधुः । विद्युच्छुशुभिर इत्यर्थः । अत्रोपमया खड्गानां वीरकरसंपर्कजनितपरिकम्पचमत्कारकारित्वं ध्वन्यते । अतोऽत्राप्यलंकारेण वस्तुध्वनिः । तथा वीरकरसंपर्कजनितपरिकम्पचमत्कारकारित्वरूपव्यङ्ग्येन प्रतिद्वन्द्विविहननजनितद्विगुणोत्साहवत्त्वं व्यज्यते ॥

विसृजन्तो मुखैर्ज्वाला भीमा इव भुजंगमाः ।
विसृष्टाः सुभटै रुष्टैर्व्योम व्यानशिरे शराः ॥ ८ ॥

विसृजन्त इति ॥ रुष्टैः सुभटैः शोभनयोद्धृभिर्विसृष्टा विमुक्ताः शरा बाणाः । मुखैरग्रैर्ज्वाला उल्का विसृजन्तो मुञ्चन्तः । अत एव भीमा भयानका भुजंगमा इवेत्युत्प्रेक्षा । व्योम कर्म । व्यानशिरे व्यापुः । अत्र सुभटकर्तृकविसर्जनव्यापारपूर्वकव्योमव्याह्या प्रागभाविताविशिष्टशत्रुविग्रहभेदनं ध्वन्यते । अन्यथा व्योमव्याप्तिमात्रस्यैव विवक्षितत्वेन व्याप्तेर्व्यर्थत्वमुद्भाव्यते । तेनात्र वस्तुना वस्तुध्वनिः ॥

बाढं वपूंषि निर्भिद्य धन्विनां निघ्नतां मिथः ।
अशोणितमुखा भूमिं प्राविशन्दूरमाशुगाः ॥ ९ ॥

बाढमिति ॥ मिथोऽन्योन्यं दूरमतिशयेन निघ्नतां प्रहरतां धन्विनां धनुर्धारिणां वपूंषि गात्राणि बाढं गाढम् । दृढमिति यावत् । निर्भिद्याप्यशोणितमुखाः शोणितसाहित्यराहित्यवन्ति मुखान्यग्राणि येषां त आशुगा बाणा भूमिं प्राविशन्प्रविष्टाः । अत्र विभेदका अप्यशोणितमुखा इति विरोधाभासालंकारेण बाणानामतिशीघ्रगामित्वरूपवस्तुध्वनिः । न च शीघ्रमेव व्यञ्जनीयमिति वाच्यम् । आशुगा इत्यनेनैव तदभिहितत्वात् ॥

निर्भिद्य दन्तिनः पूर्वं पातयामासुराशुगाः ।
पेतुः प्रवरयोधानां प्रीतानामाहवोत्सवे ॥ १० ॥

निर्भिद्येति ॥ आहवोत्सवे सङ्ग्रामरूपोत्सवे प्रीतानां प्रवरयोधानामतिश्रेष्ठयोद्धॄणां संबन्धिन आशुगा बाणा दन्तिनो गजान्निर्भिद्य भेदयित्वा पूर्वं पातयामासुः । पश्चात्स्वयमपि पेतुः । अत्र वाक्यार्थरूपवस्तुना प्राणापहारकं तेषामतितैक्ष्ण्यं वस्तु ध्वन्यत इति वस्तुना वस्तुध्वनिः ॥

---

१ वैद्युतम्; विद्युतः. २ तुष्टैः; तुङ्ग. ३ असुराः. ४ गाढम्. ५ निर्भिद्य.

ज्वलदग्निमुखैर्बाणैर्नीरन्ध्रैरितरेतरम् ।
उच्चैर्वैमानिका व्योम्नि कीर्णे दूरमपासरन् ॥ ११ ॥

ज्वलदिति ॥ ज्वलदग्निमुखैः प्रज्वलद्वह्निसहिताग्रैः । तथेतरेतरं परस्प नीरन्ध्रैर्निर्गतावकाशैः । परस्परसंघट्टितैरिति तात्पर्यार्थः । बाणैः शरैः । उच्चैरति शयितं यथा तथा कीर्णे व्याप्ते व्योम्नि वैमानिका विमानचारिणो देवा विष्ण्वा दयो दूरमपासरन्दुद्रुवुः । आत्मशरीरसंबन्धशङ्काकुलत्वादिति भावः ॥

विभिन्नं धन्विनां बाणैर्व्यथार्तमिव विह्वलम् ।
ररास विरसं व्योम श्येनप्रतिरवच्छलात् ॥ १२ ॥

विभिन्नमिति ॥ धन्विनां बाणैर्विभिन्नं विदीर्णम् । अत एव व्यथार्तं पीडा दुःखितम् । अत एव विह्वलम् । इतिकर्तव्यताविस्मरणाश्रयमित्यर्थः । व्यो नभः श्येनप्रतिरवस्य पक्षिविशेषप्रतिध्वनेश्छलान्मिषेण विरसं कठोरं यथा तथा ररासेव रुरोदेवेत्युत्प्रेक्षालंकारः ॥

चापैराकर्णमाकृष्टैर्विमुक्ता दूरमाशुगाः ।
अधावन्रुधिरास्वादलुब्धा इव रणैषिणाम् ॥ १३ ॥

चापैरिति ॥ आकर्णं कर्णपर्यन्तमाकृष्टै रणैषिणां योद्धृणां संबन्धिभिश्चापै धनुर्भिर्विमुक्ता विसृष्टा आशुगाः शरा रुधिरास्वादे लुब्धा लम्पटा इव दूरमधा वन्विद्रुताः । लम्पटोऽपि भोजनास्वादाय द्रुतं पलायते तद्वत् ॥

गृहीताः पाणिभिर्वीरैर्वीकोशाः खड्गराजयः ।
कान्तिजालच्छलादाजौ व्यहसन्संमदादिव ॥ १४ ॥

गृहीता इति ॥ आजौ सङ्ग्रामे वीरैः कर्तृभिः । पाणिभिर्गृहीताः । तथा विकोशाः कोशरहिताः । 'कोशोऽस्त्री कुड्मले पाले दिव्यखड्गपिधानके' इति मेदिनी । खड्गराजयः करवालपङ्क्तयः कान्तिजालच्छलाद्द्युतिसमूहकैतवेन संम दाद्वीराणामपि शत्रुविघातसाधने वयमेव यथोचितास्तथा नान्य इति प्रमोदा व्यहसन्निव जहसुरिवेत्युत्प्रेक्षा ॥

खड्गाः शोणितसंदिग्धा नृत्यन्तो वीरपाणिषु ।
रजोघने रणेऽनन्ते विद्युतां वैभवं दधुः ॥ १५ ॥

खड्गा इति ॥ शोणितसंदिग्धा रुधिरसंलिप्ताः । तथा वीरपाणिषु नृत्यन्तः खड्गाः । रजसा घने सान्द्रे । तथानन्तेऽपारे रणे विद्युतां वैभवं दधुः । तद्वच्छु शुभिर इत्यर्थः । अत्र पदार्थवृत्तिनिदर्शनालंकारः ॥

---

१ कीर्णैः. २ यथार्थमिव विह्वलम्; वेश्याया इव विह्वलम्; विशाख इव विह्वलम्. ३ सेनापतिरवच्छलात्; सेनापतिरिव च्छलात्. ४ कान्तिजालच्छलादाजौ व्यहसन्सं मदा इव; कान्त्याननच्छलादाजेर्व्यहसन्सुमदा इव; कान्त्या जनच्छलादानैर्व्यहसन्सं मदा इव. ५ रजोघनरणे. ६ विभ्रमम्.

कुन्ताश्चकाशिरे चण्डमुल्लसन्तो रणार्थिनाम्[1] ।
जिह्वाभोगा[2] यमस्येव लेलिहाना रणाङ्गणे[3] ॥ १६ ॥

कुन्ता इति ॥ रणाङ्गणे सङ्ग्रामचत्वरे चण्डं प्रचण्डं यथा तथोल्लसन्तो दीप्यमानाः कुन्ताः प्रासाः । भल्ला इति यावत् । 'कुन्तः प्रासे चण्डभावे क्षुद्रजन्तौ धुके' इति विश्वः । लेलिहानाः पुनःपुनरतिशयेन वा लिहन्ति ते लेलिहानाः । स्वादयन्त इत्यर्थः । लिहेर्यङन्ताच्छानच् । यमस्य जिह्वाभोगा रसनारूपयन्त्राः । 'आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि' इति विश्वः । चकाशिरे दिद्युतिरे ॥

प्रज्वलत्कान्तिचक्राणि चक्राणि[4] वरचक्रिणाम् ।
चण्डांशुमण्डलश्रीणि[5] रणव्योमनि बभ्रमुः ॥ १७ ॥

प्रज्वलदिति ॥ प्रज्वलत्प्रदीप्यमानं कान्तिचक्रं द्युतिमण्डलं येषां तानि । चण्डांशुमण्डलस्य सूर्यमण्डलस्य श्रीरिव श्रीः शोभा येषां तानि । वराः श्रेष्ठाश्चक्रिणो योधास्तेषां संबन्धीनि चक्राण्यायुधविशेषाः । 'चक्रो गणे चक्रवाके सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि' इति विश्वः । व्योमनि सङ्ग्रामरूपगगने बभ्रमुः । 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपयोर्विकल्पः । अथ व्याख्यानान्तरम्—वरचक्रिणां वराणां वीराणां ये चक्रिणो तेषां चक्राण्यङ्गानि रणव्योमनि बभ्रमुः । विशेषणद्वयमुभयत्रापि समानम् ॥

केचिद्धीरैः[6] प्रणादैश्च[7] वीराणामभ्युपेयुषाम् ।
निपेतुः क्षोभतो वाहादपरे[8] मुमुहुर्मदात् ॥ १८ ॥

केचिदिति ॥ अभ्युपेयुषां संमुखमागतवतां वीराणां धीरैर्गम्भीरैः प्रणादैः शब्दितैः केचिद्वीराः क्षोभतश्चित्तसंचलनाद्धेतोर्वाहादश्वान्निपेतुर्मुमूर्च्छुः । अपरे केचिन्मदाद्गर्वान्मुमुहुः । चेतनाविरहिता बभूवुरित्यर्थः ॥

कश्चिदभ्यागते वीरे जिघांसौ मुदमादधौ ।
परावृत्य गते क्षुब्धे[9] विषसादाहवप्रियः ॥ १९ ॥

कश्चिदिति ॥ कश्चिद्वीरो जिघांसौ हन्तुमिच्छौ वीरेऽभ्यागते संमुखमागते सति । मुदमादधौ प्रससाद । अथ च क्षुब्ध एतदीयप्रहारक्षुभितेऽत एव परावृत्य गते तु विषसाद खिन्नोऽभूत् । यत आहवप्रियः सङ्ग्रामप्रियः । वीराणां प्रतिद्वन्द्विसंमुखागमनमेव प्रीतिजनकं भवतीति भावः ॥

बहुभिः सह[10] युद्ध्वा वा परिभ्रम्य रणोल्बणाः ।
उद्दिश्य[11] तानुपेयुः केऽपि ये पूर्ववृता रणे ॥ २० ॥

---

१ रणार्पिताः. २ जिह्वाभागा. ३ रणक्षये; रणाजिरे. ४ वक्राणि. ५ चण्डेमण्डल. ६ घोरैः. ७ तु. ८ वाहा न. ९ क्षुब्धः; क्षुद्रे. १० सहयुध्वानः. ११ नामग्राहमुपेयुः केऽप्यग्रे पूर्ववृता वयम्.

बहुभिरिति ॥ रण उल्बणा उद्भटाः केऽपि योधा रणे सङ्ग्रामे बहुभि
सह युद्ध्वा परिभ्रम्य वा तानुद्दिश्योपेयुर्युद्धार्थमभिजग्मुः । ये पूर्वं वृता अ
कृताः । यैः सह पूर्वमयोधि पुनरपि तैरेव सह योद्धुं जग्मुरित्यर्थः ॥

अभि[1]तोऽ[2]भ्यागतान्योद्धुं वीरान्रणम[3]दोद्धतान् ।
[4]प्रत्यनन्दन्भुजादण्डरोमोद्गमभृतो भटाः ॥ २१ ॥

अभित इति ॥ भुजादण्डेषु यो रोम्णामुद्गमस्तं बिभ्रति तथाभूता
योधाः कर्तारः । रणस्य सङ्ग्रामस्य मदेनोद्धतान् । अत एव योद्धुमभितोऽ
गतान्वीरान् । आलोक्येति शेषः । प्रत्यनन्दन्नहृष्यन् ॥

शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधः[5] ।
[6]अध्याहवक्षेत्रमुप्तकीर्तिबीजाङ्कुरश्रियम् ॥ २२ ॥

शस्त्रेति ॥ शस्त्रैर्भिन्ना विदीर्णा य इभकुम्भा गजगण्डस्थलानि । 'कु
स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे । राशिभेदे द्विपाङ्गे च' इति विश्वः । ते
ऽधश्च्युतानि मौक्तिकानि कर्तॄणि । अध्याहवक्षेत्रमधिसङ्ग्रामकेदारम् । उप्त
'टुवप् बीजसंताने' इत्यतो निष्ठा । यत्कीर्तिबीजं यशोरूपमहीरुहबीजं तस्मा
स्तस्य श्रियं शोभाम् । दधुरिति शेषः ॥

वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे ।
शास्यमाना अपि त्रासाद्भेजुर्[7]धूताङ्कुशा दिशः ॥ २३ ॥

वीराणामिति ॥ रणे विषमैर्दुःसहैर्वीराणां घोषैर्विद्रुताः पलायिता वा
गजाः शास्यमानाः शिष्यमाणा अपि । यन्तृभिरिति शेषः । धूताङ्कुशा अ
निताङ्कुशाः सन्तस्त्रासाद्दिशो भेजुः । 'तॄफलभज–' इत्येत्वाभ्यासलोपौ । दि
प्रति पलायांचक्रिरे ॥

रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः ।
निममज्जुर्मिल[8]द्रक्तनिम्नगासु महागजाः ॥ २४ ॥

रण इति ॥ रणे सङ्ग्रामे बाणगणैः शत्रुशरनिकरैर्भिन्नयोधिनो वि
यन्तारः । अत एव स्वयमपि भिन्नाः अत एव भ्रमन्तो महागजा मिल
संभुजन्त्यो या रक्तस्य निम्नगा नद्यस्तासु निममज्जुः ॥

[9]अपारेऽसृक्सरित्पूरे रथेषूच्चैस्तरेष्वपि ।
रथिनोऽ[10]भिरिपुं क्रुद्धा हुंकृतैर्व्यसृजञ्शरान् ॥ २५ ॥

१ अप्यागतान्. २ योधी. ३ मदोल्बणान्; मदोद्धताः. ४ प्रत्यघ्नंस्तद्भु...
रोमोद्गमभृतो मदात्. ५ अधुः. ६ आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्करश्रियम्. ७ ...
८ निमग्नाः सुमहागजाः. ९ अपरेऽस्रसरित्पूरे. १० अभिरथिं क्रुद्धा हुं...
अभिक्रुधा क्रुद्धहुंकृतैः.

पार इति ॥ उच्चैस्तरेष्वपि रथेष्वपारेऽगाधेऽसृक्सरित्पूरे रुधिरनदीप्रवाहे सत्सु रथिनो रथारोहाः क्रुद्धाः । अत एव हुंकृतैः भीषयन्त इति । अभिरिपुं शत्रुसंमुखं शरान्व्यसृजंस्तत्यजुः ॥

खड्गनिर्लूनमूर्धानो [1]व्यापतन्तोऽपि वाजिनः ।
प्रथमं पातयामासुरसिना दारितानरीन् ॥ २६ ॥

खड्गेति ॥ खड्गनिर्लूनमूर्धानः करवालकृत्तशिरसः । अत एव वाजिनोऽश्वा-पतन्तोऽप्यसिना खड्गेन दारितान्विदीर्णान्नरीन्प्रथमं पातयामासुः । पुनः स्वयं रिति शेषः । अत्र 'दारयित्वासिना रिपून्' इति पाठः साधीयान् ॥

वीराणां शस्त्र[2]भिन्नानि शिरांसि निपतन्त्यपि ।
अधा[3]वन्दन्तदष्टोष्ठभीमान्यभिरिपुं क्रुधा ॥ २७ ॥

वीराणामिति ॥ शस्त्रभिन्नान्यत एव निपतन्त्यपि दन्तैर्दष्टाः पीडिता य अधरास्तैर्भीमानि घोराणि वीराणां शिरांसि क्रुधाभिरिपुं वैरिसंमुखमधावन् ॥

शिरांसि वरयोधानामर्धचन्द्रहृतान्यलम्[4] ।
[5]आददाना भृशं पादैः श्येना व्यानशिरे [6]नभः ॥ २८ ॥

शिरांसीति ॥ अर्धचन्द्रहृतान्यर्धचन्द्राकारबाणकर्तितानि वरयोधानां शि- । पादैराददाना गृह्णन्तः श्येनाः पक्षिविशेषा भृशमतिशयेन नभो व्यान-व्यापुः । सर्वस्मिन्नेव नभसि श्येननीतमस्तकान्येव जातानीति भावः ॥

क्रोधादभ्यापतद्दन्तिदन्ता[7]रूढाः पदातयः ।
[8]अश्वारोहा गजारोहप्राणान्प्रासैरपाहरन् ॥ २९ ॥

क्रोधादिति ॥ पदातयः पद्गतयोऽश्वारोहाश्च क्रोधाद्धेतोरभ्यापततां संमुख-च्छतां दन्तिनां दन्तेष्वारूढाः सन्तः प्रासैः कुन्तैर्गजारोहप्राणान्यन्तॄणाम-पाहरन् ॥

शस्त्रच्छिन्नगजारोहा विभ्रमन्त इतस्ततः ।
युगान्तवातचलिताः शैला इव गजा बभुः ॥ ३० ॥

शस्त्रेति ॥ शस्त्रैश्छिन्ना गजारोहा येषामत एवेतस्ततो विभ्रमन्तो गजाः न्तवातैः प्रलयप्रभञ्जनैश्चालिता उत्पातिताः शैला इव बभुः शुशुभिरे ॥

मिलितेषु मिथो योद्धुं दन्तिषु प्रसभं भटाः ।
अगृह्णन्युध्य[9]मानाश्च शस्त्रैः प्राणान्परस्परम् ॥ ३१ ॥

मिलितेष्विति ॥ योद्धुं मिलितेषु दन्तिषु । आरूढा इति शेषः । भटा मिथो-न्यं युध्यमानाः प्रसभं बलाच्छस्त्रैः कृत्वा परस्परं प्राणानगृह्णन् ॥

---

१ व्यापतन्तः. २ भिन्नानाम्. ३ दन्तदष्टोष्ठभीषणान्यरिषु. ४ अपि. ५ आदधानाः. लाः. ७ दन्तारूढेषु वाजिषु; दन्तारूढा नृवाजिषु. ८ अश्वारूढाः. ९ सहयुध्वानः.

रुषा[1] मिथो मिलद्दन्तिदन्तसंघर्षजोऽनलः ।
योधाञ्शस्त्रहृतप्राणानदहत्सह[2]सारिभिः ॥ ३२ ॥

रुषेति ॥ रुषा क्रोधेन मिथोऽन्योन्यं मिलतां दन्तिनां ये दन्तास्ते संघर्षाज्जातोऽनलोऽग्निररिभिर्वैरिभिः शस्त्रैर्हृताः प्राणा येषां तान्योधान्सहसा स्मादहत्पुप्लोष ॥

आ[3]क्षिप्ता अपि द[4]न्तीन्द्रैः कोपनैः पत्तयः प[5]रम् ।
त[6]दसूनहरन्खड्ग[7]घातैः स्वस्य पुरः प्रभोः ॥ ३३ ॥

आक्षिप्ता इति ॥ परमतिशयितं कोपनैः क्रुद्धैर्दन्तीन्द्रैराक्षिप्ता अपि आक्षेप्तुं शुण्डेन गृहीता अपीत्यर्थः । पत्तयः पादचारिणः स्वस्य प्रभोः पुरः ख घातैस्तदसून्दन्तीन्द्रप्राणानहरञ्जगृहुः ॥

उत्क्षिप्य करिभिर्दूरा[8]न्मुक्तानां योधिनां दिवि[9] ।
प्रापि जीवात्मभिर्दि[10]व्या गतिर्वा विग्रहैर्मही ॥ ३४ ॥

उत्क्षिप्येति ॥ करिभिरुत्क्षिप्योत्थाप्य दिवि दूरान्मुक्तानां योधिनां जीवा त्मभिर्जीवैः प्राणैरिति यावत् । दिव्या स्वर्गीया गतिः प्रापि । विग्रहैर्देहैर्मही प्रापि प्राप्ता । कर्मणि लुङ् ॥

खड्गैर्धवलधारालैर्निहत्य करिणां करान् ।
तैर्भु[11]वापि समं विद्वा[12]न्संतोषं न भटा ययुः ॥ ३५ ॥

खड्गैरिति ॥ भटा योधा धवलधारालैर्धवलां धारां लान्ति गृह्णन्ति तैः शुभ्रधारैरित्यर्थः । अद्वितीयैः खड्गैः कृत्वा भुवा पृथिव्या समं विद्धान्प्रहृतान्क रिणां कराञ्शुण्डादण्डान्निहत्यापि लवित्वापि संतोषं तृप्तिं न ययुः । अन्यान निहन्मीति बुद्धिमन्तो बभूवुरित्यर्थः ॥

आ[13]क्षिप्याभिदिवं नीताः पत्तयः करिभिः करैः ।
दिव्याङ्गनाभिरादातुं रक्ताभिर्द्रुतं[14]मीषिरे ॥ ३६ ॥

आक्षिप्येति ॥ करिभिः कर्तृभिः । करैर्दण्डैः कृत्वाक्षिप्योत्थाप्याभिदिवमा काशसंमुखं नीताः प्रापिताः पत्तयः पादचारिणो रक्ताभिरनुरक्ताभिर्दिव्याङ्गना भिर्द्रुतं शीघ्रमादातुं ग्रहीतुमीषिरे इष्टा बभूवुः । अहमेतान्ग्रहीष्यामि, अहमेता न्ग्रहीष्यामीति त्वरिता बभूवुः ॥

---

१ गजारूढान्. २ सह सादिभिः. ३ उत्क्षिप्ता. ४ हस्तीन्द्रैः. ५ करैः. ६ ते रिपूनहनन्; तद्रिपूनहरन्. ७ खड्गपातैः. ८ दूरम्. ९ दिवः. १० दिव्या नाकण्ठपरिग्रहः; दिव्याङ्गनैषां विग्रहैर्मही. ११ यैः. १२ वृद्धं शत्रुया तान्पत्तयोऽहरन्. १३ उत्क्षिप्य. १४ वृतमम्बरम्; व्याप्तमम्बरम्.

धन्विनस्तुरगारूढा गजारोहाञ्शरैः क्षतान् ।
प्रत्यैच्छन्मूर्च्छितान्भूयो योद्धुमाश्वसतश्चिरम् ॥ ३७ ॥

धन्विन इति ॥ तुरगारूढा धन्विनो धनुर्धारिणो योधाः शरैः क्षतान् । एव मूर्च्छितान्गजारोहान्यन्तॄन्भूयोऽपि पुनरपि योद्धुमाश्वसतो जीवत एताश्चिरं प्रत्यैच्छन् । प्रतीक्षन्ते स्मेत्यर्थः ॥

क्रुद्धस्य दन्तिनः पत्तिर्जिघृक्षोरसिना करम् ।
निर्भिद्य दन्तमुसलावारुरोह जिघृक्षया ॥ ३८ ॥

क्रुद्धस्येति ॥ पत्तिः पादचारी कश्चिद्योधः क्रुद्धस्यात एव जिघृक्षोर्गृहीतुर्दन्तिनः करं दन्तयोरधोभागम् । असिना निर्भिद्य छित्त्वा जिघृक्षया तस्यैव गृहीतुमिच्छया दन्तमुसलावारुरोहारूढवान् ॥

खड्गेन मूलतो हत्वा दन्तिनो रदनद्वयम् ।
प्रातिपक्ष्ये प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ ३९ ॥

खड्गेनेति ॥ प्रातिपक्ष्ये शत्रुसंबन्धिनि सैन्ये प्रविष्टोऽपि पदातिः पादचारी दन्तिनो गजस्य रदनद्वयं दन्तद्वयं खड्गेन कृत्वा मूलतो मूलाद्धत्वा भित्त्वा द्रुतं निश्चक्राम । शत्रुसैन्यप्रविष्टस्य मरणमेव ध्रुवम्, तदस्य विपरीतमभूदपिना द्योत्यते ॥

करेण करिणा वीरः सुगृहीतोऽपि कोपिना ।
असिनासूञ्जहाराशु तस्यैव स्वयमक्षतः ॥ ४० ॥

करेणेति ॥ कोपिना क्रुद्धेन करिणा दन्तिना कर्त्रा । करेण कृत्वा सुतरां गृहीतोऽपि वीरोऽसिना खड्गेन तस्यैव करिण एवासून्प्राणाञ्जहार हृतवान् । स्वयमक्षतोऽभूत् ॥

तुरंगी तुरगारूढं प्रासेनाहत्य वक्षसि ।
पततस्तस्य नाज्ञासीत्प्रासघातं स्वके हृदि ॥ ४१ ॥

तुरंगीति ॥ तुरंग्यश्वारोहः कश्चिद्योद्धा तुरगारूढमश्ववारं प्रासेन कुन्तेन आहत्य ताडयित्वा पततस्तस्याश्ववारस्य कर्तकं स्वक आत्मीये हृदि प्रासघातं कृतं नाज्ञासीन्न विजज्ञे । तदीयपतनजानन्दस्योद्वेलत्वादिति भावः ॥

द्विषा प्रासहृतप्राणो वाजिपृष्ठदृढासनः ।
हस्तोद्धृतमहाप्रासो भुवि जीवन्निवाभ्रमत् ॥ ४२ ॥

---

१ प्रत्यैक्षन्. २ करिणः. ३ दन्तमुसलान्; दन्तमुसलेन. ४ आमूलतः. ५ अङ्घ्रिचतुष्टयम्. ६ प्रपतिष्णोः. ७ तुरगी. ८ प्रासपातम्. ९ हस्तोद्धतमहा-प्रासः. १० भटः. ११ अभवत्.

द्विषेति ॥ द्विषा शत्रुणा प्रासेन कृत्वा हतप्राणो मारितः । तथा वा पृष्ठेऽश्वपृष्ठभागे दृढासनः प्राग्दृढासनत्वान्मृतत्वे दृढत्वं युक्तम् । तथा उद्धृतो महाप्रासो येन तथाभूतः कश्चिज्जीवन्निव भुव्यभ्रमत् । अश्वभ्रमण शाङ्कमञ्शवोऽशव इव लक्षित इति भावः ॥

तुरंगसादिनं शस्त्रहतप्राणं मतं भुवि ।
अबद्धोऽपि[1] महावाजी न[2] साश्रुनयनोऽत्यजत् ॥ ४३ ॥

तुरंगेति ॥ अबद्धोऽप्यनिरुद्धोऽपि महावाजी महानश्वः साश्रुणी सबा नयने यस्य तथाभूतः सन् । शस्त्रहतप्राणमत एव भुवि गतं तुरंगसादिनम वारं नात्यजन्न जहौ । किंतु तज्जीवनमपेक्षमाणस्तत्रैव तस्थावित्यर्थः ॥

भल्लेन[3] शितधारेण भिन्नोऽपि रिपुणाश्वगः ।
नामूर्च्छत्कोपतो हन्तुमियेष प्रपतन्नपि[4] ॥ ४४ ॥

भल्लेनेति ॥ रिपुणा कर्त्रा । शितधारेण तीक्ष्णधारेण भल्लेन भिन्नो विदारितोऽप्यश्वगस्तुरंगगामी कोपतः क्रोधवशान्नामूर्च्छन्न मुह्यति स्म । प्रपतन्नप्यश्वादधः स्रंसमानोऽपि रिपुं हन्तुमियेषैच्छत् ॥

मिथः प्रासाहतौ[5] वाजिच्युतौ भूमिगतौ रुषा ।
शस्त्र्या[6] युयुधतुः कौचित्केशाकेशि भुजाभुजि ॥ ४५ ॥

मिथ इति ॥ मिथोऽन्योन्यं प्रासेनाहतौ । अत एव वाजिभ्यां सका च्युतावधः पतितौ । अत एव भूमिं गतौ कौचिद्योधौ रुषा युतौ सन्तौ शस् खड्गपुत्र्या युयुधतुर्युयुधाते । अथ च केशाकेशि केशेषु केशेषु गृहीत्वा प्र यद्युद्धम्, भुजाभ्यां भुजाभ्यां प्रहृत्य प्रवृत्तं यद्युद्धं तदभूत् । 'तत्र तेनेदमि सरूपे' इति सूत्रेण समासः ॥

रथिनो रथिभिर्बाणैर्हतप्राणा दृढासनाः ।
क्षतकार्मुकसंधानाः[7] सप्राणा इव मेनिरे[8] ॥ ४६ ॥

रथिन इति ॥ रथिभी रथारोहैः कर्तृभिः । बाणैः कृत्वा हतप्रा स्तथा दृढासनाः क्षतं नष्टं कार्मुकसंधानं धनुःसज्जीकरणं येषामेवंभू रथिनो रथारोहाः सप्राणा इव जीवन्त इव मेनिरे मताः । कर्मणि लि द्रष्टृभिरिति शेषः ॥

न रथी रथिनं भूयः प्राहरच्छस्त्रमूर्च्छितम् ।
प्रत्याश्वसन्मतन्[9]विच्छन्नातिष्ठद्युधि[10] लोभतः ॥ ४७ ॥

---

१ अन्त्राढ्यः; अन्त्राद्यः. २ नात्रस्तनयनः. ३ खड्गेन. ४ च पतन्; निपत ५ प्रासहतौ; प्रहारतः. ६ शस्त्रैः. ७ कृत. ८ रेजिरे. ९ मत्वैनम्. १० ना द्युद्धमलोभतः.

